रत्नतूलिका

सम्पन्नविवेकवैराग्यसाधन इति विचारप्रवृत्तिहेतुसम्पत्तिरुक्ता। इदं च प्रागेव स्वाध्यायाध्ययनात्प्रव्रजितस्य यावदुपयुक्तवेदानुवचनमात्रेण साक्षात्कारोद्देशेन विचारे प्रवृत्तिर्न संभवति ; एकदेशाध्ययनस्याशास्त्रीयतया अविधिगृहीतवेदस्यापरोक्षज्ञानाहेतुत्वादिति शङ्कानिरासाय। तत्र च ज्ञानजनने अध्ययनसंस्कारस्योपयोगो नास्तीत्यादिवक्ष्यमाण एव परिहारोऽनुसन्धेयः। अत्र चातीतत्वमनेकत्वं च भवपरम्पराविशेषणम्। तस्या अतीतत्वं च वर्तमानभवाघटितत्वम्, परम्पराघटकमध्ये कस्यचिद्वर्तमानत्वे तस्या अतीतत्वाभावात्। इदं च विशेषणमतीतजन्मानुष्ठितानामपि कर्मणामीश्वरप्रसादचित्तशुद्धिविवेकजिज्ञासादिप्रणाड्या ज्ञानोपायत्वान्न तेषां ज्ञानेन समुच्चित्यानुष्ठानशङ्केति द्योतनाय। तेन वर्तमानभवानुष्ठितानां तेषां ज्ञानोपयोगो नास्तीति न भ्रमितव्यम्। अनेकत्वं च परम्पराणां ब्राह्मणभवपरम्परा क्षत्रियभवपरम्परेत्यादिरूपेणानेकविधत्वम्। तच्च—

"ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्च पृथिवीपते।
स्वधर्म[1]निरतो विष्णुमाराधयति नान्यथा"॥

इति स्मृतेस्तत्तद्वर्णधर्माणां भगवदाराधनत्वं द्योतयितुम्। अथ वा परम्पराणामसङ्ख्यत्वलक्षणानेकत्वप्रतिपादनद्वारा तदार्जितसुकृतानामसङ्ख्यत्वमुच्यते। तेन यदि शास्त्रान्तरपर्यालोचनां विना सुकृतवशादेव विवेकादिः स्यात्, तदा पुरुषमात्रस्य कानिचित्सुकृतानि सन्त्येवेति सर्वेषामेव विवेकादिः किं न स्यादिति शङ्का व्यावर्तते। असङ्ख्येयसुकृतशालिनः पुरुषधौरेयस्य विरलत्वादित्यभिप्रायः। [2]समर्जितत्वं सम्यगनुष्ठितत्वम्। तत्र सम्यक्त्वं च—

---

[1] तत्परो—क, कुं. [2] समार्जितत्वं—क. कुं.

वर्जितभगवदनुग्रहासादितसत्त्वप्रसादतया सम्पन्नविवेकवैराग्या-

रत्नतूलिका

"कर्ता क्रतूनां स स इज्यते क्रतुः स एव तत्कर्मफलं च तस्य यत्।
स्रुगादि यत्साधनमप्यशेषं हरेर्न किंचिद्व्यतिरिक्तमस्ति वै॥"

इत्याद्युक्तप्रकारेण कर्तृकरणकर्मादिषु भगवदैकात्म्यभावनापूर्वकत्वं फलाभिसन्धि विनानुष्ठितत्वं वा। तादृशसुकृतानां सम्पत् सामग्र्यम्, तेनावर्जितः। न त्वेकैकसुकृतावर्जितः। तेनातिप्रीतिः परमेश्वरस्य व्यज्यते। सुकृतानां परमेश्वरावर्जकत्वं च विष्णुपुराणादौ दर्शितम्। यथा—

"वर्णाश्रमाचारवता पुरुषेण परः पुमान्।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः॥" इति।

तथा कौर्मे—

"[1]सवर्णाश्रमधर्मेण पुंसा यन्मधुसूदनः।
अकामहतभावेन समाराध्यो न चान्यथा॥" इति॥

भगवदनुग्रहासादितेति। "यमेवैष वृणुते तेन लभ्यः", "तपःप्रभावाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान्" इत्यादिश्रुत्या, "मत्तः स्मृतिर्ज्ञानमपोहनं च" इत्यादिस्मृत्या च भगवदनुग्रहस्य ज्ञानसाधनत्वोक्तेरिति भावः। सत्त्वस्य अन्तःकरणस्य प्रसादः रजस्तमसोर्न्यग्भावेन सत्त्वविवृद्धिः।

"सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च॥"

इति गीतायां रजस्तमसोस्तत्त्वज्ञानप्रतिबन्धकत्वस्य सत्त्वे तादृशज्ञानहेतुत्वस्य चोक्तत्वादिति भावः। सम्पन्नेति। अन्योन्यसाध्यसाधन-

---

[1] स्ववर्णाश्रम—क. कुं.

**दिसाधनो मात्रयापि दुःखानुषङ्गदविष्ठां पुरुषार्थकाष्ठामभिलषं-स्तदुपायं पर्येषमाणो यद्यधीतसाङ्गस्वाध्यायः स्यात्, तत एव**

रत्नतूलिका

भावापन्नत्वमेव तेषां सम्पन्नत्वम्; तादृशानामेव ज्ञानोपायप्रवृत्तिहेतुत्वात्। तेन जातिर्नित्या, व्यक्तिरनित्येत्येवमादिविवेकस्य, रोषादिनिमित्तवैराग्यस्य, इन्द्रियदौर्बल्यनिमित्तशमादेः, अनाघ्रातदुःखगन्धं नित्यं निरतिशयं सुखं मे भूयादिति सर्वदा सर्वप्राणिनां [1] नित्यसिद्धाया मुमुक्षायाश्च व्यावृत्तिरिति भावः। **मात्रयापि** लेशेन **दविष्ठां** दूरतराम्। तेन धर्मार्थकामानां फलतः साधनतश्च दुःखानुषक्तानामुपासनासाध्याया अवान्तरमुक्तेश्च व्यावृत्तिः। ब्रह्मलोकेऽपि तारतम्य[2]प्रयुक्तस्य पारतन्त्र्यप्रयुक्तस्य च दुःखानुषङ्गस्य संभवादित्यभिप्रायः। सविलासाविद्यानिवृत्त्या आत्मस्वरूपनिरतिशयानन्दाविर्भावे तु न दुःखानुषङ्गप्रसङ्गः। अत एव **पुरुषार्थकाष्ठामिति** समाप्तिवचनः काष्ठाशब्दः प्रयुक्तः। धर्माद्यपेक्षयातिशयितस्य मोक्षस्यैव तदपेक्षयातिशयितस्य पुरुषार्थान्तरस्याभावात् मानुषादारभ्य हैरण्यगर्भान्तस्य वैषयिकानन्दस्य स्वरूपानन्दमहाम्बुधि[3]कणिकायमानस्य तन्निरवशेषाभिव्यक्तौ सत्यामनपेक्षणीयत्वात्। "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति", 'सोऽश्नुते सर्वान् कामान्सह। ब्रह्मणा विपश्चितेति" इत्यादिश्रुतेरिति भावः। **यद्यधीतेति**। "स्वाध्यायोऽध्येतव्यः", "वेदाङ्गानि समस्तानि कृष्णपक्षे तु संपठेत", "ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येतव्यः" इत्यादिभिः साङ्गस्य तस्याध्यापनविधानादिति भावः। **तत एवेति**।

---

[1] निसर्ग—च. [2] प्रसक्तस्य—घ. [3] कर्णिका—क.

तदुपायमात्मतत्त्वज्ञानमधिगम्य जिज्ञासते। अथ प्रागेव स्वाध्यायाध्ययनात्प्रव्रजितः स्यात्, ततो यावदुपयुक्तवेदानुवचनादपि तदधिगमे तस्य जिज्ञासा न विरुध्यते। ननु "सर्वेषामुपनयनप्रभृति समान आचार्यकुले वासः, बुद्ध्वा कर्माणि यत्कामयेत, तदारभेत" इति स्मरणात् उपकुर्वाणस्य सतो

रत्नतूलिका

स्वाध्यायादेवेत्यर्थः। तदुपायमिति। "ब्रह्मविदाप्नोति परम्", "तरति शोकमात्मवित्", "निचाय्य तं मृत्युमुखात्प्रमुच्यते" इत्यादावात्मज्ञानस्य मोक्षोपायत्वावगमादिति भावः। ततो यावदुपयुक्तेति। सन्न्यासानन्तरमित्यर्थः। वेदानुवचनादिति। अनूक्तवेदादित्यर्थः। अध्ययनात्पूर्वं प्रव्रज्या, ततो यावदुपयुक्तवेदानुवचनमित्युक्तम्। तत्राद्यमाक्षिपति—ननु सर्वेषामिति। स्मरणादिति। आपस्तम्बस्येति शेषः। सर्वेषामाश्रमाणामुपनयनं, आचार्यकुले वासः, अष्टाचत्वारिंशदादीनामन्यतमकालश्च समान इति सर्वेषामिति स्मृत्यर्थः। प्रत्याश्रमं यानि कर्माणि विहितानि तानि बुद्ध्वा गृहस्थस्यैतानि कर्तव्यानि, ब्रह्मचारिणश्चैतानीत्यादिप्रकारेणाचार्यकुलादुपश्रुत्य यद्गार्हस्थ्यादीनामन्यतमं कामयेत तदारभेत तमाश्रमं प्रतिपद्येतेति बुद्ध्वा कर्माणीति स्मृत्यर्थः। उपकुर्वाणस्येति। यः सर्वाश्रमसाधारण्येनाचार्यकुले स्थित्वा विद्यां स्वीकरोति स उपकुर्वाण उच्यते, तस्येत्यर्थः। अत्र सत इति विशेषणं तस्य विद्याग्रहणार्थत्वद्योतनाय। सर्वेषामित्यादिस्मृतेः (श्रुतिलक्षणं प्रायश्चित्तमुभयत्र कृत्स्नं तन्त्रमपि) [1] पत्नीसंयाज इत्यादिस्मृतेरिव किं न्यायमूलत्वं, उताष्टकादिस्मृतेरिव श्रुतिमूलत्वमिति

[1] पत्नीसंयाजाः—कुं.

विद्याग्रहणानन्तरमेव प्रव्रज्या युक्ता, न प्रागिति चेन्न; विद्याग्रहणस्यातदधिकारनिमित्तत्वात्। "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति वैराग्यमात्रस्यैव तदधिकारहेतुत्वश्रवणात्।

"यदा मनसि वैराग्यं जायते सर्ववस्तुषु।
तदैव सन्न्यसेद्विद्वानन्यथा पतितो भवेत्॥"

रत्नतूलिका

विकल्प्य, नाद्य इत्याह—न; विद्याग्रहणस्येति। विद्याशब्दोऽत्र तद्धेतुस्वाध्यायपरः। अतदधिकारनिमित्तत्वादिति। सन्न्यासाधिकारनिमित्तभिन्नत्वादित्यर्थः। तथा च विद्याग्रहणस्य सन्न्यासे दृष्टोपकाराभावान्न न्यायमूलत्वं स्मृतेरिति भावः॥

द्वितीय आह—यदहरेवेति। हेतुत्वश्रवणादिति। तथा च श्रुतिविरोधे स्मृतिप्रतीतं विद्याग्रहणानन्तर्यं सन्न्यासाश्रमातिरिक्तेषु सङ्कोचनीयम्। सर्वशब्दोऽपि "विश्वजिति सर्वस्वं ददाति" इत्यत्रत्यसर्वशब्द इव यत्परत्वे बाधकं नास्ति तत्परतया सङ्कोचनीयः। लक्षणकथनाय "चत्वार आश्रमाः" इति प्रक्रम्य गार्हस्थ्यादिभिः सहपठितस्य सन्न्यासस्य सर्वशब्देन परामर्शपूर्वकं विद्याग्रहणानन्तर्यान्वये बाधकाभावादिति भावः। ननु श्रुतिस्मृत्योरविरोधेन कर्मावबोधानन्तरं सति वैराग्ये सन्न्यास इति समुच्चयसंभवान्न स्मृतेः सङ्कोच इत्यत उक्तं–वैराग्यमात्रस्येति॥

अयमाशयः—यदहरिति श्रुतिर्न वैराग्यस्य सन्न्यासाधिकारहेतुत्वप्रतिपादनपरा; सर्वत्यागात्मकसन्न्यासे वैराग्यहेतुत्वस्य [1] सामर्थ्यलभ्यत्वात्, किं तु सत्यपि वैराग्ये आपाततो हेतुतया स्मृतिप्रतीत-

[1] स्मृत्या सामर्थ्य–कुं.

**इति स्मरणाच्च। न च विवेकवैराग्यादेर्विद्याग्रहणानन्तर्यनियमहेतुरस्ति; तस्य सत्त्वशुद्ध्यधीनतया कालनियमायोगात्। न चाश्रमिणामेवैष सत्येव वैराग्ये पारिव्राज्यनियम इति शङ्क्यम्;**

## रत्नतूलिका

विद्याग्रहणाद्यानन्तर्याभावात् सन्न्यासे न प्रवर्तेतेति इतरस्य हेतुत्वनिवृत्तिपरा, सति वैराग्ये विद्याग्रहणं न प्रतीक्षणीयम्; तस्य तत्राहेतुत्वादिति। एवं च दृष्टसामर्थ्येन वैराग्येणैव सन्न्यासे प्रवृत्त्युपपत्तौ अदृष्टसामर्थ्यविद्याग्रहणादेर्हेतुत्वं न कल्पितं भवतीति। अथ वा सत्यपि वैराग्ये यावज्जीवमनुष्ठेयतया विहितकर्मत्यागे प्रत्यवायभयात् सन्न्यासे न प्रवर्तेत। ततश्च यथा "यावज्जीवमग्निहोत्रं जुहोति" इत्यादिश्रुतस्य जीवनरूपनिमित्तस्य "सायं जुहोति, प्रातर्जुहोति" इत्यादिकालविधिवशात् तत्कालीनजीवनपरतया सङ्कोचस्तथात्रापि सति वैराग्ये कर्माननुष्ठानेऽपि न दोष इति कल्प्यत इति भावः॥

ननु विद्याग्रहणस्याहत्य सन्न्यासाधिकारहेतुत्वाभावेऽपि तद्धेतुवैराग्यहेतुत्वात सन्न्यासस्य तदानन्तर्यं प्राप्तमित्याशङ्क्य निषेधति—**न च विवेकेति।** ननु यदहरेवेति जाबालश्रुतिर्नेतरस्याधिकारहेतुत्वनिवृत्तिपरा, न वा कर्माधिकारसङ्कोचपरा, किं तु "ब्रह्मचर्यं समाप्य गृही भवेत् गृही भूत्वा वनी भवेत्" इत्यादिनाऽऽश्रमाणां क्रममभिधाय "यदि वेतरथा" इत्यादिना आश्रमक्रमानियमपक्षमभिधाय "अथ पुनरव्रती वा व्रती वा" इत्यादिना तेषामेवाश्रमिणां तत्तदवस्थाविशेषेष्वनियमेन पारमहंस्यप्राप्तिमुक्त्वा, तेषामेव सन्न्यासप्राप्तौ कालविशेषकृतनियमोऽपि नास्तीति बोधयति। ततश्च गृहीतविद्यानामाश्रमिणामेव वैराग्ये सति सन्न्यास इतरथा नेति नियमान्न विद्याग्रहणात्पूर्वं स इत्याशङ्क्य निषेधति—**न चाश्रमिणामिति।** अत्र "ब्रह्मचर्यं

आचार्यकुलादेः प्रव्रज्याधिकाराहेतुत्वेन प्रत्युक्तत्वात्। "ब्रह्मचर्यं समाप्य गृही भवेत्" इत्यादिश्रवणस्य च कषायपाकसंभवाभिप्रायत्वात्।

"कषायं पाचयित्वा तु श्रेणीस्थानेषु च त्रिषु।
प्रव्रजेत्तु परं स्थानं पारिव्राज्यमनुत्तमम्" ॥

इति स्मरणात्। प्राचीनसुकृतैरेव परिपक्वकषायस्य प्रथममेव विवेकवैराग्यादिसमुदये बाधकाभावात्। अन्यथा "सोपनयनादूर्ध्वं स तानि प्राग्वा त्यजेत्" इति प्रागुपनयनादपि

रत्नतूलिका

समाप्य" इत्यादिना पूर्वपूर्वाश्रमं कृत्स्नमनुष्ठाय समाप्य उत्तरोत्तराश्रमप्राप्तिरित्याश्रमप्राप्तौ क्रममभिधाय, "यदि वेतरथा ब्रह्मचर्यादेव" इत्यादिना असमाप्यैव ब्रह्मचर्यादिकमन्तराले वैराग्ये सति सन्न्यासमभिधाय, "अथ पुनः" इत्यादिनाऽऽश्रममात्रस्यानपेक्ष्यत्वमुच्यते। अथेति प्रकृतब्रह्मचर्यादिविच्छेदात् व्रती वाव्रती वा ब्रह्मचार्यब्रह्मचारी वा स्नातकः प्रसिद्धः, अस्नातकः उपात्तविद्योऽकृतस्नातकव्रतः, उत्सन्नाग्निर्विधुरः, अनग्निकः सत्सु दारेष्वस्वीकृताग्निः, वाशब्दोऽनास्थायाम्। यादृशतादृशस्यापि वैराग्ये सति सन्न्यास इति प्रतिपादनपरेऽस्मिन्सन्दर्भे आश्रमिणामेवैष नियम इत्याचार्यकुलादेर्हेतुत्वोपक्षेपस्तस्य सामर्थ्यं दृष्ट्वेति वाच्यम्, तच्च दूषितमित्याह—आचार्यकुलादेरिति। किमर्थं तर्हि श्रुतौ क्रमवचनमित्यत आह—ब्रह्मचर्यं समाप्येति। कषायो रागादिः, पाको नाशः। अन्यथेति। कषायपाकाभिप्रायत्वाभाव इत्यर्थः। सोपनयनादूर्ध्वमिति। आरुणिके "खलु यो वेदार्थं विद्वान्" इति पूर्ववाक्ये यच्छब्देन प्रकृतो वेदार्थवित्तच्छब्देनोच्यते।

### रत्नतूलिका

खलु प्रसिद्धम् । वेदार्थं "केन भगवन् कर्माण्यशेषतो विसृजानि" इति प्रश्नपूर्वकं वेदप्रतिपाद्यं त्यागं यो विद्वान् स तानीति तच्छब्दो बुद्धिस्थवाची, [1]तद्वदिति तत्प्रकारकं तस्यापत्यमित्यादिष्विव । तच्च "तव पुत्रान् भ्रातॄन् बन्ध्वादीन् शिखां यज्ञोपवीतं योगं सूत्रं स्वाध्यायं च" इत्यारभ्य यद्यत्त्याज्यत्वेनोक्तं यच्च वक्ष्यमाणं पितृपुत्रादि तत्सर्वमिति तद्वाची । वक्ष्यमाणस्यापि ज्योतिर्विशेषस्य तच्छब्देन परामर्शो "न तत्र सूर्यो भाति" इत्यादौ दृष्टः, न तु पूर्ववाक्ये "कामक्रोधलोभमोहदम्भदर्पासूयाममत्वाहङ्कारानृतादीनपि त्यजेत्" इत्युक्तकामादिमात्रवाची ; सन्निधानस्य "वर्षासु ध्रुवशीलः" इत्यादि-विजातीयेन विच्छेदात् । यद्यप्यत्र त्यजेदिति श्रवणात्तेनैव शब्देन त्याज्यत्वेन श्रुत्युपात्तकामक्रोधादीनामेव तानीत्यनेन परामर्शो युक्तः, तथाप्युत्तरवाक्ये "पितरं पुत्रमग्न्युपवीतं कर्म कलत्रं चान्यदपीह" इति चापिशब्दाभ्यामनुकृष्टेन त्यजेदिति पदेनान्वयिनामपि तेन परामर्शा-त्तेषामपि प्रागुपनयनात्त्यागः सिद्धः । यथा भोजनात्प्रागूर्ध्वं वा परिधा-नीयं त्यजेदुपवीतमपीत्युक्ते उपवीतत्यागोऽपि प्रागूर्ध्वं वेति गम्यते तद्वत् । ततश्च सः उपनयनादूर्ध्वं तानि त्यजेदित्यपकृष्टक्रियाकर्म-वाचकपदघटितेन "स प्राग्वा त्यजेत्" इति वाक्येन च सन्न्यासे कालविधानादुपनयनात्प्रागपि सन्न्यासो विहितः । तद्विधिविरोध इत्यर्थः । न च "ब्रह्मचर्यादेव प्रव्रजेत्" इति ब्रह्मचर्यस्यावधित्वेन जाबालोपनिषदि श्रवणादनुपनीतस्यानधिकार इति वाच्यम् ; तस्य ब्रह्मचर्यादेव न तु समाप्येति "ब्रह्मचर्यं समाप्य" इति पूर्ववाक्यश्रुत-समाप्तिनिरासार्थतया अनुपनीतस्याधिकारनिराकरणार्थत्वाभावादिति ॥

---

[1] तद्वति—कुं.

**सन्न्यासविधिविरोधापातात्। यद्येवमविधिगृहीतो वेदान्तो जिज्ञासितोऽपि न फलवदर्थावबोधमाधातुमर्हति; वेदाध्ययनसंस्काराभावात्, विशिष्टानुपूर्वीकसकलस्वाध्यायविषयत्वादध्ययनविधेः, एकदेशाध्ययनस्याशास्त्रीयत्वात्, उपनीताधिकारिहीनत्वाच्च। स्वाध्यायो हि शक्यसर्वफलार्थतयाध्ययनेन**

## रत्नतूलिका

ननूपनयनात्पूर्वं प्रव्रजितस्य विचारविषयो वेदान्तः किमविधिगृहीतः विधिगृहीतो वा। द्वितीयेऽपि "स्वाध्यायोऽध्येतव्यः" इति तद्विधिः, उतान्य इति विकल्प्याद्यमपशूद्रनयविरोधेन दूषयति—**यद्येवमिति। संस्काराभावादिति।** अन्यथा शूद्रस्याप्यविधिगृहीतात्तस्मात् ज्ञानोदयप्रसङ्ग इति भावः। द्वितीये प्रथमं निरस्यति—**विशिष्टानुपूर्वीकेति।** द्वितीयं निरस्यति—**एकदेशाध्ययनस्येति।** "उपनिषदमावर्तयेत्" इत्यस्य प्रतिप्रसवत्वादिति भावः। द्वितीयविकल्पे आद्यपक्षे दूषणान्तरमाह—**उपनीतेति।** यद्वा द्वितीयविकल्पे पक्षद्वयसाधारणं दोषमाह—**उपनीतेति।** उपनयनस्य प्रयोजनापेक्षायामाचार्यासत्तिसम्पादकत्वेनाध्ययनाधिकारहेतुत्वं कल्प्यते यथा तथा अध्ययनविध्यन्तरस्यापि अधिकार्यपेक्षायां स एवोपनीतोऽधिकारी कल्प्यते। ततश्चानुपनीतेनाधिकारिणा कृताध्ययनस्य न स्वाध्यायसंस्काराधायकत्वमिति भावः। ननु कर्मज्ञाने स्वाध्यायजन्ये अध्ययनसंस्कारस्योपयोगेऽपि न ब्रह्मज्ञाने तदपेक्षेत्यत आह—**स्वाध्यायो हीति।** यज्ज्ञानमदृष्टद्वारा फलपर्यवसायि तत्र सर्वत्राप्यध्ययनजन्यसंस्कारस्योपयोगो वाच्यः, तथा च कर्मज्ञानवदुपासनाहेतुब्रह्मज्ञानस्याप्यदृष्टप्रणाड्या फलपर्यवसानाविशेषात् तत्रापि तदुपयोगो वक्तव्यः, तदाह—

संस्क्रियते, विशेषाभावात् । अन्यथा लोकावगतकारणादेवाक्षरावाप्तौ तद्विधिवैयर्थ्यप्रसङ्गादिति चेन्मैवम् ; न हि विचारितादपि वेदान्तादविधिगृहीतत्वापराधेनार्थतत्त्वज्ञानमेव न जायेत ; लोकवेदसाधारणसामग्रीकशब्दनिष्पाद्यज्ञानस्वरूपे संस्कारानुपयोगात् । न खल्वाहवनीयादिसंस्कारः समिदादिदाहेऽप्युपयुज्यते । नापि जनितस्य विज्ञानस्य वैफल्यं क्षमम्रुत्प्रेक्षितुम् ; अविद्यादिनिवृत्त्यवसानदृष्टफलस्यानुभाविकत्वात् । न च शूद्रादेरिव

## रत्नतूलिका

विशेषाभावादिति । विशेषाभावेऽपि यद्येकत्रोपयोगो न स्यात्तर्हि तन्न्यायेनेतरत्रापि स न स्यादिति विधिवैयर्थ्यं स्यादिति बाधकमाह—अन्यथेति । लोकावगतेति । लिखितपाठादिरूपादित्यर्थः । अक्षरावाप्ताविति दृष्टप्रयोजनमात्रावाप्तेरुपलक्षणम् । अविधिगृहीतस्यैव वेदान्तस्य विचारविषयत्वमिति पक्षमभिप्रेत्य परिहरति—मैवमिति । किमध्ययनसंस्काराभावेनार्थज्ञानमेव नोदेति, उत जातं ज्ञानं फलाय न भवतीति विकल्प्य दृष्टफलत्वादुभयमप्यनुपपन्नमित्याह—न हीति । अविद्यादिनिवृत्त्यवसानेति । अविद्यादिनिवृत्तिरवसानं यस्य मोक्षलक्षणफलस्येत्यर्थः । न तु तदनन्तरमप्यदृष्टद्वारा किंचिज्ज्ञानसाध्यमस्ति, यत्रोपयोगः संस्कारस्याशङ्क्येत । मोक्षस्य चोपासनासाध्यत्वस्य निरसिष्यमाणत्वादिति भावः । अविधिगृहीतवेदान्तात्फलवज्ज्ञानोत्पत्तौ शूद्रस्यापि तत्प्रसङ्ग इति यत् तत्राह—न च शूद्रादेरिवेति । "पद्यु वा एतच्छमशानं यच्छूद्रः", "श्मशानवच्छूद्रपतितौ" इत्यादिना श्मशानतुल्यतया शूद्रस्य तत्समीपे अध्ययननिषेधात्, "श्रवणे त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदः धारणे शरीरभेदः" इत्यादिदण्डश्रवणेन च निषेधावग-

**स्वाध्यायग्रहणं प्रव्रजितस्य वेदान्तग्रहणं दुरितायेति प्रमाणमस्ति, येन तद्दुरितमलीमसे चित्तसत्त्वे ज्ञानमेव नोदीयेत। "नाध्येतव्यं न वक्तव्यं" इति निषेधस्य च वैधानुपयुक्ताध्ययनप्रवचनविषयत्वात् ॥**

## रत्नतूलिका

मादिति भावः। नन्वस्यापि स्वाध्यायग्रहणं दुरिताय, "न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनात्" इत्यनुपनीतस्य वेदाभिव्याहारणनिषेधात् "नाध्येतव्यं न वक्तव्यं" इत्याहत्य प्रव्रजितस्याध्ययनप्रवचनयोर्निषेधाच्चेत्याशङ्क्याद्य आह—**प्रव्रजितस्येति**। स्वधानिनयनपर्युदासेन ब्रह्माभिव्याहारणनिषेधो यस्य स्वधानिनयने अधिकारस्तस्यैव भवतीति न प्रव्रजितस्य तदनधिकारिणस्तन्निषेध इति भावः। द्वितीय आह—**नाध्येतव्यमिति**। अध्ययनमेव निषिध्यते, न तु लिखितपाठादिना स्वाध्यायग्रहणमपि, तदप्यनुपयुक्तकर्मकाण्डांशस्यैव; सन्न्यासिनमधिकृत्य वेदान्तश्रवणविधानात्, उपनयनात्प्रागपि सन्न्यासविधानेन पूर्वाधीतस्यैव विचारविषयत्वमिति वक्तुमशक्यत्वाच्च। एवं प्रवचनेऽपीति भावः ॥

न चैवं श्रवणविधिवैयर्थ्यम्, तन्नियमादृष्टस्य फले उपयोगाभावादिति वाच्यम्; प्रव्रजितमधिकृत्य तद्विधानबलात्तस्य ज्ञानप्रतिबन्धकदुरितनिवर्तकत्वकल्पनात्। न चैवमध्ययनविधिस्तमधिकृत्य प्रवृत्तः, येन तन्नियमस्यापि तत्प्रतिबन्धककतिपयदुरितनिवर्तकत्वं कल्प्येत, किं तूपनीतमिति वैषम्यमिति भावः ॥

एवं दृष्टफले ज्ञानादौ नाध्ययनसंस्कारापेक्षा, अतोऽविधिगृहीतादपि वेदान्तात्फलवदर्थज्ञानं संभवतीत्युक्तम्। इदानीं तत्रापि संस्कारोऽपेक्षित इति वदन्तं श्रद्धाजडं प्रति प्रव्रजिताधिकारिको

### सन्न्यासिनः उपनिषदध्ययनविधिविवेकः

यद्वा "सर्वेषु वेदेष्वारणमावर्तयेदुपनिषदमावर्तयेत्" इति प्रव्रजितस्योपनिषदध्ययनं पृथग्विधिविधेयमस्तु ॥

न च [1]परिव्रजतः स्वाध्यायविधिप्रापितवेदत्यागे विहिते प्रतिप्रसवोऽयमुपनिषदध्ययनस्य, न विधिः, आवर्तयेदिति गृहीतस्य गुणनाभिधानादिति वाच्यम्; सर्वेषु वेदेष्विति विशेषणात्। न च स्वाध्यायविधिः स्वपदोपादाने

### रत्नतूलिका

वेदान्तमात्रविषयकः स्वाध्यायाध्ययनविधिव्यावृत्तोऽध्ययनविधिरारुणिकेऽस्तीत्याह—यद्वेति। सर्वस्य विधिस्वरसत्वादावर्तयेदित्यस्य विधित्वे सिद्धे [2]लक्षणयाध्ययनाविधौ सौर्यवाक्ये निर्वापस्येव प्राप्तावृत्तेरनुवाद इति भावः॥

प्रतिप्रसवोऽयमिति। "वेदानिमं च लोकममुं च परित्यज्यात्मानमन्विच्छेत्" इत्यादिना विहितपरित्यागस्योपनिषदतिरिक्तविषये सङ्कोच इत्यर्थः। किं स्वाध्यायविधिप्रापितवेदं प्रति प्रतिप्रसवः, उत स्ववेदमधीत्य बुद्धिवैशद्येन सर्ववेदा[3]ध्ययनं प्रति, अथ वोभयौदासीन्येन [4]वेदाध्ययनमात्रं प्रतीति विकल्प्याद्य आह—न च स्वाध्यायविधिरिति। स्वाध्यायस्याध्ययनं प्रत्युद्देश्यत्वेऽपि अर्थावबोधं प्रत्युपादेयतया स्वत्वविशेषणं विवक्षितम्। "अध्वर्युं वृणीते, चमसाध्वर्यून्वृणीते" इत्यादावेकत्वादिवदिति भावः। वस्तुतस्तु अध्ययनविधेः पुरुषार्थतया स्वाध्यायेनाधीयीतेति विपरिणामात्सक्तूना-

---

[1] प्रव्रजतः—ङ. [2] प्राप्तावृत्तेर्विधानानुपपत्तेर्लक्षणयाध्ययनविधित्वमस्येति भावः—क. लक्षणाध्ययनविधौ—घ. [3] ध्यायिनं—घ. च. कुं. [4] वेदाध्यायिमात्रं घ. च. कुं.

सति सर्ववेदविषयो भवितुमर्हति। न चानधीतानामावृत्तिः संभवति। न च [1]सर्ववेदाध्यायिविषयमिदं सर्वेषु वेदेष्विति, "वेदानधीत्य वेदौ वा" इत्यादि स्मरणादिति वाच्यम्; इतरस्योपनिषदावृत्तिप्रतिप्रसवाभावप्रसङ्गात्। "उपनिषदमावर्तयेद्यदि कश्चित्सर्ववेदाध्यायी स तु सर्वेषु वेदेषु" इति विभागकल्पनागौरवाच्च। न च सर्वेषु वेदेषु यथास्वमुपनिषदमावर्तयेदित्यर्थः; विशेषणवैयर्थ्यादेव। "उपनिषदमावर्तयेत्"

## रत्नतूलिका

मिवोपादेयत्वं स्वाध्यायस्येति हृदयम्। द्वितीयं निरस्यति—न च सर्वेति। विभागेति। आवृत्तिलक्षणवाक्यभेदकल्पनागौरवादित्यर्थः। तृतीयं निरस्यति—न च सर्वेषु वेदेष्विति। यथा स्वमिति। एकवेदाध्याय्येकां सर्वाध्यायी तु सर्वामित्यर्थः। "उपनिषदमधीयीत" इत्यारणाध्ययनांशे न विवक्षा, प्रवर्ग्याद्यध्ययने दृष्टप्रयोजनाभावेन केवलादृष्टार्थत्वप्रसङ्गात्, प्रतिप्रसवपक्षेऽप्येवं वक्तव्यत्वात्। न चारणमुपनिषदमित्यारणगतोपनिषदावृत्तिलाभाय विशेष्यत इति वाच्यम्; "आरणमावर्तयेदुपनिषदमावर्तयेत्" इति भिन्नवाक्यस्थयोर्विशेषणविशेष्यभावानुपपत्तेः, ईशावास्यादेः संहितागतायाः प्रतिप्रसवाभावप्रसङ्गाच्च। तस्मादारणवदवश्यावर्तनीयतया *(औचित्येनोपनिषदावृत्तिस्तुतिः "आरणमावर्तयेत्" इत्यंश इति भावः॥

यद्वा "आरणमावर्तयेत्" इति प्रतिप्रसवविधिना आरणेतरनिवृत्तिः "उपनिषदमावर्तयेत्" इत्यनेनारणगतप्रवर्ग्यादिभागस्यापि

---

* (औचित्येनोपनिषदावृत्तिस्तुतिरारणमावर्तयेदित्यंश इति वक्तव्यम्। तथा विधिपक्षेऽप्युपनिषदध्ययनविधिस्तुतिरितिभावः।) उपनिषदां — इत्येव पाठो बहुषु पुस्तकेषु दृश्यते।

[1] साङ्गवेदा–ख.

इत्येव[1] तस्य तस्य [2]स्वस्वाध्यायोपनिषदावृत्तिसिद्धेः। तस्मात् "सर्वेषु वेदेषूपनिषदमधीयीत" इति विधिरेवायमधिगम्यते ॥

न च वाक्यभेदः; उपनिषदमधीयीत, तां च सर्ववेदगतामिति; "सर्ववेदेष्वधीयीत" इत्येव विधाने सति आक्षिप्तसामान्यस्योपनिषदमिति विशेषोपसंहारमात्रत्वात्, "सा वैश्वदेवी"

## रत्नतूलिका

निवृत्तिः। न चोपनिषदावृत्त्यध्ययनविधिनैव सर्वनिवृत्तौ शेषवैयर्थ्यमिति वाच्यम्; तत्रैव सर्वावृत्तिप्रयोजनकल्पने गौरवात्। अत एवोद्भिदादाविव ज्योतिष्टोमादावधिकारवाक्येनैकेनैवोत्पत्तिविधेः संभवेऽपि पृथक् "सोमेन यजेत" इत्युत्पत्तिविधिस्वीकारः। "आम्नातस्यार्थं वक्तुं प्रभवामः" इति न्यायाच्च। अत एव "सप्तदशानुब्रूयात्" इत्यनारभ्य श्रुतस्य वाक्यस्याभ्युदयप्रयोजनत्वमुक्तम्। इतरथा वैमृधचातुर्मास्यादिविकृतिषु तत्तत्प्राकरणिकवाक्यैरेव साप्तदश्यसिद्धेस्तद्वैयर्थ्यं स्यादिति भावः ॥)

उपनिषदामुद्देश्यत्वपक्षमाशङ्क्य निषेधति—**न च वाक्यभेद इति। उपसंहारमात्रत्वादिति।** अधीयीतेत्यस्य सकर्मकत्वात्कर्मसामान्ये आक्षिप्ते तस्य विशेषोपसंहारमात्रमनेन क्रियते, न त्वस्यापि स्वातन्त्र्येणाध्ययनविधिसंबन्धः, येन वाक्यभेदः स्यादित्यर्थः। सामान्यस्य विशेषोपसंहारे दृष्टान्तमाह—**वैश्वदेवीति।** विश्वेदेवा देवता अस्येति वैश्वदेवीत्यत्र प्रतीतद्रव्यसामान्यस्य विशेषपर्यवसानहेतुरामिक्षाशब्दः। अन्यथा वाजिनस्येवाऽऽमिक्षाया अपि यागसंबन्धो वाक्यगम्य इति

1 इत्येवं-ख. 2 स्वाध्याय-ख.

इत्यादावामिक्षेत्यादिवत् । न चाशक्यार्थविधानम् । न खलु सर्वासु शाखास्वित्याह । सर्वेषु वेदेष्विति तु प्रतिवेदमेकैकोपनिषदध्ययनेऽपि समाप्यते ॥

अथ वा "सर्ववेदगतयोपनिषदाधीयीत" इति नित्ये विशिष्टविधौ न कोऽपि दोष इति । अपि च ब्रह्मविद्यार्थस्यो[1]पनयनमपि तत्र तत्र श्रूयमाणमुपनिषदध्ययनविधिं स्वाध्यायविधिव्यावृत्तं तदेकदेशविषयमवष्टभ्नाति ॥

न चैवं स्वाध्यायविधिना अधीतवेदस्यापि प्रव्रजितस्य पुनरुपनयनोपनिषदध्ययने प्रसज्येयातामिति दोषः ; इष्टत्वात् ,

## रत्नतूलिका

तुल्यप्रमाणत्वाद्विकल्पः स्यात् । [2]न तु वाजिनस्य कर्मभेदहेतुत्वम् , तच्छब्दस्यापि स्त्रीलिङ्गस्यामिक्षापदसामानाधिकरण्याधीनमेव विशेषोपसंहारकत्वमिति, तत्पदस्य वाऽऽमिक्षापदस्य वा तदुपसंहारकत्वमित्यनास्थया आमिक्षेत्यादिवदित्युक्तम् ॥

उद्देश्यत्वमङ्गीकृत्यापि वाक्यभेदः परिहृतः । इदानीं सर्ववेदगतोपनिषद्विशिष्टविधानान्न वाक्यभेद इत्याह—अथ वेति । अपि चेति । "उपनयनं विद्यार्थस्य श्रुतितः संस्कारः" इति विद्यार्थसंस्कारतयावगतमुपनयनं ब्रह्मविद्यार्थस्यापि तत्र तत्र श्रूयते । तच्च तस्याध्ययनविधिमन्तरा अनुपपन्नमिति उपनिषन्मात्राध्ययनविधिं अवष्टभ्नाति स्वयं तदालम्बनत्वेन वर्तत इत्यर्थः ॥

---

[1] उपनिषदध्ययनेऽपि—ख. [2] न च—कं.

"उपत्वायानि" इत्यादिलिङ्गदर्शनात्। न चाधीतवेदार्थावधारणार्थमेवेदमुपनयनमिति नियन्तुं शक्यम्; विशेषहेत्वभावात्। न चोपनयनस्यानैकध्यकल्पनादोषः, आगमिकार्थस्य यथागमं प्रतिपत्तव्यत्वात्। "महाशाला महाश्रोत्रिया" इति प्रक्रम्य "तान्हानुपनीयैवैतदुवाच" इति ब्रह्मविद्यार्थं पृथगुपनयनप्राप्तिदर्शनात्। "नान्यत्र संस्कृतो भृग्वङ्गिरसोऽधीयीत" इति तदनेकत्वानुगमाच्च। तस्माद्युक्तं प्रागध्ययनादपि प्रव्रजितस्य वेदान्तमात्राध्ययनादपि ब्रह्मजिज्ञासेति। तदेतदाह भगवान्भाष्य-

## रत्नतूलिका

**लिङ्गदर्शनादिति।** बालाक्यजातशत्रुसंवाद इति शेषः। नन्वधीतोपनिषदो "ब्रह्म ते ब्रवाणि" इति गतस्य बालाकेः "उप त्वायानि" इत्युपगमनमधीतवेदार्थावधारणार्थमेव न तु विद्यार्थमित्याशङ्क्य निषेधति—**न चाधीतवेदार्थेति।** **विशेषहेत्वभावादिति।** "उपनयनं विद्यार्थस्य" इति स्मृतावुपनयनमात्रस्याविशेषेण विद्यार्थत्वप्रतीतेरधीतस्यापि संस्काराधानाय पुनरध्ययनसंभवाच्च प्रसिद्धोपनयनवैषम्ये हेतुर्नास्तीत्यर्थः। **पृथगुपनयनप्राप्तिदर्शनादिति।** प्राचीनशालादीनां प्रक्रम एव महाशालत्वमहाश्रोत्रियत्वप्रतिपादनेन कृतोपनयनत्वप्रतीतेरिदमुपनयनान्तरमिति गम्यते। कैकेयस्य क्षत्रियत्वात्तान् ब्राह्मणाननुपनीयोवाचेत्युक्त्या क्षत्रियादन्यत्रोपनयनप्राप्तिश्चेत्यर्थः। **नान्यत्रेति।** यथा "सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यते" इति स्मृत्या वेदान्तरे उपनीतस्य वेदान्तराध्ययने अधिकारः न तथा भृग्वङ्गिरोऽध्ययने, किं तु तदर्थतया पृथक्संस्कारः कर्तव्य इत्यर्थः। अधिकारिनिरूपणमुपसंहरति—**तस्मादिति।**

कारः—“धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः” इति । यदि स्वाध्यायविध्यध्यापितसाङ्गस्वाध्यायस्तदा कश्चिद्विचार्य धर्ममनुष्ठाय तत्प्रसादलब्धविवेकादिसाधनो ब्रह्म जिज्ञासते । कश्चित्तु स तादृश एव प्राचीनसुकृतसम्पदासादितविवेकादिः प्रथममेवानुपयोगादनपेक्ष्य धर्मजिज्ञासां ब्रह्मजिज्ञासामेवारभते । अन्यः पुनरुत्कटतमसुकृतसम्भारपरिपाकवशादनधीतवेद एव विवेकादिसम्पत्त्या निरस्तसमस्तैषणो निश्श्रेयसीयंस्तदुपायमन्विच्छति । स सर्वोऽपि पृथगुपनिषदध्ययनविधिमालम्ब्य विशेष्यतेऽधीतवेदान्तस्येति । अन्यथा

## रत्नतूलिका

तादृश एव स्वाध्यायविध्यध्यापितसाङ्गस्वाध्याय एव । त्रिविधोऽत्राधिकारी—अधीतसाङ्गस्वाध्यायो विचारितानुष्ठितकर्मा चेत्येकः, अधीतसाङ्गस्वाध्यायोऽविचारितकर्मा चेत्यपरः, अनधीतवेदोऽन्य इति । त्रयाणामेतेषां पृथग्विधिविधेयमुपनिषन्मात्रविषयकमध्ययनमस्ति । अतस्तद्वतामेव ब्रह्मविचार इत्याभिप्रेत्य भाष्ये अधीतवेदान्तस्येति विशेषणं दत्तमित्यभिप्रेत्याह—स सर्वोऽपीति । अन्यथेति । यद्यनधीतवेदान्तस्य धर्मजिज्ञासाधिकारिणो व्यावृत्त्यर्थं विशेषणं स्यात्तदा “स्वाध्यायोऽध्येतव्यः” इति विधिनाध्ययने प्रवर्तितस्य पुरुषस्यैकदेशभूतकर्मकाण्डमात्राध्ययने विश्रान्त्ययोगादनधीतवेदान्तो नास्तीति व्यावर्त्याभावाद्वेदान्तमात्राध्याय्यभावेन संभवाभावाच्च [1] तन्न कर्तव्यमित्यर्थः । ननु न व्यावृत्त्यर्थं विशेषणम्; किं तर्हि विचारविषयवेदान्तलाभार्थ-

[1] तन्न वक्तव्यमित्यर्थः—कुं.

हि न वक्तव्यमधीतवेदान्तस्येति। स्वाध्यायविधिप्रवर्तितस्यैक-देशाध्ययननिष्ठानायोगात्। जिज्ञासालम्बनस्य च योग्यतया वेदान्तस्य सन्निधिलभ्यत्वात्। अतो नायमर्थः—यदि कश्चिदनधीतवेदान्तः स धर्मं जिज्ञासताम्, अधीतवेदान्तस्य तु तामनपेक्ष्य ब्रह्मजिज्ञासोपपत्तिरिति। एतेन यत्केनचिदत्र प्रलपितं "वेदान्तमात्राध्ययनमशास्त्रीयम्, कृत्स्नाध्ययने तु धर्मजिज्ञा-साप्राथम्यम्, अध्ययनक्रमादिना" इति तत्सम्प्रदायाज्ञानमूल-तया निरस्तम्। धर्मजिज्ञासाप्राथम्यहेतवश्चाग्रे निरसिष्यन्ते। यत्त्वेवं सुकृतातिशयादेव धर्मजिज्ञासानपेक्षावद्ब्रह्मजिज्ञासान-पेक्षापि किं न स्यादिति, तन्न; अतीतभवनिष्पादितसकल-ब्रह्मविचारस्य प्रतिबन्धक्षये सहजसिद्धज्ञानस्य वामदेवादेरिव

## रत्नतूलिका

मित्यत आह—जिज्ञासालम्बनस्येति। सर्वोऽपि विषयविचारो योग्यप्रमाणालम्बनः। औपनिषदब्रह्मविचारे योग्यं वेदान्तरूपमेव प्रमाणं "तद्विजिज्ञासस्व" इति विचारविधायकवाक्यस्य सन्निहितं चेति तत्स्वयमेव बुद्धौ सन्निहितं भवतीति तदर्थतयाऽधीतवेदान्तस्येति न वक्तव्यमित्यर्थः। अनधीतवेदान्तव्यावृत्तिप्रकारं विशदयन् तद-नभिमतिमुपसंहरति—अतो नायमिति। एतेनेति। वेदान्त-मात्राध्ययनस्य शास्त्रीयत्वप्रतिपादनेनेत्यर्थः। नन्वध्ययनक्रमेण धर्म-जिज्ञासाप्राथम्याभावेऽपि कर्मणां विद्यया समुच्चित्यानुष्ठानादिहेतुभिस्त-त्प्राथम्यमास्त्वित्यत आह—धर्मजिज्ञासाप्राथम्यहेतवश्चेति। किं सहजसिद्धज्ञानस्य ब्रह्मजिज्ञासावैयर्थ्यमापाद्यते, उतासिद्धज्ञानस्यापीति विकल्प्याद्ये इष्टापत्तिरित्याह—अतीतभवेति। द्वितीय आह—

विचारानपेक्षत्वेऽप्यक्षतेः । अतादृशस्य ज्ञानार्थतयैव ब्रह्मविचारापेक्षणात् । न हि स्वर्गादिवद्धर्मैकसाध्यं ब्रह्मज्ञानम्; तस्य प्रमाणफलत्वात् । एवंविधपुरुषधौरेयस्य दुर्लभतमतया च प्रायशः क्रमयोगेन वर्तन्ते शास्त्राणि । न चैतावता क्वचिदवसित-

रत्नतूलिका

अतादृशस्येति । ननु सुकृतवशाद्विवेकादिवत् ब्रह्मज्ञानमप्यस्तु, किं विचारेणेत्यत आह—न हीति । प्रमाणमात्रे तर्कस्यापेक्षितत्वादत्रापि विचाररूपतर्कोऽपेक्षणीय इति भावः । ननु—

"वनेषु तु विहृत्यैवं तृतीयं भागमायुषः ।
चतुर्थमायुषो भागं त्यक्त्वा सङ्गान्परिव्रजेत् ॥

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥

अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः ।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥

अनधीत्य द्विजो वेदाननुत्पाद्य तथात्मजान् ।
अनिष्ट्वा च तथा यज्ञैर्मोक्षमिच्छन्व्रजत्यधः ॥"

इत्यादिधर्मशास्त्रेषु ब्रह्मचर्याद्याश्रमक्रमेणैव सन्न्यासाभिधानात् क्रमानादरे प्रत्यवायश्रवणाच्च कथमविचारितधर्मस्य प्रव्रज्यापूर्वकब्रह्मविचारे अधिकारः, कथं वानधीतवेदस्येत्यत आह—एवंविधेति । एतावतेति । अन्याभिप्रायेण क्रमश्रवणमात्रेणेत्यर्थः । क्वचिदवसितमिति । "यदहरेव विरजेत्तदहरेव प्रव्रजेत्," "स तानि प्राग्वा त्यजेत्" इति शास्त्रे निश्चितमाश्रमाद्यनपेक्ष्य वैराग्यमात्रहेतुत्वमित्यर्थः । ननु परस्परविरोधे सति भूयोऽनुग्रहन्यायेन क्रमशास्त्रानुरोधः किं न

मुदसनीयम्; विषयविशेषोपपत्तेः। तममुं जिज्ञासुमधिकृत्य ब्रह्मजिज्ञासाशास्त्रमारभमाणो भगवान्बादरायणः शास्त्रप्रवृत्त्यङ्ग-मनुबन्धमादावसूत्रयत्—

"अथातो ब्रह्मजिज्ञासा" इति ॥

सूत्रसङ्गतिः

अस्य सूत्रस्य तावत् "तद्विजिज्ञासस्व, सोऽन्वेष्टव्यः स विजिज्ञासितव्यः, आत्मा वाऽरे द्रष्टव्यः श्रोतव्यः" इत्यादि-विचारविधेर्विप्रकीर्णश्रुताधिकारिविशेषणतया विविधाम्नान-विरुद्धावभासविषयप्रयोजनतया च विचिकित्सिताधिकारिविषय-

रत्नतूलिका

स्यादित्यत आह—विषयविशेषोपपत्तेरिति। अपरिपक्वकषाय-विषयं कर्मशास्त्रं इतरत्परिपक्वकषायविषयमिति व्यवस्थितविषयोपपत्ते-रित्यर्थः। ततश्च भिन्नविषयत्वाद्विरोध एव नास्ति, कुतो बाध्य-बाधकभाव इति भावः।

प्रवृत्त्यङ्गमनुबन्धमिति। अनुबध्यते संबध्यते विधेयेन पुरुषोऽनेनेत्यनुबन्धोऽधिकार्यादिः। अस्य पुरुषस्येदमस्मै प्रयोजनाय विचार्यम्, विचारेण चेदं प्रयोजनमाप्तुं शक्यमिति ज्ञानाभावे प्रवृत्त्य-नुपपत्तेः प्रवृत्त्यङ्गत्वमनुबन्धस्येति भावः। श्रुत्यपेक्षितन्यायसूचकत्वा-दनुग्राह्यश्रुतिसङ्गतिं दर्शयति—अस्य सूत्रस्येति। विचारविधेरपेक्षित-तन्निर्णयोपयोगिन्यायोपदर्शकत्वेनेति संबन्धः। विप्रकीर्णेति। तैत्तिरीये आनन्दमीमांसायामुत्तरोत्तरमानन्दोत्कर्षप्रतिपादनस्य पूर्वपूर्वापकर्षनान्त-रीयकतया आर्थिको विवेकः प्रतीतः। कठवल्ल्यां मृत्यूपच्छन्दित-विषयविरक्तस्य नचिकेतसो विद्योपदेशदर्शनाद्वैराग्यं विद्यासाधनमव-

प्रयोजनसंबन्धानुबन्धस्यापेक्षिततन्निर्णयोपयोगिन्यायोपदर्शक-त्वेन श्रुतिसङ्गतिः। तत एव सकलशास्त्रोपोद्घाततया समर्थनीयारम्भकविचारद्वारा ब्रह्मविषयतया च शास्त्रप्रथमाध्यायप्रथमपादसङ्गतयः। ब्रह्मणि विचारविधिसमन्वयप्रतिपादनाद्वा प्रथमाध्यायसङ्गतिः। सूत्रे ब्रह्मशब्दोपादानात् "आत्मा श्रोतव्यः, तद्विजिज्ञासस्व" इति तुल्यविषयत्वप्रदर्शनमुखेनात्म-

## रत्नतूलिका

गम्यते। तथा मुण्डके "प्रशान्तचित्ताय शमान्विताय प्रोवाच ताम्" इति शमादिः प्रतीयते। वाजसनेयके—"शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इति शमादिर्गम्यते। तेषां किं प्रत्येकं विशेषणता, उत समुच्चितानामिति विशये निर्णयाय न्यायोऽपेक्षित इति भावः। विविधाम्नानेति "स कारणं करणाधिपाधिपः" इत्यादौ सविशेषस्य, "केवलो निर्गुणश्च" इत्यादौ निर्विशेषस्य च विषयत्वं प्रतीयत इति विषयस्य विरुद्धावभासत्वम्। "तयोर्ध्वमायन्नमृतत्वमेति" इत्यादौ ब्रह्मलोकगमनं, तत्र च साङ्कल्पिकभोगादिरमृतत्वमिति प्रतीयते। "अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इत्यादाविहैव स्वरूपप्रतिष्ठा कैवल्यमिति प्रयोजने विरुद्धावभासत्वमित्यर्थः। अधिकार्यादिषु संशयादेव संबन्धांशेऽपि संशय इति ध्येयम्। श्रुतिसङ्गतिरिति। श्रुत्येकवाक्यतेत्यर्थः। सकलशास्त्रोपोद्घाततयेति शास्त्रसङ्गतौ प्रथमाध्यायसङ्गतौ प्रथमपादसङ्गतौ च हेतुः, ब्रह्मविषयतयेति शास्त्रसङ्गतिमात्र इति विवेकः। समन्वयाध्यायसङ्गतौ हेत्वन्तरमाह—ब्रह्मणीति। स्पष्टब्रह्मलिङ्गकवाक्यविचाररूपप्रथमपादसङ्गतौ हेत्वन्तरमाह—सूत्रे ब्रह्मशब्देति। विचार-

ब्रह्मसामानाधिकरण्यलक्षणस्पष्टब्रह्मलिङ्गोपक्षेपेण प्रत्यगेकरसे ब्रह्मणि विचारविधिसमन्वयाभिधानात् स्पष्टब्रह्मलिङ्गवाक्यान्तरविचारावतारहेतुतया पादसङ्गतिरिति ॥

अनुबन्धचतुष्टयप्रदर्शनम्

[1]अत्राथेत्याधिकार्यनुबन्धः सूच्यते । ब्रह्मजिज्ञासेति विषयानुबन्धः। अर्थात्तु विचारस्य प्रमाणाधिष्ठानतया प्रत्यक्षाद्ययोग्यतया च सन्निहितो योग्यश्च वेदान्त इत्यव्यवहित-

रत्नतूलिका

विधायकवाक्ययोः "आत्मा श्रोतव्यः" इति वाक्ये आत्मशब्दः श्रुतः, "तद्विजिज्ञासस्व" इति वाक्ये तच्छब्देन प्रकृतं ब्रह्म प्रतीतम्, तद्वाक्यद्वयापेक्षितन्यायप्रदर्शके सूत्रे ब्रह्मपदोपादाने एकविचारविधित्वं दर्शितं भवति । तच्चात्मब्रह्मशब्दयोरेकार्थत्वे घटते। तच्चैकार्थ्यत्वलक्षणं सामानाधिकरण्यं प्रत्यगेकरसे ब्रह्मणि स्पष्टं लिङ्गम्। आत्मशब्दस्य जीवे प्रसिद्धत्वात्। तदुपक्षेपेण तदानयनेन विचारविधिसमन्वयाभिधानात्स्पष्टब्रह्मलिङ्गवाक्यान्तरविचारावतारहेतुर्भवतीति प्रथमपादसङ्गतिरित्यर्थः ॥

सूत्रे श्रुत्यर्थाभ्यामनुबन्धचतुष्टयप्रदर्शनप्रकारं विभज्य दर्शयति—**अत्राथेतीत्यादि**। यद्विशेषणानन्तर्यमथशब्दार्थस्तस्याधिकारिविशेषणत्वमिति भावः। **अर्थात्** सामर्थ्यादित्यर्थः। तदेवोपपादयति—**विचारस्येति**। न हि प्रमाणमनधिष्ठाय वस्तु विचारयितुं शक्यते। औपनिषदब्रह्मविचारे च प्रत्यक्षादीनां विषयत्वायोग्यत्वात् योग्यो विचारविधायकवाक्यस्य सन्निहितश्च वेदान्तो विषयतया लभ्यत

---

[1] तत्र—ख. ग. ङ.

विषयानुबन्धो लभ्यते। अर्थादेव फलसंबन्धानुबन्धावपीति। चतुर्लक्षणं चैतदुपक्रमं शास्त्रम्। चतुर्धा चेह ब्रह्म जिज्ञास्यते, किं ब्रह्म, कथं लक्षणम्, किमस्य साधनम्, कथं फलं चेति। तत्राद्यद्विकेन सलक्षणं ब्रह्म प्राधान्येन प्रतिपाद्यते, उत्तर-द्विकेन च ससाधनं फलम् ॥

## शास्त्रविषयव्यवस्था

यद्यपि चाद्यलक्षणे ब्रह्मणि वेदान्तानां समन्वयः, द्वितीये स्मृत्याद्यविरोधः प्रतिपाद्य इत्याद्यद्विकेऽवान्तरभेदः, उत्तरद्विके च साधनं तृतीये चतुर्थे फलमिति प्रतिपाद्यभेदः, तथाप्यविरोधस्य प्रमाणप्रतिष्ठार्थतया प्रमाणस्य च प्रमेयभूत-

## रत्नतूलिका

इत्यर्थः। अर्थादेवेति। जिज्ञासापदसामर्थ्यादित्यर्थः। जिज्ञा-सेति ज्ञानस्येष्यमाणत्वं प्रतीयते। तच्चाविद्यानिवर्तनेन स्वरूपप्रतिष्ठा-कैवल्ये घटते, नान्यथेति प्रयोजनलाभ इत्यर्थः। "अथातो धर्म-जिज्ञासा" इत्यारभ्य "अनावृत्तिः शब्दात्" इत्यन्तमेकं शास्त्र-मिति केचित् तन्निरासार्थमाह—**चतुर्लक्षणं चेति**। एष उपक्रमो अस्य शास्त्रस्येति **एतदुपक्रम**मित्यर्थः। ऐकशास्त्र्यं च निरा-करिष्यत इति भावः। द्विकविभागायाह—**चतुर्धा चेति। कथं लक्षणं कथं फलं** चेत्यत्र प्रकृत्या प्रमाणफलयोः स्वरूपं थमुप्रत्ययेन प्रकारश्चे-त्युभयं जिज्ञासाविषय इति भावः। **सलक्षणम्** सप्रमाणमित्यर्थः।

**प्रमाणप्रतिष्ठार्थतयेति**। विरुद्धयोः परस्परापहृतविषयत्वा-त्प्रामाण्यं[1] न प्रतितिष्ठतीत्यविरोधस्तत्प्रतिष्ठार्थ इति भावः। एवं ज्ञेय-

[1] न प्रतीत्यविरोधः—कु.

ब्रह्मशेषतया साधनस्य फलशेषतया च प्रधानविषयैकत्वे द्विकद्विकविभागो न विरुध्यते । आद्यद्विकेनोपेयं ब्रह्म प्रतिपाद्यते, उत्तरद्विकेनोपायो भक्तिरिति कश्चित्, तन्मन्दम्, आद्यद्विके तावत्प्रथमलक्षणे "तत्तु समन्वयात्" इति ब्रह्मणि समर्थितसमन्वयानां वेदान्तानां गतिसामान्यप्रपञ्चनेन द्वितीये प्रमाणविरोधपरिहारेण च प्रमाणतात्पर्यस्यापि सूचनात् । उत्तरद्विके च विद्याफलस्य चतुर्थे प्रायेणोपवर्णनात् ॥

## रत्नतूलिका

ब्रह्मविषयतया ससाधनतत्फलविषयतया च स्वमते द्विकद्विकविभाग उक्तः । परेण तूपेयोपायपरतया, [1]विषयविषयिपरतया वा द्विकद्विकविभाग इत्युक्तम्, तदनूद्य दूषयति—आद्यद्विकेनेत्यादिना । तत्तु समन्वयादिति । तद्ब्रह्म सर्वज्ञं सर्वशक्ति वेदान्तशास्त्रादवगम्येत ; सर्वेषां वाक्यानां तात्पर्येण तत्प्रतिपादकत्वेन समन्वयादिति सूत्रार्थः । गतिसामान्यप्रपञ्चनेनेति । गतिरवगतिः, तस्याः सामान्यमैकरूप्यं, तत्प्रपञ्चनेन सर्वेषु वाक्येषु चेतनकारणावगतिरेकरूपैवेति "गतिसामान्यात्" इति सूत्रेण प्रपञ्चनेनेत्यर्थः । प्रमाणतात्पर्यस्यापीति । तथा च तात्पर्यविषयभेदात् द्विकस्य नैकार्थतेति भावः । सूचनादिति । सर्वेषां वाक्यानामेकत्र समन्वयप्रतिपादनम्, बोधने ऐकरूप्यप्रतिपादनम्, मानान्तरैः [2]परस्परं चाविरोधप्रतिपादनं चेत्येतत्सर्वं प्रमाणदार्ढ्यायेति तत्र तात्पर्यमित्यर्थः । अनेन प्रमाणतात्पर्यसूचनवचनेन ज्ञेयत्वमेव ब्रह्मणो न तूपास्यत्वमिति निर्विशेषनिष्ठं शास्त्रमित्युक्तं भवति ।

---

[1] विषयिविषय—कुं. [2] परस्पराविरोधप्रतिपादनं च—च.

अथ प्रमाणं प्रमेयार्थमित्याद्यद्विकस्योपेयविषयत्वमुच्येत, उपायश्चोपेयार्थ इत्युत्तरद्विकस्यापि तदेकविषयत्वे नार्थभेदः स्यात्। एतेन विषयविषयिरूपप्रतिपाद्यभेदेन द्विकद्विकभेद इति प्रत्युक्तम्; जगद्व्यापारवर्जमैश्वर्यादिरूपस्य तुर्याध्यायप्रतिपाद्यफलभेदस्याविषयित्वात्। यत्तु फलस्य मुक्तेरपि भगवदनुभवरूपतया विषयित्वेन क्रोडीकारान्न तुर्याध्यायप्रतिपाद्यभेद इति, तन्न; प्रमाणस्यापि तर्हि समन्वयादिप्रतिपाद्यस्य विषयित्वेन क्रोडीकारे द्विकद्वयार्थभेदायोगादिति ॥

## रत्नतूलिका

एतच्छब्दार्थमाह—जगद्व्यापारवर्जमिति। प्रमाणस्यापीति। यदि फलस्य विषयित्वेनोत्तरद्विकप्रतिपाद्यान्तर्भावस्तर्हि प्रमाणस्यापि विषयित्वेन तत्रैवान्तर्भावः स्यात्, ततश्च "आनन्दमयोऽभ्यासात्" इत्यारभ्य "अनावृत्तिः शब्दात्" इत्यन्तः प्रमाणतदविरोधभक्तितत्फलप्रतिपादको विषयिप्रतिपादकत्वेनैकोंऽशः, अधिकरणपञ्चकमपरोंऽश इति स्यात्। न तु द्विकद्विकविभाग इत्यर्थः। न च प्रमाणस्य विषयित्वेऽपि विषयार्थतया पूर्वद्विक एवान्तर्भावः, भक्तेस्तु स्वतः फलार्थतया न विषयशेषतेति वैषम्यमिति वाच्यम्, प्रमाणस्य विषयस्वरूपसमर्पकत्ववत् भक्तेरपि [1] भगवदनुभवस्वरूपे फले अनुभाव्यतया विषयसमर्पकत्वाविशेषात् "तं यथा यथोपासते तथैव भवति" इति शास्त्रात्। तथा च साधनाध्यायस्यापि विषयांशान्तर्भावाद्द्विकद्विकविभागोऽसङ्गत इति भावः ॥

---

[1] अनुभवरूपे—च. कुं.

शारीरकपदार्थः

तामसूं चतुर्लक्षणीं शारीरकमीमांसामाचक्षते। शरीरमेव शरीरकम्, तत्र भवः शारीरको जीवः न ब्रह्म; तस्यान्तर्यामिरूपेण वा स्वरूपेण वा शरीर एव [1]भवाभावेन शारीरकाव्यपदेश्यत्वात्, असाधारण्येन हि व्यपदेशा भवन्ति, तस्य ब्रह्मात्मना मीमांसेत्यर्थानुगमात्। एतेन जगच्छरीरः परमात्मा शारीरकः, "तस्यैष एव शारीर आत्मा" इति श्रुतेः, तद्विषयं शास्त्रं शारीकमीमांसेति [2]परोक्तमपास्तम्; परमात्मनः शारीरत्वस्याग्रे निरसिष्यमाणत्वात्। सेयं शारीरकमीमांसा पथित्रयगतागतपरिखिन्नजननिराबाधविश्रमस्थानभूतपरमपदगतिसंसर–

रत्नतूलिका

समाख्ययापि प्रत्यगेकरसब्रह्मनिष्ठं शास्त्रमित्यभिप्रेत्याह— **तामसूमिति**। **स्वरूपेण वेति** स्वमते। **अर्थानुगमाच्छारीरको जीव** इत्यन्वयः। **एतेनेति**। वक्ष्यमाणेनेत्यर्थः। **तस्य** पूर्वोक्तस्य विज्ञानमयस्य **एषः** आनन्दमयः **शारीरः** शरीरभवः आत्मेति श्रुत्यर्थः। तन्मते आनन्दमयस्य परमात्मत्वादिति भावः। **निरसिष्यमाणत्वादिति**। "तस्यैष एव शारीर अत्मा" इति प्रयोगो न परमात्मपरः; आनन्दमयस्यापरमात्मत्वादिति भावः। **पथित्रयेति**। देवयानं पितृयाणं "जायस्व म्रियस्व" इत्युक्तं चेत्यर्थः। परमपदस्य गतिरवगतिः, सैव गतिः गमनं, तस्य घण्टापथायमानेत्यर्थः। परमपदलाभेन यो नियतो विश्रमस्तस्याभ्यर्थीत्यर्थः। अनेनार्चिरादिमार्गेण ब्रह्मलोकं गतस्यापि विश्रमनैयत्यं नास्तीति ध्वनितम्॥

---

[1] भावाभावेन—ख. ङ.   [2] प्रत्युक्तं परोत्तम्-ग.

णायमाना निगमान्तविषयविवेचनी विविधकुबुध[1] जनजल्पित-विकल्पशतकण्टकिता मा भूदिति परमपदलाभनियतविश्रमा-भ्यर्थिजनसार्थं कृतार्थयितुकामेन भवभयाभितप्तसुजनभागधेय-सम्भारसमुद्भूतनिभृतदयाविधेयहृदयतया परानुग्रहैकप्रयोजनकृत-शरीरपरिग्रहेण श्रीशङ्करेण भगवता भाष्यकारेण व्याख्याता ॥

## अथशब्दार्थः

तत्र "अथशब्द आनन्तर्यार्थः परिगृह्यते, नाधिकारार्थः" इति भाष्यम् । इदं तु परस्यापि समानम् । नायमर्थः— "अथातो ब्रह्मजिज्ञासा" ब्रह्मजिज्ञासा प्रस्तूयत इति ; प्रारम्भादेव प्रारभ्यमाण[2]त्वावगमे तदुक्तिवैयर्थ्यात् । श्रोतृ-बुद्धिप्रणिधानस्य च न्यायपरे सूत्रे मन्दफलत्वात् । अथापि कथंचित्प्रस्तोतव्यत्वमुच्येत, तन्न ; न्यायसूत्रस्योपदेशपरत्वा-योगात् , सूत्रमूले च प्रारम्भविध्यभावेन तदपेक्षितन्याय-

## रत्नतूलिका

ननु न वयं श्रोतृबुद्धिप्रणिधानाय ब्रह्मजिज्ञासा प्रस्तूयत इति वदामः, येन वैयर्थ्यं स्यात्, किं तु ब्रह्मजिज्ञासारम्भः कर्तव्य इति विधिं ब्रूम इत्याशङ्कते—**अथापीति** । अथशब्दस्याधिकारिसूच-कत्वेऽपि तत्कर्तव्यताविधिपर्यन्तत्वमनुपपन्नमिति वा अधिकारिसूचकत्वा-भावे विचारारम्भविधिरेवानुपपन्न इति वक्ष्यमाणं वा मनसि निधाय **कथंचिदित्युक्तिः** । किमिदमेव सूत्रं विचारारम्भविधिरूपं, उत तद्विध्यपेक्षितन्यायसूचकमिति विकल्प्याद्य आह—**न्यायसूत्रस्येति** । द्वितीय आह—**सूत्रमूले चेति** । सूत्रमूलभूते "तद्विजिज्ञासस्व"

---

[1] जनकल्पित–कुं. [2] अवगमेन–ग.

परत्वासंभवात्, अनिरूपिताधिकारितया प्रतिपत्तृशून्यस्य विधेरनुपपत्तेश्च। "ब्रह्मजिज्ञासाया अनधिकार्यत्वात्" इति भाष्यीयो हेतुस्तु वक्ष्यमाणन्यायेनाश्रयणीयायां जिज्ञासापदावयववृत्तौ यावदतो विचारो न लक्ष्यते सूत्रार्थवत्त्वादिविमर्शविलम्बात्, तावदधिकारार्थत्वभङ्गेनानन्तर्यार्थः प्रत्येष्यत इति।

## रत्नतूलिका

इत्यादिवाक्ये विचारकर्तव्यता प्रतीयते, न तदारम्भकर्तव्यतेति न तद्विध्यपेक्षितन्यायपरत्वमस्येति भावः। पक्षद्वयसाधारणं दोषमाह— **अनिरूपितेति।** अथशब्दस्यारम्भविध्यर्थत्वेनाधिकार्यनिरूपकत्वादिति भावः। ननु त्वया जिज्ञासायाः प्रस्तोतव्यत्वमङ्गीकृत्य सूत्रस्योपदेशपरत्वायोगो यो हेतुरुक्तः स युक्तः, "अनधिकार्यत्वात्" इति भाष्यीयो हेतुस्त्वयुक्तः; जिज्ञासाशब्दस्य विचारार्थकत्वाङ्गीकारादित्यत आह—**भाष्यीयो हेतुस्त्विति।** **वक्ष्यमाणन्यायेनेति।** यदि जिज्ञासापदावयववृत्तिर्नाश्रीयते, तदा तल्लक्षितविचारस्येष्यमाणज्ञानफलत्वं न सूत्रोपात्तं स्यात्, तदाश्रयणे तु जिज्ञासापदेन ज्ञानेच्छाप्रतिपादनद्वारा लक्षितविचारस्य फलाकाङ्क्षायामिच्छाविषयज्ञानमेवाविद्यानिबर्हणं फलमाश्रीयत इति न्यायेनेत्यर्थः। **यावदत इति।** जिज्ञासापदादित्यर्थः। **सूत्रार्थवत्त्वादीति।** अवयववृत्तावाश्रितायां ब्रह्मजिज्ञासा भवतीति सिद्धार्थानुवादकतया सूत्रस्य वैयर्थ्यं स्यादिति पर्यालोचनाविलम्बेन यावद्विचारलक्षणा न कल्प्यते, ततः प्राग्जिज्ञासाया विषयसौन्दर्यलभ्याया "अनधिकार्यत्वात्" इति भाष्यीयो हेतुः संगच्छत इत्यर्थः। अर्थवत्त्वादीत्यादिपदेन तदनुकूलोपपत्तिग्रहः। **प्रत्येष्यत इति।** प्रतीतश्च विचारलक्षणा-

मङ्गलं त्वन्यार्थोदकुम्भदर्शनेनेवार्थान्तरप्रयुक्ताथशब्दश्रवणेनैव भवदपि यदि ब्रह्मजिज्ञासेत्यतो विभज्य तदर्थः कल्प्येत ‘अथ मङ्गलं भवतीति’ वाक्यं भिद्येत। अथार्थैकत्वं ब्रह्मजिज्ञासा मङ्गलमिति, स्तुतिमात्रं सूत्रं स्यात्। अतः सा कर्तव्येति वा विभज्याध्याहियेत, स च नान्यथासंभवे युक्तः। पूर्वप्रकृतापेक्षयाऽर्थान्तरपरत्वं चैकविषये विकल्पान्तरोपन्यासविषयमेव दृष्टम्। यथा बुद्धिर्नित्या अथानित्येति। न चेह विकल्पान्तरमुपन्यस्यते। अथैवं मनुषे—नायमस्ति नियमः, विषयैक्ये विकल्पान्तरोपन्यास एव प्रकृतादर्थादर्थान्तरपरत्वमथशब्द-

रत्नतूलिका

नन्तरमपि न त्यज्यते; हेत्वभावादिति भावः। **श्रवणेनैवेति**। तस्य श्रवणमेव मङ्गलम्, न तु तस्य वाच्यत्वमपि। ततश्चाथशब्दस्यान्योऽर्थो वाच्य इति भावः। ननु “मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ” इति वाच्यानन्तर्यादिभिः सह परिगणनात्तस्यापि वाच्यतेत्याशङ्क्य तर्हि किं ब्रह्मजिज्ञासेत्यनेनैकवाक्यता, उत भिन्नवाक्यतेति विकल्प्यान्त्ये सैव दोष इत्याह—**यदीति**। अस्तिभवतिभ्यां वाक्यपूरणमिति मङ्गलं भवतीत्येकं वाक्यम्, अतो ब्रह्मजिज्ञासेत्यपरं वाक्यमिति वाक्यभेदः स्यादित्यर्थः। आद्यं शङ्कते—**अथार्थैकत्वमिति**। तत्रापि किं ब्रह्मजिज्ञासाया मङ्गलत्वमात्रप्रतिपादनायेदं सूत्रं, उत कर्तव्यताप्रतिपादनायेति विकल्प्याद्य आह—**ब्रह्मजिज्ञासा मङ्गलमितीति**। तच्चासङ्गतम्; न्यायसूचकत्वात्तस्येति भावः। द्वितीय आह—**अत इति**। अतःशब्दमथशब्दाद्विभज्य ब्रह्मजिज्ञासेत्यंशस्य पुनश्च बुद्धौ विपरिवृत्तिरूपाध्याहारः, कर्तव्येति पदस्याश्रुतकल्पनारूपाध्याहारश्च क्रियेतेत्यर्थः। **यथा बुद्धिरिति**। तत्रैकस्यां बुद्धौ

**स्येति,** "जाया मे स्यादथ प्रजायेय वित्तं मे स्यादथ कर्म कुर्वीय" इत्याद्यविकल्पान्तरोपन्यासेऽपि प्रकृतजायादिसत्त्वमपेक्ष्य प्रक्रियमाणप्रजननाद्यर्थान्तरपरत्वदर्शनात्, एवमिहापि पूर्ववृत्तं किंचिदपेक्ष्य ब्रह्मजिज्ञासारूपार्थान्तरपरोऽथशब्दो भविष्यतीति, **सत्यम्; किंतु विरोधगर्भया वा हेतुत्वगर्भया वा प्रकृतापेक्षया** अर्थान्तरपरत्वमथशब्दस्य भवदपि भवेत्, तत्तावदेक- मथेदमेकमित्यादावपि **तादात्म्यविरोधगर्भत्वादपेक्षयाः ।**

## रत्नतूलिका

नित्यत्वमुपन्यस्य तद्विरुद्धानित्यत्वकल्पनस्योपन्यासादिति भावः। **विकल्पान्तरमित्युपलक्षणम्**, विषयैक्यमपि नेति द्रष्टव्यम्। **अविकल्पान्तरोपन्यासेऽपी**त्यनेन एकस्य विषयस्योपादानाद्विकल्पान्तरोपन्यासाभावमात्रोक्तिरिति द्रष्टव्यम्। **प्रकृतजायादीति ।** तथा च विरुद्धत्वमतन्त्रम्, किं त्वर्थान्तरोपन्यास एवेति भावः। सत्यमत्र जायासत्त्वप्रजननादेर्न विरुद्धकल्पत्वमिति, तथापि न प्रकृतादर्थान्तरोपन्यासमात्रे अथशब्दः; किं त्वन्यदस्ति तत्र नियामकमिति परिहरति—**सत्यमिति ।** किं तन्नियामकमिति पृच्छति—**किं त्विति ।** तदाह—**विरोधेति ।** विरोधो हेतुत्वं वा गर्भो विषयत्वेनान्तर्भूतो यस्यामपेक्षाबुद्धौ [1]तयार्थान्तरोपन्यासो यत्र तत्र तदर्थाथशब्दप्रयोग इत्यर्थः। **भवदपी**त्यनेनार्थान्तरं न वाच्येषु परिगणितम्, किं तु प्रयोगं दृष्ट्वा कल्पनीयमित्यस्वरसः सूच्यते। **तादात्म्यविरोधेति ।** तत्राप्युभयोस्तादात्म्यस्य विरुद्धतया विरोधगर्भापेक्षाबुद्धेः सत्वान्न व्यभिचार इति भावः। नन्वत्रापि हेतुत्वगर्भाया अपेक्षाबुद्धेः संभवात्प्रकृतादर्थान्तरपरत्वमथशब्दस्यास्त्वित्यत

[1] तयार्थान्तरन्यासो—कुं.

एवं च प्रकृते हेतुभावगर्भायामपेक्षायामानन्तर्यविषयत्वावश्यं-भावेन लाघवादानन्तर्यपरत्वमेवा[1]थशब्दस्य । तदिदमुक्तं भाष्ये–“पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकात्” इति । विषयविवेचनेऽनुज्झितानन्तर्यार्थत्वाल्लाघवेन तादर्थ्ये संभवति प्रकृतापेक्षावच्छिन्नमर्थान्तरं, अर्थान्तरावच्छिन्ना प्रकृतापेक्षा वा नाथशब्दार्थः, गौरवादित्यर्थः । नन्वानन्तर्य-मप्यर्थान्तराश्रयं प्रकृतापेक्षावाच्छिन्नं च; अयमस्मादनन्तर इति प्रतीतेः, [2]एतेन तादर्थ्येऽपि तुल्यं गौरवमिति चेन्न; पूर्वप्रकृ-तापेक्षाया आनन्तर्यप्रतीतौ परिकरमात्रत्वेनाशाब्दत्वात्, परत्वा-

रत्नतूलिका

आह–एवं चेति । यदि प्रकृते हेतुभावगर्भापेक्षा तदा हेत्वपेक्षमर्थान्तर-मित्यथशब्देन प्रतीयत इति वाच्यम् । तत्र हेतुत्वस्य पूर्ववर्तित्वगर्भ-त्वादर्थान्तरे आनन्तर्यमपि प्रतीतामिति लाघवात्तदेवेहाथाऽस्तु, किं प्रकृतापेक्षावच्छिन्नार्थान्तरादिपरत्वकल्पनया, गौरवादित्यर्थः । भाष्ये फलत इत्येतदुक्तार्थपरतया व्याचष्टे—विषयविवेचन इति । अर्थान्तराश्रयमिति । तन्निरूपितं तत्प्रतीतिसापेक्षप्रतीतिकमिति यावत् । प्रकृतापेक्षेति । अपेक्षाबुद्धिमूलकमित्यर्थः । तदुभय-मभिनीय दर्शयति—अयमस्मादिति । वैषम्येण दूषयति—नेति । परत्वादीति । यथा परशब्देन परत्वे प्रतीयमानेऽपरत्वापेक्षाबुद्धेः परिकरमात्रत्वं ताटस्थ्येन परत्वप्रत्ययोपकारकत्वमात्रं, न त्वपरत्वस्यापि शब्दार्थान्तर्भावः, तथाथशब्देनानन्तर्यं व्यवधानाभावः प्रतीयते, तावन्मात्रं शब्दार्थः । स च प्रतीतोऽपि किंनिरूपितव्यवधानाभाव इति साकाङ्क्षत्वान्न पर्यवस्यतीति तत्पर्यवसानाय परमर्थान्तरज्ञानम् ।

---

[1] अथशब्दस्य युक्तम्–ङ. [2] तेन–ख. ग.

दिप्रतीतावपरत्वाद्यपेक्षावदिति । नापि प्रश्नपरत्वम् ; प्रतिवचनानुपलम्भात् । नापि कार्त्स्न्यपरत्वम् ; विशेषणवैयर्थ्यात् । जिज्ञासाकर्तव्यतामात्रं हि साधयितुमिष्टमनेन सूत्रेण । नैकदेशकार्त्स्न्यविकल्पिता सा ; असंशयपदत्वात् ॥

अपि चाधिकाराद्यर्थेऽथशब्दो हेतुपरः सन्नप्रकृतविषयः कल्प्येत । प्रकृतविषयत्वे तस्य तत्रैव हेतुत्वेनानन्वयात् । न ह्यधिकर्तव्यत्वादधिकर्तव्या जिज्ञासा, मङ्गलत्वान्मङ्गलमिति वा सङ्गच्छते । इष्टफलत्वादधिकर्तव्या जिज्ञासा मङ्गलं वेति तु सङ्गच्छते । न चैवमप्रकृतविषयत्वं प्रकृतविषयत्वे संभवति

रत्नतूलिका

प्रकृतादर्थान्तरपरत्वे तु तथैव शब्देन बोधनीयमिति अर्थान्तरस्याप्यथशब्दार्थान्तर्भावात् गौरवमिति वैषम्यमिति भावः । अथशब्दस्य प्रश्नपरत्वे किं ब्रह्मजिज्ञासा कर्तव्येत्यर्थः स्यात् , तच्चानुपपन्नम् ; सा कर्तव्येति प्रतिवचनानुपलम्भादित्याह—नापि प्रश्नपरत्वमिति । असंशयपदत्वादिति । न्यायसूचनेन सन्दिग्धार्थसाधनाय हि सूत्रस्य प्रवृत्तिः । तत्र च विषयप्रयोजनादिलाभालाभाभ्यां विचारकर्तव्यतामात्रं सन्दिग्धम् । न तु कृत्स्नैकदेशविचारकर्तव्यता ; बीजाभावात् । अतो न कार्त्स्न्यपरत्वमित्यर्थः । आनन्तर्यार्थत्वं त्वधिकारिविशेषसमर्पणमुखेन विचारकर्तव्यतासाधनोपयोगीति भावः ॥

साधारणं दूषणमाह—अपि चेति । अप्रकृतविषयत्वकल्पने हेतुगर्भं विशेषणं—हेतुपरः सन्निति । तत्राप्रयोजकत्वमाशङ्क्याह—प्रकृतविषत्व इति । तस्य अधिकर्तव्यत्वादेः । तत्रैव अधिकर्तव्यत्वादावेव । तथा च हेतूच्छित्तिरेव बाधकस्तर्क इति भावः । अप्रकृतविषयत्वे तु तदेव दूषणमिति वक्तुं तत्र पूर्वोक्तानन्वयो नेति दर्शयति—इष्टफलत्वादिति । प्रकृतविषयत्वे संभवतीति । यद्यप्यानन्तर्यार्थत्वेऽप्यथ-

युक्तमाश्रयितुम्। तस्माद्युक्तं "अथशब्द आनन्तर्यार्थः परिगृह्यते" इति॥

## अथशब्दस्वारस्यभङ्गः

यत्त्वथशब्दस्य स्वारस्यमानन्तर्यार्थत्वे हेतुरुच्यते, तदालोचनीयम्; सर्वत्र प्रसिद्ध्यविशेषे किं नाम स्वारस्यमिति।

## रत्नतूलिका

शब्दोपात्तस्यानन्तर्यस्य न हेतुत्वम्, नानन्तर्याद्ब्रह्मजिज्ञासा कर्तव्येति शक्यं वक्तुम्, किं तु ब्रह्मजिज्ञासाक्षिप्तानन्तर्यप्रतियोगिविशेषस्य साधनचतुष्टयस्यैवातःशब्देन परामर्श इत्यप्रकृतविषयत्वम्, तथापि परादिशब्दवत्सापेक्षानन्तर्यादिप्रतिपादकस्याथशब्दस्य तत्प्रतीतिपर्यवसानाय परिकरत्वेन नियमेनानन्तर्यप्रतियोगिविशेषोपस्थापकत्वान्नातीवाप्रकृतपरत्वम्। अधिकाराद्यर्थत्वे तु नैवमिति वैषम्यमिति भावः। एवमथशब्दस्यानेकार्थत्वाद्विनिगमकाभावेन प्रकृते कोऽर्थः स्वीकार्य इति विप्रतिपत्त्या सूत्रस्थपदान्तरसमभिव्याहारमात्रेण च तन्निरासायोगाद्व्याख्यानेनैव विशेषप्रतिपत्तौ हेत्वन्तरैरितरनिरास इति भाष्ये व्याख्यानं युक्तमित्युपसंहरति—**तस्मादिति**।

एवं स्वमते विप्रतिपत्त्यन्यथाप्रतिपत्तिनिरासकत्वेन व्याख्यानसाफल्यमुक्त्वा, परमते तद्वैयर्थ्यं वक्तुं तदुक्तमनुवदति—**यत्त्वथशब्दस्येत्यादिना**। किं प्रसिद्धिमात्रं स्वारस्यं किं वा प्रचुरा सेति विकल्प्याद्य आह—**सर्वत्रेति**। **प्रसिद्ध्यविशेषे** प्रयोगाविशेष

**प्रसिद्धिप्राचुर्यादानन्तर्ये शीघ्रप्रत्यय इति चेत्किमर्थं तर्ह्यथशब्द आनन्तर्ये भवतीति वचनम्। प्रथमतरप्रतीतानन्तर्यव्यवधाना-दर्थान्तरस्याप्राप्तावनिराकार्यत्वात्। वृत्तविशेषाप्रतीत्या प्रसिद्धि-प्राचुर्ये सापवादे प्राप्तिरर्थान्तरस्यापीति चेत्, कुतः पुनरिदानीं वृत्तविशेषलाभः। उत्तरभागविचारपरब्रह्मजिज्ञासापदसामर्थ्येन**

## रत्नतूलिका

इत्यर्थः। द्वितीयमाशङ्कते—**प्रसिद्धिप्राचुर्यादिति**। प्राचुर्य-माधिक्यम्। अर्थप्रत्यायने विशेषापादकतयैव तस्य स्वारस्यरूपता, नान्यथेत्यतस्तद्दर्शयति—**शीघ्रप्रत्यय इति**। यथा गोशब्दस्य किरणाद्यनेकार्थत्वेऽपि सास्नादिमद्व्यक्तिविशेषे प्रसिद्धिप्राचुर्याज्झटिति तदुपस्थापकता तद्वदिति भावः। **किमर्थं तर्हीति**। प्रथम-प्रतीतानन्तर्येणैवार्थान्तरप्रतीतिनिरोधान्निरसनीययोर्विप्रतिपत्त्यन्यथाप्रति-पत्त्योरभावादित्यर्थः। **वचनमिति**। भवदीयभाष्य इति शेषः। नन्वसत्यपवादे प्रचुरप्रसिद्धेर्झटित्यर्थोपस्थापकता, अत्र चापवादोऽ-स्तीति शङ्कते—**वृत्तविशेषेति**। **कुतः पुनरिति**। कर्मविचारस्य विवेकादेरिव सूत्रमूलविचारविधिवाक्येषु श्रवणस्य ब्रह्मविचारं प्रति हेतुत्वस्य चाभावादित्यर्थः। नन्वन्यतस्तल्लाभाभावेऽपि सूत्रे समभि-व्याहृतपदेनैव तल्लाभ इति शङ्कते—**उत्तरभागविचारेति**। ब्रह्म-विचारस्योत्तरभागविचारात्मकत्वात् वृत्तपूर्वभागकर्मविचाराक्षेपकत्वमि-त्यर्थः। नाथशब्दार्थमात्रप्रतीतिदशायामपवादप्रसक्तिः; अविशेषिता-नन्तर्यप्रतीतिमात्रे अपवादकाभावात्, [1] किंत्वितरपदार्थविशेषित-तत्प्रतीतौ, तदानीं समभिव्याहृतब्रह्मजिज्ञासापदेन वृत्तविशेषाक्षेपादपवादा-

---

[1] किं तु ब्रह्मजिज्ञासाया इतर—च.

पूर्वभागविचाररूपवृत्तविशेषस्याक्षेपादिति चेत्, तर्हि समभिव्याहृतानां संभूयकारित्वेन प्रथममेव तेन तदाक्षेपेऽर्थान्तरशङ्कानुपपत्तिः। यदपि वृत्तहेतुपरातःशब्दशिरस्कतयानन्तर्यार्थत्वनिर्णयोऽथशब्दस्येति, तदपि न, एतदुक्तं भवति, अतोऽपि न तृप्तिरित्यादावतः शब्दस्य प्रकृतिप्रत्यययोरवृत्तेऽहेतौ च प्रयोगदर्शनेन वृत्तहेतुपरत्वानिर्णयात्। यदि च वृत्तानन्तर्यपराथशब्दपूर्वकतया तन्निर्णयः, प्राप्तं तर्हीतरेतराधीनार्थनिर्णायकत्वादितरेतराश्रयत्वम्। अथ विपराभ्यां जेरात्मनेपदं विधीयते। अन्तरान्तरेण युक्ते द्वितीया। तत्र बहुविजयति वनम्, पराजयति सेना, नगरस्यान्तरा नदी, बाह्येत्यर्थः।

## रत्नतूलिका

भावेन प्रथममानन्तर्यप्रतीतावर्थान्तराप्रसङ्ग इति दूषयति—तर्हीति। एतदुक्तं भवतीति। अत्र वक्ष्यमाणपरत्वमेतच्छब्दस्येति प्रकृते वृत्तपरत्वव्यभिचारः। [1]अतोऽपि न तृप्तिरित्यादौ च सप्तम्यर्थे तसिः, इदानीमपि न तृप्तिरिति। तथा च तत्र प्रत्ययस्य हेतुपरत्वव्यभिचार इत्यर्थः।

ननु नान्योन्याश्रयः; परस्परसाहचर्येण द्वयोर्युगपदर्थनिर्णयस्य बहुशो दर्शनादित्याशङ्कते—अथ विपराभ्यामिति। वि पर इत्येताभ्यामुपसर्गाभ्यां परस्य जि जय इति धातोरात्मनेपदं भवतीति "विपराभ्यां जेः" इति सूत्रार्थः। विजयते पराजयत इत्युदाहरणम्। "अन्तरान्तरेण युक्ते" आभ्यां योगे द्वितीया भवति, अन्तरा त्वां मां च हरिः, अन्तरेण हरिं न सुखमित्युदाहरणम्।

---

[1] इतोऽपि—घ. च.

वनस्यान्तरेण वर्त्म मध्येनेत्यर्थः। एवमादावनतिप्रसङ्गाय परस्परसाहचर्यादुपसर्गौ निपातौ च निर्णीयेते। तथा गुरुभार्गवौ रामकृष्णावित्यादौ परस्परसाहचर्याद्बृहद्विशेषयोर्बलकेशवयोर्वा प्रत्ययो जायते, न स्वगुरुजामदग्न्ययोः, न वा दाशरथ्यर्जुनयोः। एवमिहापि परस्परसाहचर्यादथातः-शब्दयोरर्थविशेषप्रत्यये नान्योन्याश्रय दोष इति चेत्, मैवम्।

रत्नतूलिका

अत्र पक्षिवाचकविशब्दात्परस्य बहुविजयतीत्यत्रत्यस्य, उत्कर्षवाचकपराशब्दात्परस्य पराजयति सेनेत्यत्रत्यस्य च जयतेरात्मनेपदं मा भूदित्युपसर्गयोरेव विपरयोर्ग्रहणम्, नगरस्यान्तरा नदी, वनस्यान्तरेण वर्त्मेत्यादौ निपातभिन्नान्तरेणशब्दयोगे नगरवनशब्दाभ्यां द्वितीया मा भूदिति निपातयोर्ग्रहणं च वक्तव्यमित्यर्थः। पाठविशेषोपाधिनाऽर्थविशेषोपाधिना वान्यत्र ज्ञातसाहचर्यनियमयोः पदयोः सहश्रवणं पूर्वावगतसाहचर्यस्मरणेन द्वयोः पूर्वावगतार्थविशेषव्यवस्थापकम्। उदाहरणेषु, विपरयोरुपसर्गेषु, अन्तरान्तरेणशब्दयोर्निपातेषु, गुरुभार्गवशब्दयोर्गणितशास्त्रे, रामकृष्णशब्दयोः पुराणेषु च साहचर्यप्रसिद्धेस्तेषामन्यत्र सहश्रवणं व्यवस्थापकम्। न चेह तथानन्तर्यार्थाथशब्दस्य वृत्तहेतुभावपरातःशब्दस्य च नियतं साहचर्यं पूर्वप्रसिद्धम्। "अथातो धर्मजिज्ञासा" इत्यादेरपि तुल्यन्यायतया इदानीमनिर्णीतार्थत्वान्नात्रत्यसाहचर्यमर्थविशेषव्यवस्थापकमिति दूषयति—मैवमिति।

न ह्युदाहरणेषु तदेव कार्यकालं साहचर्यं साक्षादेव तत्तद्विशेषनिश्चयहेतुः, किं तूपसर्गेषु निपातेषु गणितशास्त्रे पुराणादौ च तत्तद्विशेषनियतसाहचर्यानुस्मरणद्वारेणैव। अन्यथा सन्देह एवेति व्याख्यानतो विशेषप्रतिपत्तिर्नान्यथा। अत एव भाष्ये लक्षणप्रतिपदोक्तपरिभाषा अन्यतरानिर्णयो वातिप्रसङ्गपरिहारायोपन्यस्यते "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव" इति, "अथ वान्तरेणशब्दो दृष्टापचारः, अयं तु खल्वन्तराशब्दोऽदृष्टापचार" इत्यादिना। यद्यप्ययमपि दृष्टापचारः अन्तरायां पुरीति, तथापि निर्णीतान्यतरसाहचर्यादेवान्यतरानिर्णयो न तु साहचर्यमात्रादित्यभिप्रायः। प्रकृते तु लक्षणप्रतिपदोक्तपरिभाषैव निर्णयहेतुः। न चैवमथातःशब्दयोरर्थनिर्णयहेतुरस्ति स्वसामर्थ्यादन्यत्र।

## रत्नतूलिका

**कार्यकालमिति।** कार्यमर्थविशेष[1]निर्णयादि तस्य काल एव कालो यस्य तदित्यर्थः। **अत एवेति।** यतः साहचर्यस्यार्थानिर्णायकत्वं, "द्वित्रिश्चतुरिति कृत्वोऽर्थे" इति सूत्रे द्वित्रिरिति सुजन्तशब्दसहपठितचतुर्शब्दस्य कृत्वोऽर्थनिर्णयसंभवेऽपि कृत्वोऽर्थ इति ग्रहणाल्लिङ्गात्, अत एवेत्यर्थः। अन्यतरनिर्णयस्यातिप्रसङ्गभङ्गनियामकत्वपरं भाष्यमुदाहरति—**अथवेति। दृष्टापचारः** दृष्टव्यभिचारः। अथ वेत्यादिभाष्यमाक्षिपति—**यद्यपीति।** नान्तराशब्दस्यादृष्टव्यभिचारित्वेऽभिप्रायो भाष्यकृतः, किं तु कृत्वाचिन्तया न्यायप्रदर्शनमात्र इति परिहरति—**तथापीति।** तर्हि [2]प्रकृते न निर्णय इत्यत आह—**प्रकृते त्विति।** [3]आबन्तान्तराशब्दस्य श्वान्तान्तरेण-

---

[1] निर्णयः—घ. कुं. [2] प्रकृते केन—कुं. च. [3] टाबन्त—च. कुं.

यत्त्वथशब्द आनन्तर्यार्थः स्वस्वारस्यात् अतःशब्दस्वारस्याच्च, अतःशब्दो वृत्तहेतुभावपरः ; स्वस्वारस्यादथशब्दस्वारस्याच्चेत्युच्यते, न तु परस्परार्थनिर्णय इति नान्योन्याश्रय इति, तन्न; परशब्दस्वारस्यं हि न साक्षात्परशब्दार्थनिर्णयहेतुः, किं तु स्वार्थनिर्णयद्वारा । तत्र च तदेवानिवार्यमन्योन्याश्रयत्वम् । अपि च स्वारस्यशब्दितात्प्रसिद्धिप्राचुर्यादतःशब्दस्य वृत्तहेतुपरत्वानिर्णये च व्यर्थं "अतः शब्दो वृत्तस्य हेतुभावे" इति वचनम् । यदपि ब्रह्म-

## रत्नतूलिका

शब्दस्य च लक्षणमुखेन ज्ञेयत्वात् निपातेषु प्रतिपदोक्तान्तरादिशब्दापेक्षया प्रतीतिगौरवमिति परिभाषैवेत्यर्थः ।

अन्योन्याश्रयपरिहारं परोक्तं दूषयितुमनुवदति—यत्त्विति । न त्विति । अतःशब्दार्थनिर्णयेन नाथशब्दार्थनिर्णयं वदामः ; येनान्योन्याश्रयः स्यात्, किं त्वथशब्दस्यार्थनिर्णयदशायामतःशब्दस्वारस्यानुरोध्यर्थो [1]गृहीत इति भावः । स्वारस्यं नाम प्रसिद्धिप्राचुर्यम्, तच्चातःशब्दनिष्ठं न साक्षादथशब्दार्थनिर्णयहेतुः ; किं त्वतःशब्दार्थमवधार्याथशब्दस्य तदनुरोध्यर्थनिर्णयहेतुरित्यन्योन्याश्रय इति दूषयति—तन्नेति । एवमथशब्दस्य स्वस्वारस्यादतःशब्दस्वारस्याच्चानन्तर्यार्थतेति परोक्ताभ्युच्चययुक्ती निरस्य प्रसिध्द्यपवादनिरासाय ब्रह्मजिज्ञासापदसामर्थ्याद्वृत्तविशेषलाभ इति तदीयमूलयुक्तिं दूषयितुमनुवदति—यदपीति । किमुत्तरभागविचारत्वेन वृत्तपूर्वभाग-

---

[1] गृह्यते—च.

जिज्ञासापदसामर्थ्येन पूर्वभागविचाररूपवृत्तविशेषाक्षेप इति। तदपि न; उत्तरभागविचारत्वप्रत्ययो हि पूर्वभागविचारसत्तामात्रमाक्षिपति, पूर्वोत्तरभावस्य सावधिकत्वात्। तस्य वृत्तत्वाक्षेपस्तु कुतस्त्यः। उत्तरभागविचारस्य सहेतुकत्वप्रतिपत्तेरिति चेत्, एवं तर्हि कार्यत्वाद्वृत्तं कारणमाक्षिपतु, किमुत्तरभागविचारत्वरूपसामर्थ्यवर्णनेन।

न चोभयसामर्थ्येन पूर्वविचारमेव वृत्तं हेतुमाक्षिपतीति युक्तम्; अथशब्दस्यानन्तर्यार्थत्वासिद्धौ कार्यत्वस्यैव ब्रह्म-

रत्नतूलिका

विचाराक्षेपकत्वं, उत कार्यत्वेन, आहोस्वित्कार्यत्वे सति तत्त्वेनेति त्रेधा विकल्प्याद्यं दूषयति—उत्तरभागविचारत्वेति। द्वितीयमाशङ्कते—उत्तरभागविचारस्येति। तर्हीति। न चेष्टापत्तिः; तथा सति योग्यकारणान्तराक्षेपेणाप्यानन्तर्यप्रतीतिनिर्वाहसंभवान्न त्वदभिमतवृत्तविशेषाक्षेप इति भावः।

तृतीयमाशङ्क्य निषेधति—न चोभयेति। एवमपि न कर्मविचारस्य वृत्तत्वसिद्धिः, कार्यत्वात्कारणं किंचिदाक्षिपतु, उत्तरभागविचारत्वाच्च पूर्वभागविचारसत्ताम्। न तावतापि पूर्वभागविचारस्य वृत्तत्वलाभः। यस्यकस्यचित्कारणस्य पूर्वभागविचारस्य च सिद्धिमात्रे विशिष्टहेतोश्चारितार्थ्यादिति दूषणं स्पष्टत्वादुपेक्ष्य दूषणान्तरमाह—अथशब्दस्येति। आनन्तर्यार्थत्वे खलु यत्किंचिदानन्तर्यस्यावक्तव्यत्वाद्वृत्तानन्तर्यं पर्यवस्येत्। ततश्च कार्यत्वं सिध्यति, न [1]त्वसदर्थत्व इत्यर्थः। ननु प्रचुरप्रसिध्याथशब्दस्यानन्तर्याभिधायकत्वमित्याशङ्क्योक्तं

---

[1] त्वदर्थत्व—क. च.

जिज्ञासायामप्रतिपत्तेः। वृत्तविशेषाक्षेपाभावे च तत्र तस्या-नन्तयार्थित्वासिद्धेः। उत्तरभागविचारत्वेन पूर्वभागविचार-सत्तामात्राक्षेपेऽपि तस्य तदानन्तर्यपरत्वनिर्णयासंभवात्, आनन्तर्यप्रत्ययस्य वृत्तत्वप्रत्ययसापेक्षत्वात्। तस्य चानन्तर्य-प्रत्ययाधीनत्वादसंभव उक्तः। तस्माद्यत्किंचिदेतत्।

### आनन्तर्यप्रतियोगिनिरूपणम्

अथ कस्मादानन्तर्यमथशब्देनोपदिश्यते ! ब्रह्मजिज्ञासा-प्रवृत्तिहेतुभूतात्पूर्ववृत्तादिति ब्रूमः। अथ तदेव निर्वक्तव्यम्।

### रत्नतूलिका

मा विस्मार्षीरित्याह—वृत्तविशेषेति। तत्रेति। वृत्तविशेषलाभे प्रसिद्धि-[1]प्राचुर्यस्यापि सापवादत्वं वदत इत्यर्थः। ननूक्तरीत्योत्तरभागविचारा-क्षिप्तपूर्वभागस्यैव वृत्तविशेषत्वात्तदानन्तर्यमथशब्देनोच्यतामित्यत आह—उत्तरभागविचारत्वेनेति। सत्तामात्रेति मात्रशब्देन वृत्तत्वं व्यावर्त्यते, न वृत्तविशेषज्ञानमात्रेण तदानन्तर्यं ज्ञातुं शक्यते, किं तु तत्र वृत्तत्वज्ञानेन, तज्ज्ञानं चोत्तरभागविचारे कार्यत्वज्ञानाधीनमित्यन्यो-न्याश्रयादसंभव उक्त इत्याह —आनन्तर्यप्रत्ययस्येति॥

अथ कस्मादिति। ब्रह्मजिज्ञासापदसामर्थ्याक्षिप्तस्यानन्तर्य-प्रतियोगित्वनिरासादन्यस्य च तादृशस्य सूत्रोपात्तस्याभावादिति प्रश्नार्थः। सूत्रे अनुपादानेऽपि योग्यतादिना तल्लाभ इत्याह—ब्रह्मजिज्ञासेति। नन्वन्वयव्यतिरेकाभ्यां यथा विवेकादेः प्रवृत्तिहेतुत्वेनाधिकारिविशेषण-त्वमेवं जिज्ञासाया अपीति सापि विशेषणत्वेनोपादेयेत्यत आह—

[1] प्राचुर्यस्य सापवादत्वं—च. कुं.

निरुक्तमेव भगवता भाष्यकृता—"नित्यानित्यवस्तुविवेकः, इहामुत्रार्थभोगविरागः, शमदमादिसाधनसम्पत् , मुमुक्षुत्वं च" इति । जिज्ञासा तु मुमुक्षुत्वानुषङ्गसिद्धेति न पृथगुक्ता ।

नन्नु किमर्थमिदमुपदिश्यते, विवेकादिमतो मोक्षमाणस्य स्वत एव तत्साधनजिज्ञासाविचारप्रवृत्त्यादिसिद्धेरिति चेत् , सत्यम् ; किंत्वयमधीतवेदवेदाङ्गो नित्यादीनि यावज्जीवादि-विधिप्रयुक्त्या नियतानुष्ठानानि प्रतिपद्य तदनुष्ठानसीमा-नभिज्ञतया समुपजातमुमुक्षाजिज्ञासोऽपि [1]ब्रह्मज्ञानेन कर्मणामनु-

रत्नतूलिका

जिज्ञासा त्विति । "ब्रह्मविदाप्नोति परम्" इत्यादिनाऽऽत्मज्ञानस्य मोक्षहेतुत्वावगमान्मुमुक्षायां सत्यां जिज्ञासापि तदनुषक्ताऽवश्यं भवतीति साप्युपात्तप्रायेत्यर्थः ।

नन्वस्तु विवेकादेः प्रवृत्तिहेतुत्वेनाधिकारिविशेषणत्वम् ; तथापि सूत्रे तदानन्तर्यकथनं व्यर्थम् ; तदकथनेऽपि सति हेतौ कार्यसंभवादिति शङ्कते—नन्विति । सत्यमन्यत्र साधनानन्तर्यस्याकथनेऽपि सति [2]साध्यं भवतीति, प्रकृते तु कर्माननुष्ठाने प्रत्यवायभीत्या ब्रह्मविचार-प्रवृत्तिरेव नोत्पद्येतेति प्रतिबन्धकनिवृत्तये हेत्वानन्तर्यमवश्यवाच्यमित्य-भिप्रेत्य परिहरति—सत्यमित्यादिना । यावज्जीवादीति । "यावज्जीवमग्निहोत्रं जुहोति, दर्शपूर्णमासाभ्यां यजेत, अहरहः सन्ध्यामुपासीत" इत्यादि विधिप्रयुक्त्येत्यर्थः । नियतमनुष्ठानं येषां तानि नित्यनैमित्तिकानीत्यर्थः । ननु ब्रह्मविज्ञानस्य कर्तृदेवतासंस्कार-द्वारा कर्मोपकारकत्वात्कर्मार्थतयैव ब्रह्मविचारे प्रवर्ततामित्यत आह—ब्रह्मज्ञानेनेति । निर्विशेषात्मज्ञानस्य तत्संस्कारत्वाभावादिति भावः ।

---

[1] ब्रह्मविज्ञानेन—ङ. [2] साधनसाध्यं—घ. साधने साध्य—कुं.

**पकारमुपमर्दं च संभावयन् तदकरणनिमित्तप्रत्यवायपरिहारायोज्झित्वा मोक्षतत्साधने, कर्मस्वेव प्रविवृत्सुर्ब्रह्मजिज्ञासायां नाधिक्रियेत। तन्मा भूदिति तदुपदेशः।**

**तथा च सति मुमुक्षाजिज्ञासोदय एव कर्मानुष्ठानावधिरित्यतोऽवसिताधिकारतया जीर्णस्येव तदकरणेऽपि प्रत्यवायाभावं प्रतिपद्यमानस्य निरन्तरायमनन्तरं विचारप्रवृत्तिरुपपद्यत इति।**

विवेकाद्यानन्तर्यनियमहेतुः

**अथ कथमुक्तानन्तर्यमेवाथशब्देनोपादिश्यते, न कर्मविचारानन्तर्यम्; संभवात् सामर्थ्यात् ब्रह्मविचारविधिप्रदेशेषु श्रवणाच्चेति वदामः। न च धर्मविचारस्य ब्रह्मविचारात्प्रा-**

रत्नतूलिका

न केवलमुपकाराभावः; अपि तूपमर्दोऽपीत्याह—**उपमर्दं चेति। प्रविवृत्सुः।** प्रवर्तितुमिच्छुः।

तदुपदेशे प्रतिबन्धकापगमात्तत्प्रवृत्तिरित्येतदुपपादयति—**तथा च सतीति। मुमुक्षेति।** तदानुषङ्गिकजिज्ञासोदय इत्यर्थः। केवलजिज्ञासायाः कर्माधिकाराभावाप्रयोजकत्वादिति भावः। **अवसिताधिकारतया**—समाप्ताधिकारतया। **जीर्णस्येवेति।** यथा "त्रिंशतं वा वर्षाणि जीर्णो वा विरमेत्" इति शास्त्रेण जीर्णस्य दर्शपूर्णमासाननुष्ठानेऽपि न प्रत्यवायः, तस्यानधिकारादिति, तथा मुमुक्षोरपि न प्रत्यवाय इति ज्ञातवत इत्यर्थः॥

**संभवादिति।** नियतपूर्ववर्तित्वादित्यर्थः। **ब्रह्मविचारविधिप्रदेशेष्विति।** आनन्दमीमांसायामुत्तरोत्तरानन्दोत्कर्षप्रति-

ग्भावनियमसंभवः, न वा सामर्थ्यम्, नापि विधिप्रदेशेषु श्रवण-मिति। तदिदमुक्तं भाष्ये—"तेषु हि सत्सु प्रागपि धर्मजिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च, न विपर्यये" इति। धर्मजिज्ञासाया ऊर्ध्वं च तेषु हि सत्स्विति विवेकादिपूर्वभावनियम उक्तः, धर्मजिज्ञासायाः प्रागपीति तस्या अनियतत्वम्, सत्सु तेषु शक्यते न विपर्यय इति अन्वयव्य-तिरेकाभ्यां सामर्थ्यम्, धर्मजिज्ञासाया ऊर्ध्वं च न विपर्यय इति तस्या असामर्थ्यं चोक्तं भवति। हिशब्देन च प्रसिद्धिपरेण विवेकादेर्विधिप्रदेशेषु श्रवणं सूच्यते। अर्थादितरत्र तदभावश्चेति॥

## अतश्शब्दार्थः

अतश्शब्दो हेत्वर्थः। ननु यत्किंचिदानन्तर्यमवक्तव्यम्, हेत्वानन्तर्यपरे चाथशब्दे हेतुरर्थसिद्ध इति किमतश्शब्देन, नैवम्; अथशब्दाक्षिप्तहेत्वासिद्धिशङ्कापरिहारार्थत्वात्। ननु न

### रत्नतूलिका

पादनस्य पूर्वपूर्वापकर्षनान्तरीयकतयाऽर्थाद्विवेकस्य तत्रैव "श्रोत्रि-यस्य चाकामहतस्य" इत्यकामहतत्वलक्षणवैराग्यस्य, कठवल्ल्यां च विषयविरक्तस्य नचिकेतसो विद्योपदेशदर्शनेन च वैराग्यस्य, "प्रशान्त-चित्ताय शमान्विताय" इत्यादौ शमादेश्च श्रवणादित्यर्थः। हेतुत्रयं भाष्यारूढं करोति—धर्मजिज्ञासाया ऊर्ध्वं च तेष्वि-त्यादिना।

किं विवेकादेर्हेतोः स्वरूपासिद्धिशङ्कायां तत्परिहारार्थत्वमत-श्शब्दस्य, उत हेतुत्वासिद्धिशङ्कायामिति विकल्पं मनसि निधायाद्यं दूषयितुमाशङ्कते—ननु न तावदिति। स्वरूपासिद्धिशङ्का च

**तावद्विवेकादेः स्वरूपासंभवशङ्का संभवति; विवेकादिमदधिकारिणो जिज्ञासोपदेशे तस्यैव स्वानुभवसिद्धतदसंभवशङ्कानुपपत्तेः, न च तटस्थशङ्कापीह निराकार्या; अधिकारिणो विधिप्रतिपत्त्यविघातात्।**

**न चानेनैव विवेकादिराधीयते; प्रागधिकाराज्ञाने तत्राप्रवृत्तेः, अधिकारिणः प्रवृत्तिः प्रवृत्तस्याधिकार इतीतरेतराश्रया-**

## रत्नतूलिका

किमधिकारिणः, उत तटस्थस्येति द्वेधा विकल्प्याद्य आह—**विवेकादिमदधिकारिण इति।** द्वितीय आह—**न च तटस्थेति।** **इह**—सूत्रे। कुत इत्यत आह—**अधिकारिण इति।** तटस्थस्य शङ्कायामप्यधिकारिणः स्वानुभवसिद्धे तस्मिन्नासिद्धिशङ्काभावात्, सूत्रस्य च [1]तत्प्रवृत्तिसिध्द्यर्थत्वादित्यर्थः।

ननु नानेन कस्यचिद्विवेकादिस्वरूपासिद्धिशङ्का निराक्रियते, किं तु विवेकादिहेतुत्वपरेणातश्शब्देन विवेकादेरवश्यसम्पादनीयत्वज्ञानद्वारा विवेकादिरेव पुरुषस्याधीयत इत्याशङ्क्य निषेधति—**न चानेनैवेति। प्रागिति।** शास्त्रे प्रवृत्तेः प्रागित्यर्थः। अस्य सूत्रस्यापि शास्त्रान्तर्गतत्वादिति भावः। ननु प्रवृत्त्यनन्तरमेव तज्ज्ञानमस्त्वित्यत आह—**अधिकारिण इति।** तथा सति विचारप्रवृत्तेः पूर्वमधिकारिविशेषणीभूतविवेकादिर्नास्तीति फलितम्। ततश्च शास्त्रे प्रवृत्तस्यातश्शब्दवशेन विवेकाद्याधानं, आहिते च तस्मिन् शास्त्रे प्रवृत्तिरित्यन्योन्याश्रय इत्यर्थः। नन्वधिकारिविशेषणस्य विवेकादेर्न विधिरस्ति, येन तत्रासंभवशङ्कायां तन्निवृत्त्यर्थमतश्शब्दः स्यात्, किं तु सिद्धं स्वर्गकामादिकमुद्दिश्य ज्योतिष्टोमादिविधिरिव विवेकादिमतो विचार-

---
[1] तत्प्रसिध्द्यर्थ—कुं.

पातात् । विवेकादेरनुष्ठेयतयाऽङ्गत्वमपीति तद्विधावसंभवशङ्का स्यादिति न च शङ्क्यम् ; तथाप्यतद्विधिविषयत्वेनास्य सूत्रस्य तत्संभवसाधने अर्थान्तरत्वात् ।

अथ सतोऽपि विवेकादेर्हेतुत्वासंभवशङ्केति चेत्, कुतः पुनरेषा शङ्का, न खलु हेत्वन्तरश्रवणं तन्निषेधो वा क्वचिदुपलभ्यते । "यस्माद्वेद एवाग्निहोत्रादीनां श्रेयःसाधनानामनित्यफलतां दर्शयति" इत्यादिभाष्यविरोधाच्च । तत्र विवेकादिस्वरूपासंभवशङ्कासमाधानं हि गम्यते। तस्मादतश्शब्दो

रत्नतूलिका

विधिरित्याशङ्कानिरासायाह—अङ्गत्वमपीति । शौचादिवदुभय-[1]रूपत्वामिति विधिरस्तीति भावः । अस्त्वनुष्ठेयतया तत्र विधिः, अथापि न तत्रासंभवशङ्का ; सागरं तरेत्यादिवदशक्यार्थत्वादिरूपबीजाभावादित्याह—इति न च शंक्यमिति । अङ्गीकृत्याप्याह—तथापीति ।

विचारविधिविषयकमिदं सूत्रम्, ततश्च विचारप्रवृत्तिहेतुभूतविवेकादेरेवासंभवोऽनेन परिहरणीयो न तु विवेकादिविध्यसंभवः ; अतद्विषयत्वात्सूत्रस्य । अन्यथा अर्थान्तरतापत्तेरित्यर्थः । महाविकल्पे द्वितीयमाशङ्कते—अथ सतोऽपीति । तन्निषेधो हेतुत्वनिषेधः । दूषणान्तरमाह—यस्मादिति । स्वरूपासंभवेति । श्रेयस्साधनानामनित्यफलताप्रतिपादनेन ज्ञानफलं नित्यं कर्मफलमनित्यमिति विवेक एवासंभवी ; कर्मफलानामपि नित्यत्वादित्याशङ्का समाधीयत इति गम्यत इत्यर्थः । नानेन विवेकादेः स्वरूपासिद्धिशङ्का हेतुत्वासिद्धि-

[1] रूपमिति—क

हेत्वर्थ इत्ययुक्तमिति। उच्यते—अधीतवेदमात्रस्य तावदापाततोऽस्ति नित्यानित्यवस्तुविवेकादिः, किं तु धर्मापवर्जितपापतमःपिधानतया कर्मब्रह्मकाण्डयोः "अपाम सोमममृता अभूम," "य एवं वेद प्रतितिष्ठति;" "अन्नवानन्नादो भवति," "अग्निहोत्रं जुहुयात्स्वर्गकामः," "ज्योतिष्टोमेन स्वर्गकामो यजेत," "तमेवं विद्वानमृत इह भवति," "तमेव विदित्वातिमृत्युमेति" इत्यव्यवस्थितनित्यानित्यफलश्रवणेऽपि

रत्नतूलिका

शङ्का वा व्यावर्त्यते, किं तु विवेकादिना श्रवणे प्रवृत्तस्य तद्वार्व्यापादनं क्रियत इति सिद्धान्तयति—उच्यत इत्यादिना। नन्वधीतमात्रादविचारिताद्वेदादापादितस्य विवेकस्य न वैराग्यादिद्वारा ब्रह्मविचारप्रवृत्तिहेतुत्वं, तस्याव्यवस्थितत्वादित्याशङ्कते—किं त्विति। यद्यप्यविचारितवेदात्कर्मज्ञानफलनित्यानित्यत्वे अव्यवस्थिते एव प्रतीयेते, तथापि सुकृतातिशयेन निवृत्तपापस्य ज्ञानफलनित्यत्व एवोत्कटतमसंभावना भवतीति परिहरति—धर्मापवर्जितेत्यादिना। "धर्मेण पापमपनुदति" इत्यादिश्रुतेरिति भावः। तमःपिधानतया भवत्युत्कटतमा संभावनेत्यन्वयः। अव्यवस्थया श्रवणं दर्शयति—**अपाम सोममिति**। अत्र सोमपानस्यामृतत्वं फलं मन्त्रलिङ्गात्प्रतीयते। "य एवं वेद प्रतितिष्ठति" इत्यादौ ज्ञानस्य प्रतिष्ठाद्यनित्यफलत्वम्। अग्निहोत्रादिवाक्यश्रुतस्य स्वर्गस्य साधनतारतम्योन्नीततारतम्यवत्त्वादनित्यत्वम्। "तमेवं विद्वान्" इत्यादौ ज्ञानफलस्य नित्यत्वमित्यव्यवस्थेत्यर्थः। निर्मलचित्तस्यापि संभावनाया

" तद्यथेह कर्मचितो लोकः क्षीयते " इत्याद्यविशेषितकर्मफलानित्यत्वमधीयानस्य क्वचिदपि ब्रह्मविज्ञानफलानित्यत्वाध्ययनशून्यस्य कर्मफलानित्यत्वे ज्ञानफलनित्यत्वे च भवत्युत्कटतमा संभावना ।

एवंरूपविवेकेनैव यदि किंचिदपास्ताशेषाशिवममृताख्यं फलमश्नुवीय, अलमवर्जयीयदुरितभूयिष्ठेन कर्मफलेनेत्येवं विरज्य शमादिसम्पत्त्या प्रव्रजितस्य मुमुक्षोर्ब्रह्मजिज्ञासायां प्रवृत्तस्य तदशैथिल्याय विवेकादिदार्ढ्यमापादयितुं प्रागेव संभावितकर्मफलानित्यत्वोपपादकन्यायोऽतश्शब्देन सूच्यते । प्राग्ब्रह्मजिज्ञासाप्रवृत्तेरूर्ध्वं च विवेकवैराग्यादितारतम्योपपत्तेः । अत एव हि प्रवृत्तस्य वैराग्यदार्ढ्याय रंहतिपाद आरभ्यते ।

रत्नतूलिका

उपपत्तिसापेक्षत्वाचां दर्शयति—तद्यथेहेत्यादि । अविशेषितेत्यनेन उपासनासाध्यस्य ब्राह्मलौकिकफलस्याप्यनित्यत्वम्—

" आब्रह्मभवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन "

इत्यादिशास्त्रसिद्धमभिप्रैति । अविचारितवेदापादितविवेकस्य न विचारप्रयोजकतेति दोषो नेदानीमित्याह—एवं रूपेति । उत्कटतया संभावितं नित्यफलमवलम्ब्येतरत्र वैराग्यमिति भावः । ननु प्रवृत्तेः पूर्वं जातस्य विवेकादेः पुनः सम्पादनायोगात्किमतश्शब्देन न्यायसूचनेनेत्यत आह—प्रागिति । पूर्वं संभावनारूपस्य सिद्धत्वेऽपि निश्चयरूपस्य तस्य प्रवृत्त्यनन्तरं सम्पादनं [1] व्यक्तिभेदादिति भावः । अत एवेति । यतस्तारतम्यमित्यर्थः ।

---

[1] वृत्तिभेदा—कुं.

**तदयमर्थः—कर्मफलनित्यत्वशङ्काकलङ्कशूकोऽपि नानुवर्तितव्यः; येन मात्रयापि विवेकादिशैथिल्ये ब्रह्मजिज्ञासाप्रवृत्तिकातर्यमापद्येथाः। नापि ज्ञानफलानित्यत्वसंभावनातुषोऽपि कल्पयितव्यः; "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते," "जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति," "अनेवंविन्महत्पुण्यं करोति तद्धास्यान्ततः क्षीयते" इति कर्मफलानित्यत्वश्रवणात्। यत्क्रियते व्यावर्तते वा तदनित्यमिति न्यायोपबृंहितत्वात्। अल्पाधिककर्माभ्यासविधिसामर्थ्येन च तदनित्यत्वावगमात्। "अक्षय्यं ह वै चातुर्मास्ययाजिनः**

रत्नतूलिका

ननु "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिना कर्मफलनित्यत्वश्रवणे सति कथं तदनित्यत्वन्यायोपहार इत्यतस्तदुपहारमुखेन विवेकादिदार्ढ्यापादनप्रकारमुपपादयति—**तदयमर्थ इति।** **व्यावर्तते वेति।** न चैवमाकाशादौ व्यभिचारः; तेषामपि [1]पक्षसमत्वादिति भावः। **अल्पाधिकेति।** एकस्मिन्स्वर्गे अल्पाधिकयोरग्निहोत्रज्योतिष्टोमयोर्विधिसामर्थ्येन तेषामेवाभ्यासविधिसामर्थ्येन चेत्यर्थः। **तदनित्यत्वावगमादिति।** साधनस्वरूपतारतम्येनाभ्यासतारतम्येन च फले तारतम्यं कल्प्यम्। अन्यथा लघूपायेन सकृदनुष्ठितेनैव तत्सिद्धौ गुरूपायानुष्ठानमभ्यासश्च न स्यात्। ततश्चानित्यत्वावगम इत्यर्थः। नन्वक्षय्यादिवाक्यैः सत्प्रतिशब्दत्वान्न कर्मफलानित्यत्वावगम इत्यत आह—**अक्षय्यं ह वा इति।** ननु वर्तमानापदेशेऽपि "उपरि हि देवेभ्यो धारयति" इत्यादाविव विधिः

---

[1] पक्षत्वादिति—क.

सुकृतं भवति", "हिरण्यदा अमृतत्वं भजन्ते" इत्यादेश्चानुग्राहकन्यायाभावात् वर्तमानापदेशत्वात् न्यायानुगृहीतश्रुत्यन्तरविरोधे सत्यविरोधा[1]पेक्षिततदर्थविधिकल्पनायोगात् अन्यानर्थक्यप्रसङ्गाच्च गुणवादत्वात् ।

ब्रह्मज्ञानाच्च "निचाय्य तं मृत्युमुखात्प्रमुच्यते", "ब्रह्मविदाप्नोति परम्" इत्यादिपरमपुरुषार्थश्रवणात्, "अन्नवानन्नादो भवति" इत्यादेर्यथादृष्टेनैव स्तुतिमात्रपरत्वोपपत्तेः, तस्यानुषङ्गिकफलत्वेऽपि नित्यपरमफलाविघाताच्चेति ।

## रत्नतूलिका

कल्प्यतामित्यत आह—**न्यायानुगृहीतेति** । अत्र च यत्क्रियते तदनित्यमित्यादिन्यायानुगृहीताः श्रुतयः "तद्यथेह कर्मचितो लोकः क्षीयते" इत्याद्या उपलभ्यन्त इति तद्विरोधे विधिकल्पना न प्रवर्तत इत्यर्थः । **अन्यानर्थक्येति** । चातुर्मास्यादिभिरेव मोक्षरूपनित्यफलसिद्धौ फल्गुफलानामितरेषां कर्मणामननुष्ठानलक्षणाप्रामाण्यप्रसङ्गादित्यर्थः । **गुणवादत्वादिति** । गुणेन वादो गुणवादः । क्षयरहिते वस्तुनि विद्यमानेन बहुकालस्थायित्वलक्षणेन गुणेन चातुर्मास्यसुकृते अक्षय्यत्ववाद इत्यर्थः ।

नन्वस्तु कर्मफलानित्यत्वम्; तथापि नित्यफलान्तराभावात्कथं विवेकव्यवस्थेत्यत आह—**ब्रह्मज्ञानाच्चेति । यथादृष्टेनैवेति ।** ज्ञानेन स्वरूपप्रतिष्ठां प्राप्तस्य सर्वात्मत्वाल्लोके यः प्रतितिष्ठति, यश्चान्नवान्, यश्चान्नादः, स सर्वोऽप्ययमेवेति यथादृष्टेनैव स्तुतिरित्यर्थः । **आनुषङ्गिकेति ।** परमपुरुषार्थे ज्ञानेन प्राप्यमाणे तदविनाभूतक्षुद्रफलस्यापि ततः पूर्वं कंचित्कालमनुभवे बाधकाभावादिति भावः ।

---

[1] अपेक्षतदर्थ—ख.

परमते अथातः शब्दवैयर्थ्यं १

नन्वेवमतःशब्देनैव ब्रह्मजिज्ञासाहेतुसिद्धौ किमथशब्देन, न ; सर्वथैवानुपस्थितेऽतःशब्दवृत्त्यसंभवेन हेतुत्वप्रत्यया-योगात् ।

यस्य तु ब्रह्मजिज्ञासापदसामर्थ्याक्षिप्ततया बुद्धिस्थः कर्मविचारः, तस्य तत्र हेतुभावोऽतःशब्देन शक्यावगम इति ध्रुवमथशब्दवैयर्थ्यम् । यत्तु आनन्तर्योक्तिमुखेन तस्य हेतोः

रत्नतूलिका

नन्वतःशब्देन विवेकादिदार्ढ्याय तेषां हेतुत्वे प्रतिपादिते तद्बलेनैव विवेकाद्यनन्तरं कर्माननुष्ठानेऽपि प्रत्यवायो नास्तीति ज्ञानसंभवादथशब्दो व्यर्थ इति शङ्कते—नन्वेवमतःशब्देनैवेति । भवेदेवं यद्यतःशब्देन हेतुत्वप्रतिपत्तिः स्यात् , सैवानुपपन्ना ; तस्योपस्थि-तपरामर्शित्वेनानुपस्थिते तद्बोधकत्वाभावादिति परिहरति—सर्व-थैवेति । अथशब्देन साक्षादुपस्थितत्वाभावेऽपि तदर्थानन्तर्यप्रति-योगित्वेन वा [1]उपस्थितिः संभवतीत्यभिप्रेत्य सर्वथैवेत्युक्तम् ।

परमते त्वयं दोषः स्यादित्याह—यस्य त्विति । सत्यमाक्षिप्तः कर्मविचारः, तथापि तस्य ब्रह्मविचारस्य च मध्ये शास्त्रान्तरव्यवधाना-पेक्षा प्रसज्येतेति तदपेक्षाभावद्योतनायाथशब्देनानन्तर्योक्तिरिति तदीय-परिहारं दूषयितुमनुवदति—यत्त्वानन्तर्योक्तिमुखेनेति । प्रसक्त-निरासाय यत्नः कर्तव्यः, कर्मविचारस्य पूर्ववृत्तत्ववादिनो मध्ये

[1] उपस्थितिसंभवादित्यभिप्रेत्य—कुं.

शास्त्रान्तरश्रवणव्यवधिनैरपेक्ष्यद्योतनार्थोऽयमथशब्द इति, तन्न; न हि कर्मविचारपूर्ववृत्तत्ववादिनः शास्त्रान्तरव्यवधानप्रसङ्गः; येनानन्तर्याभिधायिना तन्निवर्त्येत।

ब्रह्मजिज्ञासायामनवसरग्रस्तशास्त्रान्तरसापेक्षविवेकादिपूर्ववृत्तत्वव्युदासायानन्तर्यपरोऽथशब्द इति चेत्, अहो परविद्वेषव्यसनिता परस्य, यः स्वार्थोपपत्तिनिरपेक्षं परार्थविघातायैव प्रणिधत्ते। अपि च स्वतो वा शास्त्रान्तरापेक्षया वा वृत्ते सति विवेकादावानन्तर्यं ब्रह्मजिज्ञासायामस्माकमप्यनुपहतम्।

रत्नतूलिका

शास्त्रान्तरप्रसक्तेरेवाभावान्न तन्निरासायाथशब्देनानन्तर्यप्रतिपादनमिति दूषयति—तन्न, न हीति।

ननु नास्मन्मतेऽथशब्देन कस्यचिदर्थस्योपपत्तिः क्रियते, किंतु परेण विवेकादेर्ब्रह्मविचारहेतुत्वप्रतिपादनात्तस्य चानवसरग्रस्तशास्त्रान्तरसापेक्षत्वादानन्तर्योक्तिमुखेन [1]परमतनिरासः क्रियत इत्याशङ्कते—ब्रह्मजिज्ञासायामिति। परविद्वेषेति। स्वार्थोपपत्तये कस्यचिदर्थस्य प्रतिपादने यद्यर्थात्परमतनिरासोऽपि भवति, तदा भवतु। इह तु परमतनिरासायैव यत्नकरणाद्व्यसनितेति भावः। "ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे" इति लोकोक्तिमनुस्मारयन्नाह—परस्येति। आनन्तर्योक्तिमुखेनास्मन्मतनिरासस्तदा स्यात्, यद्यस्मदङ्गीकृतहेतोर्ब्रह्मजिज्ञासायाश्च मध्ये शास्त्रान्तरव्यवधानप्रसङ्गः, स एव तु नास्ति। अस्मन्मते विवेकादिर्हेतुः, तस्य शास्त्रान्तरसापेक्षत्वानिबन्धेऽपि हेतोः पूर्वं तदपेक्षा, न त्वनन्तरम्, ततश्चाथशब्देनानन्तर्यप्रतिपादने अस्मन्मतेऽपि विवेकाद्यानन्तर्यसत्त्वान्नास्मन्मतनिरास इत्याह—अपि चेति।

[1] परमते निरासः—कुं.

वृत्ते पूर्वविचारे सत्युत्तरविचार एवानन्तरितो न शास्त्रान्तरसापेक्षविवेकाद्यवसर इत्यानन्तर्यमुच्यत इति चेन्न; कर्मविचारपूर्वभावनियमाभावेन तस्यानन्तर्यप्रतियोगित्वासिद्धेः। न च विवेकादि शास्त्रान्तरसापेक्षमेवेति वक्ष्यते।

रत्नतूलिका

भवेदेवम्, यदि विवेकादिः पूर्ववृत्तः, किंतु कर्मविचार एव, तदनन्तरं ब्रह्मजिज्ञासा कर्तव्येत्युक्त्या अनवसरग्रस्तशास्त्रान्तरसापेक्षविवेकादिव्युदास इति शङ्कते—वृत्ते पूर्वविचार इति। आनन्तर्यप्रतियोगिनो ब्रह्मविचारस्य च यदि मध्ये शास्त्रान्तरापेक्षा स्यात्तदा आनन्तर्यप्रतिपादनेन तन्निरासः स्यात्। सिद्धान्ते च न कर्मविचारस्यानन्तर्यप्रतियोगित्वम्; नियमेन पूर्व[1]वृत्तत्वाभावात्। यस्य त्वानन्तर्यप्रतियोगित्वं विवेकादेर्न तस्य शास्त्रान्तरव्यवधानप्रसङ्गः। यस्य तु तव नियमेन कर्मविचारः पूर्ववृत्तत्वादानन्तर्यप्रतियोगी न तस्य शास्त्रान्तरव्यवधानप्रसक्तिः। नियमेन कर्मविचारः पूर्ववृत्तः, अथ च विवेकादिसम्पत्तये शास्त्रान्तरापेक्षाप्यस्तीति मतं तु नास्त्येव, यस्यानन्तर्योक्तिमुखेन निरसनीयता स्यादित्यभिप्रेत्याह—न; कर्मविचारपूर्वभावेति। अस्तु वा कर्मविचारस्य पूर्ववृत्तत्वम्, तथापि न विवेकाद्यर्थं शास्त्रान्तरापेक्षा, जन्मान्तरीयसुकृतवशात्स्वत एव विवेकादेः संभवेन ब्रह्मविचारस्य कर्मविचारानन्तर्यसंभवात्, [2]ततश्चानन्तर्योक्तिमुखेनैव विवेकादिनिरास इति तृतीयं मतमङ्गीकृत्यापि परिहरति—न च विवेकादीति।

---

[1] वृत्ति—च. [2] ततश्च नानन्तर्य—च. कुं.

**एवमथशब्देनैव परस्य विवक्षितार्थसिद्धौ अतःशब्द-वैयर्थ्यम्। न हि वृत्तस्य हेतुतामनपेक्ष्यानन्तर्यमेव ब्रह्म-जिज्ञासायामथशब्दो विदधीत, येन तत्र हेतुतया तद्धेतुतापरोऽतःशब्दो युज्येत। यत्किंचिदानन्तर्यं हि न वक्तव्यम्; अनुक्तसिद्धत्वात्।**

रत्नतूलिका

एवं परमते अतःशब्देनैव विवक्षितार्थसिद्धेरथशब्दवैयर्थ्य-मुक्तम्। इदानीमथशब्देनैव तत्सिद्धेरतःशब्दवैयर्थ्यमाह—**एवमथ-शब्देनैवेति**। अतःशब्दसार्थक्यं वदता वक्तव्यम्——किं धर्म-विचारे हेतुत्वं बोधयति, किं वा हेतुभूतधर्मविचारानन्तर्ये ब्रह्मविचारस्य [1]प्रतिज्ञाने तत्र हेतुं वदति, अथवा [2]धर्मविचारहेतुत्वे, आहोस्विद्धर्म-विचारे प्रतीतहेतुभावस्यासिद्धिशङ्कां परिहरतीति विकल्प्याद्यं दूषयति—**न हीति**। **विदधीतेति**। विधानं चात्राज्ञातज्ञापनम्। अभि-दधीतेत्यर्थः। **तत्र** अथशब्दाभिधेयानन्तर्ये। **तद्धेतुतापरः** कर्म-विचारहेतुतापरः। कुत इत्यत आह—**यत्किंचिदिति**। सर्वस्यापि यत्किंचिदानन्तर्यमवर्जनीयमित्यवक्तव्यतया यदानन्तर्यमुच्यते तस्य हेतुभावोऽप्यथशब्दसामर्थ्यादेव सिद्ध इति अतःशब्दो व्यर्थ इत्यर्थः।

ननु यद्यथशब्दमुखेनैवानन्तर्यप्रतियोग्युपस्थितिः स्यात्तदा भवेदेवं हेतुतयोपस्थितिः, न त्वेवं; किं तु ब्रह्मजिज्ञासापदेनोत्तर-भागविचारवाचिना पूर्वभागधर्मविचार इत्येवोपस्थाप्यते, तद्रूपावच्छिन्न-प्रतियोगिकानन्तर्यमेवाथशब्दो वदति, तन्निर्वाहश्च पूर्ववृत्तस्य हेतु-त्वप्रतीत्येति, तत्प्रतीतयेऽतःशब्देन हेतुताबोधनमित्याशङ्कते——

---

[1] प्रतिज्ञाते—घ. कुं. [2] धर्मविचारस्य हेतुत्वे—घ. कुं.

यद्युच्येत—उत्तरविचाररूपब्रह्मजिज्ञासापदसामर्थ्योपस्थापितपूर्वविचाररूपेण धर्मजिज्ञासेत्येव तदानन्तर्येऽथशब्दोक्ते तन्निर्वाहाय तस्य हेतुभावोऽतःशब्देन बोध्यत इति। एवं ह्युत्तरविचारात्मना अवधिभूतपूर्वविचाराक्षेपवद्ब्रह्मजिज्ञासात्मना विरोधिभूतलोकजिज्ञासाक्षेपस्याप्युपपत्तेस्तदानन्तर्यमेवाथशब्देन किमिति नोच्येत।

न चैतदात्मनास्याक्षेपो न त्वन्यात्मनान्यस्येति नियमहेतुरस्ति। एवमाक्षेपाविशेषेऽपि धर्मविचारस्य ब्रह्मविचारहेतुत्वानुसन्धानमेव तदानन्तर्योपग्रहनियमहेतुरेषितव्य इत्यतोऽथशब्दसामर्थ्यावगते धर्मविचारहेतुत्वे कृतमतःशब्देन। न च ब्रह्मजिज्ञासाया हेत्वानन्तर्ये प्रतिज्ञाते हेतुराकाङ्क्ष्यते; येन

रत्नतूलिका

यद्युच्येतेति। धर्मजिज्ञासेत्येवेति। न तु हेतुरपीत्येवकारार्थः। तावतैव प्रतियोगिविशेषोपस्थितावानन्तर्यस्य सुबोधत्वादिति भावः। धर्मविचारस्य तत्त्वेनोपस्थितिमात्रमानन्तर्यप्रतियोगित्वे न तन्त्रम्; किं तु हेतुत्वेनानुसन्धानमपि, ततश्चातःशब्दवैयर्थ्यमिति पूर्वोक्तदोषस्फुटीकरणायाभसासाम्यमाह—एवं हीति। ब्रह्मजिज्ञासायामुत्तरभागविचारत्वमेकं सामर्थ्यम्, ब्रह्मजिज्ञासात्वमपरम्, ततश्च यथा उत्तरभागविचारत्वेनावधिभूतपूर्वभागविचाराक्षेपस्तथा ब्रह्मविचारत्वेन विरोधिलोकविचाराक्षेपश्च स्यात्, सामर्थ्यस्याविशिष्टत्वादित्यर्थः।

एतदात्मना उत्तरभागविचारात्मना। अस्य पूर्वभागविचारस्य। अन्यात्मना ब्रह्मजिज्ञासात्मना। अन्यस्य लोकविचारस्य। कस्तर्हि परिहार इत्यतस्तं वदन्वैयर्थ्यदूषणमुपसंहरति—एवमाक्षेपेत्यादिना। द्वितीयं निषेधति—नचेति। हेतोरनन्तरं साध्यमित्युक्ते

तादर्थ्येनातःशब्दार्थवत्त्वं स्यात् । न च धर्मविचारस्य हेतुत्वमप्यथशब्देन प्रतिज्ञायते, वृत्तहेतुभावासिद्धौ तस्य तदानन्तर्यार्थत्वभङ्गप्रसङ्गात् , अतःशब्दार्थहेत्व[1]सिद्धिप्रसङ्गाच्च । न च कर्मविचारे प्रतीतहेतुभावस्यैवासिद्धिशङ्कापरिहारपरोऽतः- शब्दो नानर्थक इति शङ्क्यम् ; कर्मफलरक्तस्य ब्रह्मजिज्ञासा- प्रवृत्त्ययोगेन तद्विरागाय कर्मफलाल्पास्थिरत्वनिर्णयहेतुत्वेन कर्मविचारस्य ब्रह्मजिज्ञासाहेतुत्वावगममुपजीव्य तदानन्तर्य- मथशब्देन प्रतिज्ञायत इति वक्तव्यम् । तत्रैवं सबीजे

रत्नतूलिका

कुत इत्यपेक्षाभावादित्यर्थः । तृतीयं निषेधति—न च धर्मविचार- स्येति । हेतुत्वस्यापि प्रतिज्ञाविषयत्वे अथशब्दार्थनिर्णयात्पूर्वं हेतुत्वनिर्णयो नास्तीत्यायातम् । तथा च हेतुत्वेनानुसंहितलोक- विचारानन्तर्यवत्कर्मविचारानन्तर्यमप्यथशब्देन गृह्येतेत्यर्थः । किं चातःशब्दस्य प्रतिज्ञातकर्मविचारहेतुत्वे हेतुसमर्पणपरत्वेऽपि वृत्तहेतु- परत्वस्वाभाव्यादतो धर्मविचाराद्धेतोरित्यर्थो वाच्यः, स चेदानीमपि न ज्ञात इत्यज्ञानासिद्धिः स्यादित्याह—अतःशब्दार्थेति । चतुर्थं निषेधति—न च कर्मविचार इति । लोकविचारानन्तर्यमुपेक्ष्याथ- शब्देन कर्मविचारानन्तर्यप्रतिज्ञा तस्य ब्रह्मविचारहेतुत्वनिर्णयसाध्या, स च तस्य हेतुत्वबीजज्ञानमन्तरा न संभवतीत्यतः सबीजे हेतुत्वे ज्ञाते तत्रासिद्धिशङ्काभावादतःशब्दो व्यर्थ इत्याह—कर्मफलरक्तस्येति । तदेव बीजं दर्शयति—कर्मफलाल्पेति । नन्वतःशब्देन कर्म- विचारस्य हेतुत्वे उक्ते तद्बलेनैव कर्मणामल्पास्थिरफलत्वं निर्णीयत इति

[1] हेतुत्वासिद्धि—ख.

हेतुत्वावगमे कुतस्तदसिद्धिः शङ्क्येत। विचारितकर्मण एवाल्पास्थिरफलत्वमतो निर्णीयत इति चेत्, एवं तर्हि प्रागस्मात्कर्मविचारहेतुत्वानवगतौ तदानन्तर्यमथशब्दार्थो न गृह्येत; हेतुभूतवृत्ताज्ञानात्। एतेन ब्रह्मज्ञानार्थं कर्मणामुपादेयानां स्वरूपविवेक[1]हेतुत्वेन कर्मविचारस्य ब्रह्मविचारहेतुत्वावगमो व्याख्यातः। यथायोगं प्रागेव कर्मविचारस्य ब्रह्मविचारहेतुत्वावगमेऽतःशब्दवैयर्थ्यात्। अन्यथाथशब्देन तदानन्तर्यग्रहायोगात्। अपि च परमते विचारस्यैवाविधेयत्वेनाधिकारपरिच्छेदानपेक्षत्वादथातःशब्दयोरेवानर्थक्यम्; स्वरूपसतैव

रत्नतूलिका

काशकुशावलम्बनेन शङ्कते—विचारितकर्मण एवेति। उक्तं मा विस्मार्षीरित्याह—एवं तर्हीति। एतेनेति। कर्मणामल्पास्थिरफलत्वनिर्णयहेतुत्वेन कर्मविचारस्य ब्रह्मविचारहेतुत्वावगमदूषणेनेत्यर्थः। अथशब्दार्थनिर्णयात्पूर्वं कर्मविचारस्य ब्रह्मविचारहेतुत्वनिर्णये तदनिर्णये च दोषं वदन्नतःशब्दवैयर्थ्यमुपसंहरति—यथायोगमिति। अपि च साङ्गसशिरस्कवेदाध्ययनानन्तरमनन्तस्थिरफलापातप्रतीतिमता [2]पुरुषेणेच्छया कर्मविचारे कृते तत एव कर्मणामल्पास्थिरफलत्वज्ञानं जायते। ततश्च स्वरूपसता हेतुना स्वयमेव पुरुषो ब्रह्मविचारे प्रवर्तत इति किमथातःशब्दाभ्यामित्याह—अपि च परमत इति। सिद्धान्ते तु न वैयर्थ्यमित्याभिप्रेत्याह—स्वरूपसतैवेति। परिच्छेदो निर्णयः। सिद्धान्ते विचारस्य विधेयत्वाद्विधिप्रतिपत्तये अधिकारिनिर्णयोऽपेक्षित इति तत्कथनमर्थवदिति भावः।

---

[1] हेतुत्वे-ख.  [2] पुरुषेण तच्छेषतया—कुं.

हेतुना विचारप्रवृत्तिकार्यसिद्धौ तदुपदेशस्याधिकारपरिच्छेदार्थत्वात्तस्य चानपेक्षणीयत्वात्।

अपि च—कर्मविचारानन्तर्यमथ[1]शब्दार्थत्वमुपयता तस्य ब्रह्मविचारनिरपेक्षहेतुत्वोपगमात्काम्यकर्मविधीनामननुष्ठानलक्षणमप्रामाण्यमापादितम्। न चैच्छिकविचारमकुर्वतामेवोपद्रष्टृवचनादिना काम्यकर्मानुष्ठानमुपपद्यत इति शङ्क्यम्। एवं हि कर्मफलानित्यत्वमुपश्रुत्य विचारितवेदान्तस्य ब्रह्मज्ञानाङ्गकर्मानुष्ठानमपि तथैव संभवतीत्यनियतवृत्तो धर्मविचारो न

रत्नतूलिका

एवं कर्मविचारस्यानन्तर्यप्रतियोगित्वमङ्गीकृत्य परमते तत्कथनवैयर्थ्यमुक्तम्। इदानीं तस्य तत्प्रतियोगित्वे बाधकमाह—**अपि च कर्मविचारानन्तर्यमिति।** **निरपेक्षेति।** अन्यथा तदानन्तर्यमनुपपन्नं स्यादिति भावः। **काम्येति।** नित्यादीनां [2]तन्मते विद्यार्थतया समुच्चित्यानुष्ठानोपगमादिति भावः। विचारास्याध्ययनविधिप्रयुक्तत्वे अवश्यकर्तव्यता स्यादित्यत उक्तं—**ऐच्छिकेति।** तन्मते विचारस्य [3]रागप्राप्तत्वाङ्गीकारादिति भावः। **विचारेति।** कर्मविचारेत्यर्थः। **एवं हीति।** अनुष्ठेयज्ञानस्य विचाराधीनत्वनियमाभाव इत्यर्थः। द्वेधा हि कर्मविचारस्य ब्रह्मविचारे उपयोगः, कर्मफलानित्यत्वज्ञानेन विद्याङ्गतयानुष्ठेयकर्मज्ञानेन चेति। तत्र हितैषिवचनादिना कर्मफलानित्यत्वज्ञानमुपद्रष्टृवचनादिनानुष्ठेयकर्मस्वरूपज्ञानं च भवतीति न कर्मविचारो नियतपूर्ववर्तीत्यर्थः। **तथैवेति।** उपद्रष्टृवचनादिनैवेत्यर्थः। ननूपद्रष्टृवचनेनेव विचारेणापि कदाचित्तज्ज्ञानं

---

[1] शब्दार्थमुप—ख. ग. [2] मन्मते—घ. [3] रागप्रयुक्तत्वा—ग. कुं.

ब्रह्मजिज्ञासाहेतुः स्यात् । न च पाक्षिकादस्मादानन्तर्यमथशब्दार्थो नियन्तुं शक्यः ।

यदपि कृतकर्मविचाराणामेवादृष्टवैगुण्यादमुमुक्षुतया काम्यानुष्ठानमुपपद्यते, विवेकादिपूर्ववृत्तत्ववादिभिरपि तस्मिन् क्वचिद्विचाराभावस्यादृष्टवैगुण्योपपाद्यत्वादिति, तदप्ययुक्तम् ; तथाप्यदृष्टसाद्गुण्ये मुमुक्षुत्वादेव ब्रह्मजिज्ञासोपपत्तौ कर्मविचारानर्थक्यात् । नहि मुमुक्षानपेक्षं धर्मविचारोऽदृष्टसाद्गुण्येऽपि

रत्नतूलिका

संभवतीति तदानन्तर्यमथशब्दार्थोऽस्त्वित्याशङ्क्य निषेधति—न च पाक्षिकादिति । पाक्षिकस्य नियमेनानन्तर्यप्रतियोगित्वानुपपत्तेरित्यर्थः ।

तस्मिन्निति । विवेकादौ सतीत्यर्थः । तथापीति । अदृष्टसाद्गुण्यापेक्षायामपीत्यर्थः । यद्वा काम्यानुष्ठानसंभवेऽपीत्यर्थः । यद्वैगुण्येन कृतकर्मविचारस्यापि न मुमुक्षा तादृशादृष्टसाद्गुण्ये तस्यां चोत्पन्नायां ब्रह्मविचारे प्रवृत्तिसिद्धेः कृतं कर्मविचारेणेति वाक्यार्थः । नन्वदृष्टसाद्गुण्येऽपि तन्मात्रेण कार्यायोगात्तदानन्तर्यस्य ज्ञातुमशक्यत्वाच्च दृष्टं किंचिदङ्गीकार्यम्, तच्च कर्मविचाररूपमेवास्तु, किं मुमुक्षयेति विनिगमकाभावमाशङ्क्याह—न हीति । कर्मविचारस्य हेतुत्ववादिनापि मुमुक्षाऽवश्यापेक्षणीया ; ऐच्छिकविचारप्रवृत्तौ फलेच्छाया आवश्यकत्वात् । अत एव भवदीयसूत्रवृत्तौ "मोक्षार्थी ब्रह्मविज्ञाने प्रवर्तते" इत्युक्तम् । श्रुतप्रकाशिकायां च "अनन्तस्थिरफलाभिलाषी हि शास्त्रमधिकरोति" इति । [1]तस्मादादृष्टसाद्गुण्ये सत्यावश्य-

---
[1] तस्मादृष्ट.

ब्रह्मजिज्ञासाप्रवृत्तिहेतुः, येन न विनिगम्येत । यदपि समीचीनः कर्मविचारो ब्रह्मजिज्ञासाप्रवृत्तिहेतुः, असमीचीनस्तु काम्यानुष्ठान इति, तदपि तुच्छम्; तथा विभागानाकलनात् । कर्मविचारस्य हि कर्मफलाल्पास्थिरत्वप्रतीतिपर्यन्तत्वाभावोऽसमीचीनत्वमयुक्तम्; अल्पाधिककर्माभ्यासविधिप्रत्ययसामर्थ्यात्, "फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात्" इति न्यायाच्च । अर्थवादनयनेयत्वोन्न-

रत्नतूलिका

कमुमुक्षयैव प्रवृत्तिसिद्धेर्न कर्मविचारहेतुत्वमिति भावः । न च सिद्धान्तेऽपि तयैव प्रवृत्तिसिद्धेरितरविवेकादिवैयर्थ्यमिति वाच्यम्; केवलमुमुक्षाया निरतिशयसुखेच्छारूपायाः सर्वप्राणिसाधारणत्वेन विवेकाद्याहिताया एव तस्या ब्रह्मविचारप्रवृत्तिहेतुत्वमिति विवेकाद्यपेक्षेति वक्ष्यत इति हृदयम् । ते किं जाती, उतोपाधी इति विकल्प्य नाद्य इत्याह—विभागानाकलनादिति । तादृशवैजात्यस्याननुभवादित्यर्थः । द्वितीयेऽपि तस्यासमीचीनत्वं किं कर्मफलाल्पास्थिरत्वप्रतीतिपर्यन्तत्वाभावः तत्पर्यन्तत्वं समीचीनत्वम्, किं वात्मज्ञानस्यानन्तास्थिरफलप्रत्ययविघटकत्वमसमीचनित्वं तदविघटकत्वं समीचीनत्वमिति द्वेधा विकल्प्याद्यमसंभवेन दूषयति—कर्मविचारस्य हीति । फलस्येति । फलस्य कर्मजन्यत्वात् तेषां कर्मणां लोकवत् कृष्यादिवत् परिमाणतः फलविशेषः स्यात् अल्पकर्मणा अल्पं फलं, अधिकेनाधिकमिति न्यायादित्यर्थः । द्वितीयं तु दुष्परिहरमित्याह—अर्थवादनयेति । अर्थवादाधिकरणे "एतेनोपनिषदां कर्त्रादिप्रतिपादनद्वारा नैराकाङ्क्ष्यं व्याख्यातम्" इत्युपनिषदामप्यर्थवादाधिकरणविषयत्ववचनादात्मज्ञान-

यनादुपनिषदामात्मज्ञानानन्तस्थिरफलप्रत्ययविघटकत्वमसमी-चीनत्वं तु ध्रुवम् । तथा च ब्रह्मविचारप्रवृत्तिविघाताय कर्म-विचारः स्यादित्यग्रे स्फुटमिति ।

अपि च यदि "हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसः" इत्यादाविव धर्मब्रह्मविचारयोः क्रमप्रमाणमाहत्यो-पलभेमहि, सर्वानुपपत्तिपरिहारेणापि कथंचिदिह तदानन्तर्यमेव प्रतिपद्येमहि । न तूपलभामहे । नापि विचारविधिप्रकरणे विवेकादेरिव तस्योपादानमस्ति । न वा धर्मविचारमन्तरा-

रत्नतूलिका

फलानन्त्यस्थिरत्वप्रत्ययविघातकत्वं सर्वदा कर्मविचारे स्थितमित्यर्थः । तथा च कर्मविचारहेतुत्ववादिनो वरघाताय कन्यावरणमिति न्यायः प्राप्त इत्याह—तथाचेति ॥

यत्तु केनचिदुक्तम्—कृतेऽपि ब्रह्मविचारे अदृष्टवैगुण्येनाशुद्ध-चित्ततया स्वर्गार्थकर्मानुष्ठानं संभवतीति, तन्न ; यदि काम्यकर्मानुष्ठान-प्रयोजिका चित्तशुद्धिः स्यात्तर्हि काम्यकर्मण्यविरक्तस्य ब्रह्मविचारे प्रवृत्तिरेव न स्यात् । कर्मविचारस्य ब्रह्मविचारहेतुत्ववादिनापि कर्म-फलवैराग्यसम्पादनद्वारैव तस्य हेतुत्वोपगमादिति ।

इत्यादाविवेत्यत्रादिशब्देन "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इत्यादिपरिग्रहः । एवं श्रुतिरूपं क्रमप्रमाणं निरस्यार्थ-रूपं तन्निरस्यति—नापीत्यादिना । विवेकादेरिवेति व्यतिरेक-दृष्टान्तः । प्रकरणपाठेनाङ्गत्वे सत्युपकारकल्पनायां दृष्टसंभवन्यायेन ब्रह्मविचारस्वरूपनिर्वर्तकत्वमपि संभवतीति भावः । अत एव स्वातन्त्र्येण सामर्थ्यं निरस्यति—न वा धर्मविचारमिति । अथ वा क्रमे श्रुतिं निरस्य पाठं निरस्यति—नापीति । विवेकादेरिवेति

ब्रह्मविचारो न भवति, न वा तस्मिन् सत्यवश्यं भवति, येन सामर्थ्यादेव तदानन्तर्यमिह प्रतिपद्येत।

अपि च सत्यां क्रमापेक्षायां पौर्वापर्यनियमाय प्रमाणमत्र मृग्येत, तदपेक्षा च शास्त्रस्य जिज्ञास्यैक्ये भवति, तत्तदंशभेदस्य युगपज्जिज्ञासितुमशक्यत्वात्। यथा द्वादशलक्षण्यां धर्मरूपाजिज्ञास्यैक्ये यथायोगं क्रमनियम आद्रियते, फलैक्ये च [1]कर्मणामपि, यथाग्नेयादीनां तदङ्गानां च, तथा अधिकृताधिकारस्य च, यथा दर्शपूर्णमासाधिकृताधिकारस्य गोदोहनादेरप्प्रणयनक्रम आद्रियते। न चैतन्त्रितयं धर्मब्रह्मजिज्ञासयोरिति विवृतं भाष्ये। तस्माद्विवेकादिसाधनसम्पत्त्यानन्तर्यमथातःशब्दाभ्या[2]मुपदर्श्यते ब्रह्मजिज्ञासाधिकारपरिच्छेदाय, न कर्मविचारानन्तर्यमिति युक्तः पन्थाः।

रत्नतूलिका

व्यतिरेकदृष्टान्तः। प्रकरणोपादाने तु प्रयाजाग्नेयादेरिव क्रमः सिध्यतीति भावः। अर्थं निरस्यति—न वेति॥

जिज्ञास्यैक्यं न सर्वत्र क्रमापेक्षाप्रयोजकमित्यतो विशिनष्टि—**शास्त्रस्येति। क्रमनियम इति।** प्रमाणभेदशेषशेषित्वप्रयुक्तिक्रमाधिकारातिदेशोहबाधतन्त्रप्रसङ्गविचाराणामिति शेषः। फलैक्यं तु न विचारमात्रस्य तत्प्रयोजकं, किं त्वन्यस्यापीत्याह—**कर्मणामपीति। यथाग्नेयादीनामिति।** आग्नेयादीनामन्योन्यं तेषां [3]**तदङ्गानां च।** अङ्गानामपि परस्परं क्रमनियम इत्यर्थः। **अधिकृतेति।** दर्शादावधिकृतस्याधिकारो यस्मिन्गोदोहनादौ तस्येत्यर्थः।

---

[1] कर्मणोऽपि—ङ. [2] उपदिश्यते—ङ. [3] तदङ्गादीनां—क.

तथा च "अध्ययनमात्रवतः" इति सूत्रवृत्तौ कर्मविचारानिरपेक्षो ब्रह्मविचार इति परेणैव दर्शितम्—"वेदार्थविचारे पुरुषः स्वयमेव प्रवर्तते, ततः कर्मार्थी कर्मविज्ञाने प्रवर्तते, मोक्षार्थी ब्रह्मविज्ञाने" इति । न च मोक्षार्थी विचारितकर्मेति पूर्यते विद्यायाः कर्माङ्गत्वनिरासाय; उत्सूत्रहेत्वन्वेषणप्रसङ्गात् । कर्मोपादानाय हि कर्मविचारानन्तर्यमिष्यते । तथा च कर्मज्ञानयोरेकपुरुषानुष्ठेयत्वे [1]समसमुच्चाया-

रत्नतूलिका

ब्रह्मविचारस्य कर्मविचारसापेक्षत्वोक्तिः स्ववचनविरुद्धा चेत्याह— **तथा चेति** । तदीयमेव वाक्यं लिखति—**वेदार्थविचार** इत्यादि । तत्तत्फलकामस्य तत्र तत्र प्रवृत्तिप्रतिपादनात् परस्परनिरपेक्षत्वावगम इति भावः । **पूर्यत इति** । तदीयभाष्य इति शेषः । **विद्याया इति** । "तद्वतो विधानात्" इति सूत्रेण विद्यावतः कर्मविधानाद्विद्या कर्माङ्गमिति प्राप्ते तन्निरासाय "अध्ययनमात्रवतः" इति सूत्रम् । तेन चेत्थं तन्निरासो वाच्यः, "वेदमधीत्याभिसमावृत्त्य" इत्यादावध्ययनमात्रं प्रतीयते । तस्यार्थावबोधपर्यन्तत्वेऽपि न तावन्मात्रं विद्या, किं तु प्रत्ययावृत्तिरूपा ततोऽन्या । ततश्च विद्याकर्मणोरेकपुरुषसंबन्धित्वाभानान्नाङ्गाङ्गिभाव इति । अत्रापि चेत्कर्मविचारानन्तर्योपक्षेपेण विद्याकर्मणोरेकपुरुषानुष्ठेयत्वं स्यात्तर्हि तन्निरासाय सौत्रादन्यो हेतुरन्वेषणीयः स्यादित्यर्थः । नन्वेकपुरुषानुष्ठेयत्वमात्रेण कथमङ्गाङ्गिभावः, आग्नेयादौ व्यभिचारादित्यत आह—**समसमुच्चयेति** । भवतापीति शेषः । ततश्चैकपुरुषानुष्ठेयत्वमाग्नेयादेरिव समुच्चित्यैकफलसाधनत्वे वा प्रयाजाग्नेयादेरिवाङ्गाङ्गिभावे वा स्यात् ।

[1] समुच्चय—**ख**.

नुपगमेनाङ्गाङ्गिभावस्यावर्जनीयत्वात् । कर्मणामदृष्टद्वारा विद्याङ्गत्वाद्वरं कर्तृदेवतासंस्कारद्वारा विद्याया एव कर्माङ्गत्वमित्यापद्येतेति । एतेन कर्मविचारानन्तर्याभिधायिनाथशब्देन तत्रत्याधिकार्येवात्रापीति सूच्यत इति केनचिदुक्तं [1]निरस्तम् ।

कर्मविचारस्य हि ब्रह्मविचारहेतुत्वे विचारितकर्मैवाधिक्रियताम्, किमधीतवेदोपलक्षणेन । विचारस्य प्रमाणाश्रयत्वाद्वेदाध्ययनमपि हेतुरिति चेत्तर्हि उभयानन्तर्यमथशब्दार्थोऽस्तु, किं तत्सूचनक्लेशेन । नचार्थलाघवं प्रयोजनम्, न हि वेदाध्ययनानन्तर्येऽभिहिते विचारितकर्मा लभ्यते । अभिहिते तु कर्मविचारानन्तर्येऽकृतवैधसाङ्गवेदाध्ययनस्य कर्मविचारा-

रत्नतूलिका

तत्राद्यस्यानङ्गीकाराद्द्वितीयः परिशिष्यत इत्याह—**अङ्गाङ्गिभावस्येति** । अस्त्वङ्गाङ्गिभावः ; एवमपि विद्यायाः कर्माङ्गत्वे किमायातमित्यतस्तत्र हेतुमाह—**कर्मणामिति** । आरादुपकारककल्पनात्सामवायिककल्पनस्य युक्तत्वादिति भावः ।

कर्मविचारानन्तर्यकथनेनाध्ययनानन्तर्यं सूच्यत इति वदतः कोऽभिप्रायः, किं कर्मविचारो हेतुरुताहेतुः, आद्येऽपि किं तावन्मात्रं हेतुः, उताध्ययनं कर्मविचारश्चेत्युभयमिति विकल्प्याद्य आह—**कर्मविचारस्य हीति** । आद्यद्वितीयं सोपपत्तिकमाशङ्कते—**विचारस्येति** । लाघवायैकानन्तर्ये वाच्ये अध्ययनानन्तर्यमेवोच्यतामिति वैपरीत्यं निरस्यति—**न हि वेदाध्ययनेत्यादि** । अथशब्दस्यानन्तर्य-

[1] परास्तम्—ग.

प्रवृत्त्याऽधीतवेदो लभ्यते इति वाच्यम् ; अभिधेयानन्तर्येऽनभिधेयप्रतियोगिभेदस्य तदभिधानागौरवकरत्वात् ।

कर्मविचारस्य तदहेतुत्वे च तदानन्तर्याभिधाय्यथशब्द इति बालिशभाषितम् । आनन्तर्यप्रतियोगितया विचारप्रवृत्तिहेतुवेदाध्ययनस्यैवाक्षेपौचित्याच्छिरोवेष्टनेन किं नासिकाग्रहणेन । न च धर्मशास्त्रप्रणयनानन्तरमिदं ब्रह्मशास्त्रं प्रणीतमित्येतावता तद्विचारानन्तरमेतद्विचारप्रवृत्तिरिति नियन्तुं शक्यते, अतिप्रसङ्गात् । अनन्तरशास्त्रप्रणयनस्य च सामग्रीसमवधानापेक्षतयानुपयोगिकर्मविचारोपजीवनतात्पर्यकल्पना—योगात् ।

रत्नतूलिका

मात्रमभिधेयम्, प्रतियोगिनोस्त्वध्ययनकर्मविचारयोराक्षेप एव, नाभिधानम्, अतोऽभिधेयस्यैकत्वान्नाभिधानगौरवमिति दूषयति—**अभिधेयानन्तर्य इति** ।

द्वितीयं दूषयति—**कर्मविचारस्येति** । **बालिशेति** । [1]हेत्वानन्तर्यं सूच्यते ; अहेत्वानन्तर्यं तु शब्देनाभिधीयत इति वदतो बालिशत्वादिति भावः । ननु रागाद्वेदार्थविचारे प्रवर्तमानः प्रथमकृतस्यातिक्रमे प्रमाणाभावात्कर्ममीमांसायामेव प्रथमं प्रवर्तेत इत्याशङ्क्य निषेधति—**न च धर्मशास्त्रेति** । किं प्रथमकृतत्वं प्रथमप्रवृत्तौ साक्षान्नियामकमुतोपजीव्यत्वज्ञापकतयेति द्वेधा विकल्प्याद्यं दूषयति—**अतिप्रसङ्गादिति** । ततोऽपि प्रथमकृते शास्त्रान्तरेऽपि प्रथमं [2]प्रवृत्तिप्रसङ्गादित्यर्थः । लोके करणक्रमानादरणे व्युत्क्रमेणापि शतशः प्रवृत्तिदर्शनादिति भावः । द्वितीयं दूषयति—**अनन्तरशास्त्रेति** । अनन्तरप्रणीतत्वमनन्यथासिद्धं

[1] हेत्वानन्तर्यं तु शब्देन—कुं. [2] प्रवृत्तिः स्यादित्यर्थः—घ. च. कुं.

नहि भगवतो बादरायणस्य न्याया न प्रतिभासन्ते, येन न्यायज्ञानापेक्षयापि तदुपजीवनं कल्प्येत। तत्र तत्र परोदीरितन्यायोपदर्शनं तु लाघवार्थमित्यग्रे दर्शयिष्यत इत्यास्तां तावत्।

## जिज्ञासापदवृत्तिः

"ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा, ब्रह्मण इति कर्मणि षष्ठी न शेषे" इति भाष्यम्। समानमिदं परस्यापि। एवं सत्येव विधित्सितजिज्ञासाया ब्रह्मैव विषयः प्रयोजनं चेति प्रत्याय्येत। तृतीयासमासे हि जिज्ञासाया विषयः प्रयोजनं चेत्युभयमपि न सिध्यति। सप्तमीसमासे विषयसिद्धावपि न

## रत्नतूलिका

सत्पूर्वस्योपजीव्यत्वकल्पकं वाच्यम्। तच्चात्र सामग्रीसमवधानेनान्यथा-सिद्धम्। पूर्वं पश्चाद्वा यस्य यदा सामग्रीसमवधानं तत्तदा क्रियत इति सर्वसिद्धत्वादिति भावः।

"प्रदानवदेव तदुक्तम्" "औपसदवत्तदुक्तम्" इत्यादौ पूर्वतन्त्रसिद्धन्यायप्रदर्शनान्नयायांशे तदुपजीव्यकत्वं विज्ञायत [1] इत्यह—न हि भगवत इति। किमर्थं तर्हि परोक्तन्यायप्रदर्शनमित्यत आह—तत्र तत्रेति। यथा प्रमाणाद्यंशे ग्रन्थगौरवभीत्या गौतमाद्युक्तोपजीवनेऽपि न तस्य शास्त्रस्य प्राथम्यं तथा क्वचिल्लाघवार्थं तन्नयायप्रदर्शनेऽपि न कर्मविचारप्राथम्यम्। एकदेशे उपजीव्यत्वस्य गौतमीयादितुल्यत्वे तदुक्तमित्युक्तिमात्रेण विशेषाभावादिति भावः।

एवं सत्येवेति। कर्मत्वेऽभिहित एवाज्ञातत्वेन ब्रह्मणो विचारविषयत्वं ज्ञातत्वेन तस्यैव प्रयोजनत्वं च लभ्यत इत्यर्थः।

[1] इत्यत आह—घ. च. कुं.

प्रयोजनासिद्धिः । चतुर्थीसमासे तु न विषयसिद्धिः । तदनुपपत्तिश्च, तादर्थ्यप्रकृतिविकारभावाभावात् ।

ननु नेह षष्ठी विद्यते, कुतो व्याख्यायते, उच्यते ; यदि समासे लुप्ता विभक्तिः स्मृता बोधयतीति पक्षः, सा व्याख्यायमाना न दुष्यति । यदि च प्रातिपदिकस्य लुप्तविभक्त्यर्थे लक्षणा, तथापि न स योग्यतादिना कर्मत्वं करणत्वमित्येव लक्ष्यते । प्रातिपदिकेनाविभक्त्यर्थलक्षणायां हि योग्यताद्यनुसरणम्, यथा गङ्गायां घोष इत्यादौ । प्रातिपदिकेन नियतविभक्त्यर्थलक्षणा त्वनुशासनाधीना । यदि हि कृद्योगे

रत्नतूलिका

तादर्थ्येति । जिज्ञासाया ब्रह्मार्थत्वे प्रकृतिविकारभावस्याभावात् । अत्र तादर्थ्यनिर्वाहकस्य प्रकृतिविकारभावस्याभावादित्यर्थः ।

न दुष्यतीति । श्रुतपदस्येव स्मृतपदस्यापि बोधकत्वाविशेषादिति भावः । अनुशासनाधीनेति । अन्यथा जिज्ञासासमभिव्याहृतब्रह्मपदार्थस्य कर्मत्वेन नियतसंबन्धाग्रहणाल्लक्षणा न स्यात् । न च योग्यतया प्रवाहसंबन्धित्वेन तीरस्येव ब्रह्मसंबन्धित्वेन कर्मत्वस्योपस्थितिरिति वाच्यम् ; सर्वत्र विभक्त्यर्थस्य तत्त्वेनोपस्थितिर्वाचकशब्दोपस्थितिद्वारा वाच्या, प्रत्यक्षेण तस्य संसर्गमर्यादया भानेऽपि तेन रूपेणानुपस्थितेः । स च शब्दोऽत्र यदि द्वितीया तदा समासानुपपत्तिः । यदि षष्ठी तदार्थानुपपत्तिः । अतः कर्माणि षष्ठी विधातव्या, तस्याः समासोऽपीत्युभयानुशासनाधीना लक्षणेति भावः । एवं सामान्यतोऽनुशासनाधीनत्वमुपपाद्य प्रकृते योजयति—यदि हि कृद्योग

कर्मणि षष्ठी तस्याः समासो वा नानुशिष्येत, इह तदर्थः कर्मत्वं न लक्ष्येत। तदिह समासार्थाभिव्यञ्जनाय विग्रहवाक्यगता षष्ठी व्याख्यायते।

ननु प्रतिपदविधाना षष्ठी न समस्यते, न; कृद्योगा च षष्ठी समस्यत इति प्रतिप्रसवोपपत्तेः। कथं तर्हि सर्पिषो ज्ञानमित्यादौ न समासः, सापि हि कृद्योगेति, न; कृद्योगविहिता हि सा समस्यते, न चैषा तथा; "ज्ञोऽविदर्थस्य करणे" इत्यर्थविशेषोपाधिमात्रविहितत्वात्। अत एव सर्पिषो जानीत इति तिङन्तोपपदापि सा न दुष्यति। एवमादिविषये च प्रतिपदविधानषष्ठीसमासनिषेधोऽपि सावकाशो भवति।

रत्नतूलिका

इति। नानुशिष्येतेति। "कर्तृकर्मणोः कृति" इति सूत्रेण षष्ठी, "षष्ठी" इति सूत्रेण तस्याः समासो वा नानुशिष्येतेत्यर्थः। इहेति। जिज्ञासापदसमभिव्याहृतब्रह्मपदस्थल इत्यर्थः। नन्वस्तु व्याख्यानप्रयोजनं सति व्याख्येये, तदेव तु नास्तीत्युक्तमित्यमत आह—तदिहेति। विग्रहवाक्यगतविभक्तिव्याख्यानेन समासेऽपि लुप्तविभक्त्यर्थनिर्णये तत्र प्रातिपदिकस्य [1] लक्षणा [2] संभवतीति भावः।

प्रतिपदविधानेति। तत्तत्पदमुपादाय या विधीयते सा प्रतिपदविधाना। तस्याः समासः "प्रतिपदविधाना च षष्ठी न समस्यते" इति वार्तिकेन [3] निषिद्ध इति भावः। कृद्योग मात्रमादाय शङ्कते—कथं तर्हीति। ज्ञानशब्दस्य ल्युडन्तत्वेन कृदन्तत्वादिति भावः। कृद्योगमात्रं नालम्; अपि तु कृद्योगेन विहितत्वमिति परिहरति—न; कृद्योगेति। सा न दुष्यतीति। अन्यथा

[1] लक्षणासंभवादिति—च. [2] संभवतीत्यर्थः—कुं. [3] निषिध्यत इति—कुं.

### उपपदविभक्तेः कर्मत्वाभिधायकत्वम्

अत्र केचित्—उपपदविभक्तिः प्रयुज्यमानापि दाराः कलत्रमित्यादिवत्प्रयोगसाधुत्वमात्रफला, तद्विधानमपि तादर्थ्येनैवोपपन्नम्। अर्थविशेषाश्चाक्षिप्यन्ते, अत एव ह्युपपदविभक्तेः कारकविभक्तिर्बलीयस्त्वमिति वदन्ति। तत्र मते कर्माणि षष्ठीति नाभिधेयत्वाभिप्रायम्। कर्मण्याक्षेप्य इति व्याख्येयम्।

अपरे मन्यन्ते—"कर्तृकर्मणोः कृति" इति तावत्कृद्योगा षष्ठी विधीयते। तत्र पाणिनेर्व्याकरणस्य कृतिरित्यत्र कोऽयं कर्तृकर्मणोराक्षेपो नाम, किमर्थापत्तिः, उताहो लक्षणा।

### रत्नतूलिका

जानीत इत्यस्य ज्ञानपदवत्कृदन्तत्वाभावात्तत्र षष्ठी न स्यात्। अतोऽर्थविशेषमात्रमेव तत्रोपाधिर्न शब्दविशेष इति भावः।

ब्रह्मपदस्य विभक्त्यर्थकर्मत्वे लक्षणेत्युक्तम्। केचित्त्वेवंविधस्थले कर्मत्वादीनामाक्षेप्यत्वेन विभक्त्यर्थत्वाभावान्न तत्र लक्षणेत्याहुः, तन्मतं दूषयितुमनुवदति—अत्र केचिदिति। अत्रोपपत्तिमाह—अत एवेति। यतो विभक्तिः साधुत्वमात्रफला, अर्थविशेषस्य त्वाक्षेपाल्लाभः, अत इत्यर्थः। आक्षेपस्य विलम्बितत्वादुपपदविभक्तेर्दुर्बलत्वमिति भावः। तन्मते कर्माणि षष्ठीति भाष्यस्यार्थमाह—तत्र मत इति।

दूषयति—अपरे मन्यन्त इति। पाणिनेरिति। "शेषे विभाषा" [1]इत्यकारव्यतिरिक्तस्त्रीप्रत्यये "उभयप्राप्तौ" इति षष्ठ्या विकल्पितत्वादत्र कर्तरि कर्मणि च षष्ठीति ध्येयम्। कोऽयमिति।

---

[1] इत्येकाकारव्यतिरिक्त.

नार्थापत्तिः ; विना ताभ्यां प्रातिपदिकस्य तदर्थस्य वानुपपत्त्यभावात् । नापि प्रत्ययस्य ; साधुत्वमात्रफलत्वोपगमात् । अथ समभिव्याहृतक्रियान्वयानुपपत्त्या तदाक्षेप इत्युच्येत, एवं हि "कर्मणि द्वितीया" इत्यादिविधावपि घटं पश्यति कटे शेत इत्यादौ तथैव कारकविशेषाक्षेपे द्वितीयादेरपि साधुत्वैकफलत्वापत्तेः । सप्तम्यन्तनिर्देशस्योभयत्रापि तुल्यत्वात् । लक्षणापि हि न प्रातिपदिकस्य ; समभिव्याहृतक्रियान्वयानुपपत्तिरूपबीजस्य सर्वत्र समत्वेनातिप्रसङ्गात् । अथ विभक्तेः कर्मादौ लक्षणेत्युच्येत, तन्न ; अर्थविशेषनिर्देशेन द्वितीयादितुल्यविधित्वे सति लाक्षणिकत्वकल्पनायोगात् ।

## रत्नतूलिका

पाणिनेरित्यत्र कर्तुः व्याकरणस्येत्यत्र कर्मण इत्यर्थः । अर्थापत्तिरित्यत्रापि किं प्रकृतितदर्थयोरनुपपत्तिः, उत प्रत्ययस्य, यद्वा समभिव्याहृतक्रियान्वयस्येति विकल्प्य क्रमेण दूषयति— **नार्थापत्तिरिति** । पदानुपपत्तिः स्मारकत्वानुपपत्तिः, अर्थानुपपत्तिः अर्थस्य तत्राभावः । **उभयत्रेति** । "कर्मणि द्वितीया", "कर्तृकर्मणोः कृति" इति सूत्रयोरित्यर्थः । लक्षणापक्षेऽपि किं प्रातिपदिकस्य, उत विभक्तेरिति विकल्प्य आद्य आह—**लक्षणापि हीति** । **सर्वत्रेति** । घटं पश्यतीत्यादावपीत्यर्थः । **अतिप्रसङ्गादिति** । [1]तत्रापि प्रातिपदिकस्य लाक्षणिकत्वं स्यादित्यर्थः । द्वितीयमाशङ्कते— **अथ विभक्तेरिति** ।

---

[1] अत्रापि—**च**.

**एतावांस्तु विशेषः — कर्मणि द्वितीया कर्तरि [1]तृतीया कृद्योगे तु तयोरेव षष्ठीति यदत्र विधीयते, न चैतावता तस्याः शक्तिविरोधः, पदान्तरयोगस्य शक्यार्थविशेषव्यवस्थामात्रहेतुत्वात्, भानोर्गावः प्रकाशन्त इत्यादौ भानुपदयोगे गवार्थविशेषव्यवस्थादर्शनात्।**

सुब्विभक्तौ लक्षणानिरासः

**न च सुब्विभक्तौ लक्षणा युक्ता ; "तान्येकवचनद्विवचनबहुवचनान्येकशः" इत्यन्वर्थगुरुसंज्ञां विधाय, पुनः**

रत्नतूलिका

ननु यस्मात्पदान्तरयोगनिरपेक्षाद्योऽर्थः प्रतीयते स तद्वाच्यः, यथा गङ्गापदस्य प्रवाहः, पदान्तरयोगसापेक्षत्वे तु स लक्ष्यः, यथा तस्यैव तीरम्, प्रकृते च कृद्योगमपेक्ष्यैव षष्ठ्या कर्मत्वादिप्रतीतेर्न तत्तद्वाच्यमित्यत आह—**एतावांस्त्विति**। अत्र षष्ठी विधीयत इति यत् एतावांस्तु विशेष इति योजना।

सप्तम्या अर्थविशेषनिर्देशे तुल्येऽपि पदान्तरयो[2]गानपेक्षेत्येतावतेत्यर्थः। गङ्गापदस्य तु तीरार्थकत्वे अनुशासनादिरूपं प्रमाणं नास्तीति भावः। तर्हि पदान्तरयोगस्य कोपयोग इत्यत आह—**पदान्तरयोगस्येति**। सति शक्तिनियामके पदान्तरयोगः शक्यविशेषप्रतीतिमात्रनियामक इत्यत्र दृष्टान्तमाह—**भानोर्गाव इति**। तथा च यथा भानुपदसमभिव्याहृतगोपदस्य किरणरूपवाच्यविशेषनिर्णयस्तथा कृद्योगमपेक्ष्य विहितायाः षष्ठ्याः कर्मादिरूपवाच्यविशेषनिर्णय इत्यर्थः।

सुब्विभक्तौ लक्षणामङ्गीकृत्य नात्र लक्षणेत्युक्तम्। इदानीमङ्गीकारं परित्यजति—**न च सुब्विभक्ताविति**। **अन्वर्थगुरुसंज्ञा-**

---

[1] तृतीया च–ख. ग. ङ.  [2] योगापेक्षे–च. कुं.

"द्व्येकयोर्द्विवचनैकवचने," "बहुषु बहुवचनम्" इति नियमविरोधात्।

न च वाच्यं द्वित्वैकत्वयोरिति धर्मग्रहणे कर्तव्ये धर्मिग्रहणं ज्ञापयति—अनेकद्रव्ये पटादाववयवावयविनोरेकान्त-

रत्नतूलिका

मिति। उच्यतेऽनेनेति वचनम्, एकस्य वचनमेकवचनम्। एवं द्वयोर्बहूनामित्यन्वर्थत्वम्। एतादृशार्थविवक्षयैव गुरुसंज्ञाकरणम्। अन्यथा व्यवहारमात्रस्य टिघुभादिसंज्ञाभिरिव लघुसंज्ञयाप्युपपत्तेस्तत्करणं व्यर्थं स्यादिति भावः। नियमविरोधादिति। गुरुसंज्ञाविधिनैवैकस्मिन्वाच्ये एकवचनम्, द्वयोर्द्विवचनमित्यादिवाच्यानियमस्य सिद्धत्वात् "द्व्येकयोः" इत्यादिनियमसूत्रद्वयं विभक्तेर्लक्षयाप्यन्यत्र प्रयोगो न कार्य इति लक्षणानियमार्थं वाच्यम्, तथा च तद्विरोधः स्यादित्यर्थः।

ननु न लक्षणानियमार्थं सूत्रद्वयम्, तथा सति "द्वित्वैकत्वयोर्द्विवचनैकवचने, बहुत्वे बहुवचनम्" इत्यपि सूत्रप्रणयनं स्यात्, तावतापि तन्नियमलाभात्, अतो धर्मिग्रहणं कृतवतः सूत्रकारस्येत्थमभिप्रायो गम्यते, अवयवावयविनोस्तन्तुपटयोर्न गोघटादिवद्भेद एव, किंत्वभेदोऽप्यस्ति। तथा च बह्ववयवाभेदांशमादाय नैकस्मिन्पटे पटा इति बहुवचनं प्रयोक्तव्यम्, न वा एका[1]वयव्यभेदमादाय बहुषु तन्तुषु तन्तुरित्येकवचनम्, किं त्वेकत्वादिषु यस्य यो धर्मी तत्रैव तद्वचनप्रयोगो न त्वन्यस्मिन्नन्यधर्म्य[2]भेदविवक्षयेति, तथा च न लक्षणानियम इत्याशङ्क्य निषेधति—न च वाच्यमिति। एकान्त-

[1] वयवभेद—च. [2] धर्मभेद—च.

भेदाभावेऽपि नावयवबहुत्वेनैकस्मिन् पटे बहुवचनं पटा इति, न वावयव्येकत्वेन तन्तुष्वेकवचनं तन्तुरिति, किं तु तत्र तत्र तत्तद्वचनव्यवस्थैवेति। संज्ञाविधानेऽपि धर्मिग्रहणात्तत एवोक्तनियमलम्भनात् । न चैकस्य विधिनियमपरत्वमयुक्तम्, प्राप्त्यपेक्षत्वान्नियमस्येति वाच्यम् ; विषयविशिष्टसंज्ञाविधाने नियमस्यार्थलभ्यत्वात्। अन्यथा "सोमेन यजेत" इत्यादिविशिष्टविधावगतेः । तत्रापि द्रव्यांशस्य नियाम्यत्वात्।

### रत्नतूलिका

भेदो नियतभेदः। अयमपि नियमः संज्ञाविधौ धर्मिग्रहणेनान्यथासिद्ध इत्याह—संज्ञाविधानेऽपीति। "तान्येकत्ववचनद्वित्ववचनबहुत्ववचनान्येकशः" इति सूत्रप्रणयनेऽपि तस्य तस्य वाच्यविशेषज्ञानसंभवे धर्मिग्रहणमेकत्वादिधार्मिण्येवैकवचनादि न तु तद्भेदादन्यत्रापीति नियमं लम्भयतीत्यर्थः। अयुक्तत्वे हेतुमाह—प्राप्त्यपेक्षत्वादिति। अनेन सूत्रेणैकवचनादिसंज्ञा प्रापणीया स्वादीन्येकवचनादिसंज्ञकानीति । ततः संज्ञाप्राप्तिमपेक्ष्य तान्येकवचनादीन्येकादिमात्रवाचकानीत्यनेनैव सूत्रेण नियमोऽपि कर्तव्य इति विरम्यव्यापारदोषः स्यादिति भावः। विधावेव वाक्यस्य व्यापारः, नियमस्त्वर्थलभ्य इत्यतो न दोष इति परिहरति—विषयविशिष्टेति। अर्थलभ्यत्वादिति । लोकसिद्धविषयस्य पुनरुपादानसामर्थ्यलभ्यत्वादित्यर्थः । अयं भावः—सु औ जसित्यादेरेकादिविषयकत्वं लोकसिद्धम् ; घटः घटौ घटाः इत्यादावेकादिप्रतीतेः। तथाप्यत्रान्वर्थसंज्ञाविधानेन लोकसिद्धस्यैकादेर्विषयस्य यदुपादानं क्रियते तस्येदं प्रयोजनं सु इत्यस्यैक एव विषयो न द्व्यादिरिति नियम इति । अगतेरिति । तत्रापि यागप्राप्तिमपेक्ष्य द्रव्यनियमे

**अतो गङ्गापदस्येव तीरे वचनानामपि व्यत्यस्य लक्षणया प्रयोगप्राप्तौ तन्नियमाय "द्व्येकयोः" इत्यादिविधिरिति सुब्विभक्तौ लक्षणानिवृत्तिरवगम्यते।**

**न चातो नियमाद्वचनांशलक्षणानिवृत्तावपि विभक्त्यंशलक्षणा न निवर्तते, नियामकाभावादिति वाच्यम्; यतो द्वित्वैकत्वयोरिति धर्मग्रहणे कर्तव्ये धर्मिग्रहणं ज्ञापयति—**

रत्नतूलिका

विरम्यव्यापारः स्यादित्युक्तैव गतिराश्रयणीया। यागे साधनत्वेन लोकसिद्धसोमद्रव्योपादानसामर्थ्यस्य तत्रापि सत्त्वादित्यर्थः। नियमसूत्रद्वयस्य प्रयोजनान्तराभावाल्लक्षणानियम एव प्रयोजनमित्युपसंहरति—**अतो गङ्गापदस्येवेति।**

**न चातो नियमादिति।** स्वादेर्द्वे रूपे विभक्तिरूपं वचनरूपं चेति। ततश्च नियमसूत्रे वचनांशमादाय नियमकरणादेकवचनस्य लक्षणया द्व्यादौ प्रयोगनिवृत्तावपि विभक्तेर्विभक्त्यन्तरार्थे लक्षणया प्रयोगो न निवर्तयितुं शक्यते, हेत्वभावादित्यर्थः। वचनांशमात्रनियमाय न सूत्रद्वयम्; तावन्मात्रस्य धर्मिग्रहणं विनाप्युक्तनियमद्वयादेव लाभेन तद्ग्रहणानर्थक्यादित्यभिप्रायं हृदि निगूह्य परिहरति—**यतो द्वित्वैकत्वयोरितीति।** एकस्मिन्नेकवचनम्, द्वयोर्द्विवचनम्, बहुषु बहुवचनमिति धर्मिग्रहणादेवं ज्ञायते। वचनान्येकत्वादिरूपस्वार्थसंबन्धिनि धर्मिण्येव पर्यवस्यन्ति, तत्रैव समाप्यन्ते, एको घटः, कर्म घट इत्यादिप्रकृतिप्रत्ययसामानाधिकरण्यदर्शनेन प्रत्ययस्य प्रकृत्यर्थपर्यवसानावश्यम्भावात्। न तु लक्षणयाप्यन्यत्र नीयन्त इत्यर्थः। प्रकृत्यर्थ एव पर्यवसानलक्षणं प्रकारं प्राप्तानां वचनानां तस्य स्वार्थसंबन्धित्वं

स्वार्थसंबन्धितया प्रकृत्यर्थ एवावस्यन्ति वचनानि, न तेषां प्रकृत्यर्थे स्वार्थैकाधिकरण्यसंबन्धेनार्थान्तरेऽपि लक्षणेति।

न च वचनांशस्यैवायमपि नियम इति शङ्क्यम्; तस्योक्तनियमद्वयसामर्थ्यादेव तत्सिद्धौ कृतकरणानर्थक्यात्। अतो वचनस्य स्वेन रूपेण विभक्तिरूपेण वा स्वार्थैकाधिकरण्यसंबन्धेनान्यथा वा सङ्ख्यान्तरे कारकान्तरे वा न लक्षणेति "द्व्येकयोः" इति सूत्रतात्पर्यपर्यवसानात् सिद्धः सुब्विभक्तौ

रत्नतूलिका

लक्षणम्। तथा चेत्थंभावे तृतीया। स्वार्थसंबन्धितया अवस्यन्ति पर्यवस्यन्ति, समाप्यन्त इति यावत्। न तेषामिति। स्वार्थेन प्रत्ययार्थेनैकत्वादिना सह प्रकृत्यर्थे ऐकाधिकरण्यादिलक्षणो यः [1] संबन्धस्तेन संबन्धेनार्थान्तरे[1] लक्षणा नास्तीत्यर्थः।

नियमसूत्रद्वयाशयमजानानस्यापातप्रतीतावलम्बिनः शङ्कामाशङ्क्य निषेधति—न च वचनांशस्यैवेति। न तु विभक्त्यंशस्यैत्येवकारार्थः। ततश्च वचनस्य वचनान्तरार्थे लक्षणाया दोषत्वेऽपि विभक्तेर्विभक्त्यन्तरार्थे लक्षणा न दुष्यतीति भावः। अनन्यथासिद्धनियमो हि धर्मिग्रहणप्रयोजनं वाच्यम्; वचनांशनियमस्त्वन्यथासिद्ध इत्याशयमुद्घाटयति—तस्योक्तेति। तस्य वचनांशस्य विशिष्टसंज्ञाविधाने विषयांशे य आर्थिको नियमः, यश्च द्व्येकयोरित्यादिसूत्रकृतः, तयोः सामर्थ्यादेव तत्सिद्धौ नियमसिद्धावित्यर्थः। अतो धर्मिणं गृहीत्वा "द्व्येकयोः" इत्यादिनियमं कृतवतः सूत्रकारस्य विभक्तेः केनापि रूपेण कस्मिन्नपि लक्षणा नास्तीत्यभिप्रायो गम्यत इत्युपसंहरति—अतो वचनस्येति। अन्यथा

[1] संबन्धस्तद्वचनस्य वचनान्तरार्थे—कुं.

लक्षणाभावः। तिङ्साधारण्ये सत्यस्य सूत्रस्य तत्रासंभवदप्युक्त-स्वारस्यमहातव्यम्। संभवो ह्यनुसर्तव्यः, न त्वन्यत्रासंभवा-दन्यत्र संभवस्त्यक्तव्यः।

## लक्षणानङ्गीकारे पाशाधिकरणविरोधशङ्कापरिहारौ

नन्वेवं "अदितिः पाशान्" इत्यादौ कथमवयवबहुत्वे लक्षणा, अथ न लक्षणा "जात्याख्यायामेकस्मिन्बहुवचनमन्यत-रस्याम्" इत्यनुशासनादिति चेन्न; प्रयोगसमवायिनो मन्त्रस्य व्यक्तिवचनतया सन्निहितविशेषपरत्वेन जातेरना-

### रत्नतूलिका

वेति। स्वार्थविरोधितालक्षणसंबन्धेन वेत्यर्थः। तत्रासंभवदपीति। रथो गच्छतीत्यादिलाक्षणिकप्रयोगाणां तद्विषये बहुलमुपलम्भादिति भावः।

सुब्विभक्तौ लक्षणानङ्गीकारे पाशाधिकारणविरोधं शङ्कते— नन्वेवमिति। इत्थं नावमिकं तदधिकरणम्—"अदितिः पाशान् प्रमुमोक्त्वेतम्" इति बहुवचनान्तो मन्त्रः किं प्रकृतावग्नीषोमीये पशौ निविशते, उत बहुपाशके कर्मण्युत्कृष्यत इति संशये एकपाशके प्रकृतेऽग्नीषोमीये बहुवचनान्तमन्त्रस्यासमवेतार्थत्वाल्लिङ्गेन प्रकृत-संबन्धं बाधित्वा उत्कर्ष इति पूर्वः पक्षः। प्रकृतेऽपि पाशस्य तत्कर्मकोन्मोचनस्य च संभवेन मन्त्रस्य पाशोन्मोचनाभिधानेन संभवन्निवेशस्य गुणभूतसङ्ख्यानुरोधेनोत्कर्षो न युक्तः। बहुवचनं त्ववयवबहुत्वे लक्षयापि भविष्यतीति सिद्धान्त इति। प्रयोगसम-वायिन इति। तत्समवायश्च मन्त्रस्य क्रियातत्संबन्धिप्रकाशकत्वेन वाच्यः। न चात्र पाशस्येव तन्निष्ठजातेः क्रियासंबन्धोऽस्ति; तस्या उन्मोचनकर्मत्वाभावात्। अतो न सा मन्त्रप्रकाश्येत्यर्थः।

चिख्यासितत्वात्। न च पाशप्रकृतेरेव पाशावयवे लक्षणा, प्रत्ययस्तु स्वार्थवृत्तिरेवेति वाच्यम्; एवं हि पाशावयवानामक्रत्वङ्गतयानुष्ठेयार्थाप्रकाशकस्य मन्त्रस्यानर्थक्यमदृष्टार्थत्वं वा प्रसज्येत।

"गुणे त्वन्याय्यकल्पनैकदेशत्वात्" इति सूत्रं च विरुध्येत। उच्यते—न पाशप्रातिपदिकपरस्य बहुवचनस्य

### रत्नतूलिका

नन्वध्ययनविधिरक्षरमात्रस्याप्यानर्थक्यं न सहत इत्यत आह—अदृष्टार्थत्वं वेति। तच्च दृष्टसंभवे अन्याय्यम्। अत एव मन्त्राधिकरणे मन्त्राणामनुष्ठेयार्थप्रकाशनरूपदृष्टार्थत्वमुक्तमिति भावः।

पक्षद्वयसाधारणं दूषणान्तरमाह—गुणे त्वन्याय्येति। "विप्रतिपत्तौ विकल्पः स्यात्समत्वाद्गुणे त्वन्याय्यकल्पनैकदेशत्वात्" इति सूत्रम्। तत्र बहुवचनान्त उत्कृष्टव्यो न वेति विप्रतिपत्तौ नोत्कृष्टव्य इति। ननु प्रकृतावन्यो मन्त्र एकपाशप्रकाशकोऽस्तीति कथमस्यानुत्कर्ष इति चेत्, तेन सह विकल्पो भविष्यतीति। ननु वचनस्यार्थवशेन बहुपाशके उत्कर्षो वाच्यः। तदुत्कृष्यमाणमेकदेशं प्रातिपदिकमप्युत्कर्षतीत्यस्योत्तरं गुणे त्वन्याय्यकल्पना लक्षणकल्पना। अत एव तन्त्ररत्ने "बहुवचनं त्ववयवगतमवयविन्यभेदविवक्षयोपचर्यते स्तोतुं प्रयुक्तम्" इत्युक्तम्। शास्त्रदीपिकायामपि "बहुवचनस्यैकस्मिन्प्रयोगोऽवयवबहुत्वाभिप्रायेण च्छान्दस" इत्युक्तम्। न प्रधाने प्रकृतौ तदनुरोधेन लक्षणा उत्कर्षो वा; वचनांशस्यैकदेशत्वादिति लक्षणा प्रतिपादिता, तद्विरुध्येतेत्यर्थः। प्रत्ययानां प्रकृत्यर्थगतस्वार्थबोधकत्वं न नियतम्; पचति पाचक इत्यदौ तिङ्कृदादिषु

पाशावयवबहुत्वे लक्षणा संभवति ; प्रत्ययानामौत्सर्गिकप्रकृत्यर्थगतस्वार्थबोधकत्वव्युत्पत्तिविरोधात् । किं तु पाशावयवगतबहुत्वं पाशे समारोप्य तत्र स्वशक्त्यैव बहुवचनस्य वृत्तिः । यथा विष्णुत्वमारोप्य प्रतिमादौ विष्णुशब्दस्य, यथा वा अग्नित्वमारोप्य दिव्यग्निशब्दस्य वृत्तिः "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" इत्यादौ ।

उक्तं ज हरिणा—

"गोत्वानुषङ्गो वाहीके निमित्तात्कैश्चिदिष्यते ।
अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थितः" ॥ इति ॥

रत्नतूलिका

व्युभिचारादित्यत उक्तं—औत्सर्गिकेति । तत्र "कर्तरि कृत्", "लः कर्मणि च" इत्यादिविधानस्येवात्र बाधकस्याभावादिति भावः । समारोप्येति । आरोपश्च स्तुत्यर्थ इति भावः । स्वशक्त्यैवेति । ततश्च शक्त्यैव स्वार्थप्रतिपादनेन विवक्षितार्थत्वे संभवति नाविवक्षितार्थत्वकल्पनं युक्तमिति भावः । आरोपितार्थे शब्दस्य मुख्यत्वमित्येतदुदाहरति — यथा विष्णुत्वमिति । दिव्यग्निशब्दस्येति । "अग्निर्मूर्धा" इत्यादावग्निशब्देन द्यौरेवोच्यते । तस्याः "द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिम्" इत्यादौ परमात्ममूर्धत्वकल्पनेनात्रापि तस्या एव प्रत्यभिज्ञानात्, "असौ वा व लोको गौतमाग्निः" इति श्रुतौ तत्राग्नित्वारोपाच्चेति भावः। आरोपितार्थे शब्दस्य मुख्यत्वमित्यत्र संमतिमाह—उक्तं च हरिणेति। निमित्तादिति। आरोपरूपादित्यर्थः । विपर्यस्तमिति । पूर्वं सास्नादिमान्वाच्यः, इदानीं बाहीक इति विपर्यास इत्यर्थः ।

सूत्रे चारोपितविषयत्वकल्पनैवान्याय्यकल्पनाभिमता। प्रकृत्यर्थसंबन्धी खल्वर्थः प्रत्ययस्य मुख्यः "तान्येकवचन" इत्यादिधर्मिग्रहणस्वारस्यात्। न च वचनानां सङ्ख्येयपर्यन्तत्वाय धर्मिग्रहणं मा भूत्, अन्तरेण प्रकृतिं केवलानामप्रयोग इति

## रत्नतूलिका

लक्षणानङ्गीकारे सूत्राविरोध इति यदुक्तम्, तत्परिहरति-- **सूत्रे चेति**। अत एव तन्त्ररत्ने लक्षणेति नोक्तम्। किं तु "अवयवगतमवयविन्यभेदविवक्षयोपचर्यते स्तोतुम्" इत्येवोक्तम्। शास्त्रदीपिकायामपि "बहुवचनस्यैकस्मिन्प्रयोगश्छान्दसः" इत्येवोक्तम्। तदुभयमारोपितार्थत्वेऽपि न विरुद्धमिति भावः। ननु शक्त्या स्वार्थवृत्तिकल्पनस्य न्याय्यत्वात् कथमारोपितविषयत्वकल्पनमन्याय्यकल्पनम्, कथं वा तत्र लक्षणाव्यवहार इत्यत आह—**प्रकृत्यर्थेति**। तत्र हेतुमाह—**तान्येकवचनेति**। धर्मिग्रहणस्वारस्यात्स मुख्योऽर्थः, पाशानित्यादौ चाविद्यमानप्रकृत्यर्थसंबन्धारोपात्तत्र लक्षणाव्यवहारो भवन्नपि गौण इत्यन्वयः। धर्मिग्रहणप्रयोजनमन्यदेव, अतो न तद्बलेन प्रकृत्यर्थसंबन्धिनो मुख्यतेत्याशङ्क्य निषेधति—**न च वचनानामिति**। **सङ्ख्येयपर्यन्तत्वाय** सङ्ख्येयवाचकप्रकृत्या सह समभिव्याहारेणैकपदतया घटमित्यादिरूपेण प्रयोगायेत्यर्थः। तत्पर्यन्तत्वविवक्षाया व्यावर्त्यं दर्शयति—**माभूदिति**। **केवलानामिति**। प्रकृत्या ऐकपद्यमनापन्नानां घट अं इत्यादिरूपेण प्रयोगो मा भूदित्यर्थः। ननु प्रकृतिप्रत्ययार्थयोः संबन्धो लोकसिद्धः, स च कथं व्यस्तप्रयोगे प्रतीयतामित्याशङ्क्य घटमानयेत्यादौ यथा घटानयनयोः संबन्धप्रत्ययस्तथा प्रकृतिप्रत्यया-

प्रकृत्यर्थसंबन्धस्य समभिव्याहारलभ्यत्वादिति वाच्यम् ; व्युत्पत्तिसिद्धप्रकृतिप्रत्ययसामानाधिकरण्यभङ्गप्रसङ्गात्, एकार्थवृत्तित्वाभावात्, एकस्मिन्नेव गवि गाव इति प्रयोगसाधुत्वप्रसङ्गाच्च।

अर्थाभावेऽपि हि साधवो दृश्यन्ते गोदौ पञ्चाला वरणा

रत्नतूलिका

र्थयोरपीत्याह—**प्रकृत्यर्थसंबन्धस्येति**। घटमित्यादावेकं घटमित्यादिसामानाधिकरण्यप्रतीतिः सर्वानुभवसिद्धा। सा च समभिव्याहारमात्रेण न सिध्यति। तावन्मात्रेण संसर्गसिद्धावप्यभेदस्यासिद्धेः। तथा चोभाभ्यां मिलित्वा घटत्वेनैकत्वेन चैकोऽर्थः प्रतिपाद्यः। तत्प्रतिपादनं चैकपद्यमन्तरा न संभवतीति लोकत एव केवलयोस्तयोः प्रयोगाभावसिद्धौ किं तत्र सूत्रकारयत्नेनेत्याभिप्रेत्य दूषयति—**व्युत्पत्तिसिद्धेति**। तत्र हेतुमाह—**एकार्थेति**। ऐकपद्याभावे प्रकृतेर्घटादिमात्रे प्रत्ययस्यैकत्वादिमात्रे च पर्यवसानादिति भावः। एवं प्रकृत्यर्थसंबन्धी खल्वर्थः प्रत्ययस्य मुख्य इत्यत्र साधकमुक्तम्। इदानीमनङ्गीकारे बाधकमाह—**एकस्मिन्नेवेति**। यथा वह्निना सिञ्चेदिति वाक्ये [1]समभिव्याहारगम्यसंसर्गस्य बाधितत्वेऽपि पदार्थाबाधात् वह्निनेत्यस्य सिञ्चेदित्यस्य च साधुत्वमेवं गाव इत्यत्र प्रकृतिप्रत्यययोः साधुत्वं स्यादित्यर्थः।

ननु पृथक्पदयोस्तथा साधुत्वेऽपि न प्रकृतिप्रत्यययोः स्वार्थसंबन्धबाधे साधुत्वमित्याशङ्क्याह—**अर्थाभावेऽपीति**। प्रकृत्यर्थसंबन्ध्यर्थाभावेऽपीत्यर्थः। गोदयोरदूरभवौ ग्रामो गोदौ, "अदूरभवश्च" इत्याणि "वरणादिभ्यश्च" इति तस्य लुपि "लुपि युक्तवद्व्यक्तिवचने"

[1] समभिव्याहारस्य संसर्गस्य—क.

आपो दारा इत्यादयः। अतः प्रकृत्यर्थसंबन्धोपाधिनैव सङ्ख्या-कारकादिरर्थः प्रत्ययस्य मुख्यः। पाशानित्यादौ चाविद्यमान-प्रकृत्यर्थसंबन्धारोपात् तत्र लक्षणाव्यवहारो भवन्नपि गौणः। अन्यथा पाशानिति विभक्तिलक्षणाङ्गीकारे पाशावयवबहुत्व-लक्षणायां व्युत्पत्तिविरोधात् पाशगतैकत्व एव लक्षणां ब्रूयुः।

अथैवमारोपालम्बनत्वे [1]पौरुषेयत्वं स्यात्, "ब्राह्मणो यजेत" इत्यादावपि स्यात्। न च साम्प्रतिकोऽयमप्यारोपः;

रत्नतूलिका

इति प्रकृतिवद्वचने सति द्विवचनान्तत्वम्। एवं वरणा इति बहुवचनमपि। एवं पञ्चाला इति पञ्चालानां निवासो जनपद इत्यर्थे "तस्य निवासः" इत्यणि तस्य "जनपदे लुप्" इति लुपि "लुपि युक्तवत्" इति बहुवचनान्तत्वम्। अतो [2]धर्मग्रहणस्यानन्यप्रयोजनत्वात् स्वाभिमत-सिद्धिरित्युपसंहरति—अत इति। सङ्ख्यादेर्मुख्यार्थत्वे प्रकृत्यर्थसंबन्ध उपाधिः प्रयोजक इत्यर्थः। भवन्नपीत्यनेन ग्रन्थेषु तादृशव्यवहारो न दृश्यत इति सूचयति—गौण इति। अनुपपत्तिप्रतिसन्धानेन ज्ञेयत्वलक्षण-गुणयोगादित्यर्थः। व्युत्पत्तिविरोधादिति। प्रत्ययानां प्रकृत्य-र्थान्वितस्वार्थबोधकत्वव्युत्पत्तिविरोधादित्यर्थः।

प्रतिबन्द्या दूषयति––ब्राह्मणो यजेतेति। देहविशेषानु-गतो जातिविशेषो ब्राह्मणत्वादिः, देहातिरिक्तश्चेतन आत्मा कर्मणां कर्ता, तदुभयसामानाधिकरण्येन "ब्राह्मणो यजेत", "ब्राह्मणो नित्यं मद्यं वर्जयेत्" इति विधिनिषेधा दृश्यन्ते। ते च बोध्यपुरुषारोपालम्बना इति तत्रापि पौरुषेयत्वं स्यादित्यर्थः। नन्वनादिसिद्ध[3]परकीयारोपविषयत्वाद्ब्राह्मणत्वादेर्न तत्र पौरुषेयत्वमिति चेत्, प्रकृतेऽपि समानमित्याह—न च साम्प्रतिक इति।

---

[1] पौरुषेयत्वाद्ब्राह्म—ङ. [2] धर्मि—च. कुं. [3] परिक्रिया—प.

**प्रकरणानिवेशप्रयोजनेनागमविवक्षारूपस्यैवास्यानादित्वोपगमात्।**

**एवं च षट्सु यागेषु फलसंबन्धविधानाय समुदायोपाधि-[1]गततद्द्वित्वारोपेण दर्शपूर्णमासाभ्यामिति द्विवचनम्, एकस्मिन्नप्यग्नीषोमदेवतारूपेऽ[2]धिष्ठानगतद्वित्वारोपेण "आशासाना मेधपतिभ्यां" इति द्विवचनम्, "ओषधे त्रायस्वैनम्", "स्वधिते मैनं हिंसीः" इति चेतनत्वारोपेण सम्बोधनमित्याद्युपपन्नम्**

## रत्नतूलिका

[3]परकीयारोपविषयत्वमपेक्ष्याप्यपौरुषेयत्वमुक्तम्। इदानीं तदनपेक्ष्याप्यपौरुषेयत्वमाह—**प्रकरणनिवेशेति**। "अदितिः पाशान्" इति बहुवचनान्तो मन्त्रोऽग्नीषोमीयप्रकरणे समाम्नातः। [4]तस्यादृष्टार्थतया प्रकरणनिवेशसिद्ध्यै वेदस्यैवानादिविवक्षा बहुत्वारोपरूपा कल्प्यत इत्यर्थः।

एवं वेदस्यानाद्यारोपरूपविवक्षाकल्पनयान्यदपि सिद्ध्यतीत्याह—**एवं चेति**। "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति", "उपांशुयाजमन्तरा यजति", ऐन्द्रं दध्यमावास्यायाम्", "ऐन्द्रं पयोऽमावास्यायाम्," "ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्" इत्यादिवाक्यैरुत्पन्नेषु षट्सु यागेषु "य एवं विद्वान्पौर्णमासीं यजते" "य एवं विद्वानमावास्यां यजते" इति वाक्यद्वयेन पौर्णमास्यमावास्याकालावुपाधी कृत्वा त्रिषु त्रिषु यागेष्वेकैकः समुदायः सम्पादितः। "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यधिकारवाक्ये यागानामेव समुदायोपाधिना फलसंबन्धबोधनम्, न समुदाययोः, ततश्च दर्शपूर्णमासयजिपदयोः सामानाधिकरण्यसिद्ध्यर्थं द्विवचनान्तपदं समुदायोपाधिगतद्वित्वारोपेण षट्सु यागेषु वर्तत इति वक्तव्यम्, तत्र चानाद्यारोपरूपा वेदविवक्षैव मूलमित्यर्थः। **एकस्मिन्निति**।

[1] गतद्वित्वा—ङ. [2] अधिष्ठानद्वित्वा—ङ. [3] परक्रिया—घ. [4] तस्य दृष्ट—च. कुं.

**किं पुनः "यजमानः प्रस्तरः" इत्यादौ तत्सिद्ध्यादि-**

### रत्नतूलिका

अग्नीषोमीयपशावध्रिगुप्रैषे "आशासाना मेधपतिभ्यां मेधम्" इति द्विवचनान्तो मन्त्रः श्रुतः, तथा शाखाभेदेन "मेधपतये मेधम्" इत्येकवचनान्तश्च। तत्र मेधपतिशब्दौ द्वावपि देवतावचनौ। तत्राग्नीषोमयोर्व्यासक्तमेकं देवतात्वमित्येकवचनान्तस्योपपत्तिः, अधिष्ठानद्वित्वेन द्विवचनान्तस्य। अतो देवतासङ्ख्यावशादेकवचनान्तस्य अधिष्ठानसङ्ख्यावशाद्द्विवचनान्तस्य च विकृतिषूहसिद्धिरिति नवमे "मेधपतित्वं स्वामिदेवतस्य" इत्यधिकरणे स्थितम्। तत्र देवताया-मधिष्ठानद्वित्वमारोप्य देवतावाचकस्य मेधपतिशब्दस्य द्विवचनान्तत्व-निर्वाहो वक्तव्य इत्यर्थः।

वेदस्यारोपालम्बनत्वसंभवे तत्सिद्धिपेटिकायां यजमानाश्वा-दित्यपशुसृष्टिप्राणभृच्छब्दानामप्यारोपेण संभवन्मुख्यार्थत्वमनादृत्य तत्सिद्ध्यादिलक्षणनिमित्तवशेन गौणार्थत्वाङ्गीकारोऽसङ्गत इत्याशङ्कते— किं पुनरिति। तत्सिद्ध्यादिरित्यादिपदेन "तत्सिद्धिजातिसारूप्य-प्रशंसाभूमलिङ्गसमवाया इति गुणाश्रयाः" इति सूत्रोक्तानां जात्यादीनां ग्रहणम्। तत्सिद्ध्यादयो गुणस्य गुणशब्दस्याश्रयाः प्रवृत्तिनिमित्ता-नीति सूत्रस्यार्थः। "यजमानः प्रस्तरः", "यजमान एककपालः" इत्यत्र गुणविधिरर्थवादो वेति संशये चरमश्रुतप्रस्तरशब्दलक्षिते स्रुग्धार-णादौ यजमानलक्षणगुणविधिरिति पूर्वपक्षं कृत्वा, यजमानस्य स्रुग्धारणे विनियोगे स्वपदार्थाननुष्ठानप्रसङ्गात् प्रस्तरवत्सूक्तवाकेन प्रहरणप्रसङ्गात् सर्वहुतप्रसङ्गाच्च न गुणविधिः, किं तु यजमानकार्यकरत्वगुणयोगात् प्रस्तरैककपालयोर्यजमानशब्देन स्तुतिरिति सिद्धान्तितम्। तथा "अग्निर्वै ब्राह्मणः" इत्यत्रापि गुणविधित्वासंभवेनार्थवादत्वे निश्चि-

## रत्नतूलिका

तेऽग्निशब्दस्य ब्राह्मणे प्रवृत्तौ निमित्तं जातिः। "प्रजापतिरकामयत प्रजायेयेति, स मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवतान्वसृज्यत, गायत्री छन्दो रथन्तरं साम ब्राह्मणो मनुष्याणाम्" इति सृष्टिकाले ब्रह्मणो मुखजातत्वमिति प्रतिपादितम्। तथा "आदित्यो यूपः" इत्यत्रादित्यशब्दस्य यूपे प्रवृत्तौ निमित्तमञ्जननिमित्तं तेजस्वित्वरूपं सारूप्यमिति। तथा "अपशवो वा अन्ये गो अश्वेभ्यः पशवः" इत्यत्र पशुकार्ये गवाश्वव्यतिरिक्तानां प्रतिषेध इति पूर्वपक्षे तत्र तत्र विहितानामजादीनां प्रतिषेधायोगादर्थवाद इति सिद्धान्तं कृत्वा प्रशंसा-लक्षणनिमित्तवशात्पश्वातिरिक्त[1]प्रतिपादकस्याप्यपशुशब्दस्याजादिपरत्वम्। तथा हि—नञ्समासान्तर्गतपशुशब्देन गवाश्वपदसमभिव्याहारबला-द्गवाश्वगतं प्राशस्त्यं लक्ष्यते, तच्चाजादिषु नञा पर्युदस्यते, अजादिकं गवाश्वादिवत्प्रशस्तं नेति। सोऽयं प्राशस्त्याभावोऽपशूनां घटादीनां पश्वन्तराणामजादीनां च तुल्य इति, अनेन सादृश्येन पश्वन्तराण्यपशव उच्यन्ते, निमित्ते च प्रशंसापि प्रविष्टेति प्रशंसाया निमित्तत्वव्यपदेश इति। "सृष्टीरुपदधाति" सृष्टिः सर्जनं तत्पदवन्मन्त्रवतीरिष्टका उपदधातीत्यर्थः। अत्र "एकयास्तुवत प्रजा अधीयन्त प्रजापति-रधिपतिरासीत्तिसृभिरस्तुवत ब्रह्मासृज्यत" इत्यनुवाके आम्नातानां प्रकरणप्राप्तानां सृष्ट्यसृष्टिलिङ्गकानां मन्त्राणां मध्ये केषांचित्परिसङ्ख्या मा भूदित्युपधानविधिपरे वाक्ये सृष्टीरिति लिङ्गप्राप्तमन्त्रानुवाद इति स्थितम्। तत्र सृष्टिसमुदाये विद्यमानं सृष्टिबाहुल्यं सृष्ट्यसृष्टिसमु-दायेऽपि वर्तत इति सृष्टिबहुत्वलक्षणगुणयोगात्सृष्टिशब्दोऽसृष्टौ गौण इति। एवं "प्राणभृत उपदधाति" इत्यत्र लिङ्गस्य प्राणलिङ्गस्य

---

[1] प्रतिपादकस्यापशु—क.

रालभ्यते, न पुनरारोपः। कथं नाम गुणवादेन विध्यपेक्षिता स्तुतिः सन्निकृष्येतेति।

प्रोद्गातॄणामित्यादौ तु न पाशन्यायोऽनुगम्यते ; उद्गातृप्रातिपदिकलक्षणायामुद्गातृगणस्य चमसभक्षणप्राप्तौ प्रतिपत्ति-

रत्नतूलिका

समवायः संबन्धो निमित्तम्। तत्र "अयं पुरो भुवः" इत्यनुवाकपठितेषु मन्त्रेषु प्राणपदवतां मन्त्राणामल्पत्वात् तद्भूमाभावेऽपि तत्समवायो वर्तते। अतः प्राणभृत्समुदाये विद्यमानस्य गुणस्य प्राणभृद्प्राणभृत्समुदायेऽपि सत्त्वात्प्राणभृच्छब्दो गौण इति। परिहरति—**कथं नामेति। विध्यपेक्षितेति।** "उत्तरं बर्हिषः प्रस्तरं सादयति" इत्यादिविध्यपेक्षितेत्यर्थः। **सन्निकृष्येतेति।** यथा लोके राजकार्यकरणगुणालम्बनेन राजामात्यादौ राजपदप्रयोगे स्तुतिः प्रतीयते, न तथा राजत्वारोपेण तत्प्रयोगे, तद्वदत्रापीति भावः।

ननु यदि पाशानित्यत्र बहुत्वारोपस्तर्हि "प्रैतु होतुश्चमसः, प्र ब्रह्मणः, प्रोद्गातॄणाम्" इत्यत्रापि एकस्मिन्नुद्गातरि बहुत्वारोपसंभवात् "उद्गातृचमसमेकस्य श्रुतिसंयोगात्" इति तार्तीयाधिकरणे ससुब्रह्मण्यानामसुब्रह्मण्यानां वा त्रयाणामुद्गातृप्रस्तोतृप्रतिहर्तॄणां भक्षणमिति व्यवस्थापनविरोध इत्यत आह—**प्रोद्गातॄणामित्यादाविति।** कुत इत्यत आह—**उद्गातृप्रातिपदिकेति।** युक्तं तत्र बहुत्वस्य प्रकरणेऽत्यन्तासंभवादन्याय्यकल्पनेति। इह तु प्रातिपदिकलक्षणायां भाष्यकाररीत्या चतुर्णां वार्तिककाररीत्या त्रयाणां वा भक्षणप्राप्तेः प्रतिपत्तिबाहुल्यं लभ्यत इति तद्वशेन प्रातिपदिकलक्षणैव युक्तेति भावः।

भूमप्रयोजनत्वात् । "अभिधेयच्युतावर्थवशेन शब्दवृत्तिव्यवस्थितिः" इति हि न्यायः ।

यथा "समानमितरच्छयेनेन" इत्यत्र सदृशसन्निहिताभिधेयासंभवादितरशब्द[1]स्याप्यर्थवशेन सदृशे वृत्तिरिष्यते, न सन्निहिते । अत एवोद्भिदादौ प्रवृत्तिविशेषप्रयोजनेन द्रव्यभेदवृत्तिराशङ्क्यते ।

रत्नतूलिका

प्रयोजनवशेन [2]प्रमाणस्यान्यथाकरणे अतिप्रसङ्ग इत्यत आह—अभिधेयच्युताविति । अर्थवशेन प्रयोजनवशेन ।

तत्र दृष्टान्तमाह—यथेति । सप्तमे "समानेषु पूर्ववत्त्वादुत्पन्नाधिकारः स्यात्" इत्यधिकरणे चिन्तितम्—इषावेकाहे ज्योतिष्टोमविकारे "इषुर्विष्टुतिः सप्ताहं भवति" इति प्राकृतानां स्तोत्राणां विकारं विधाय श्रूयते "समानमितरच्छयेनेन" इति । तत्रेतरशब्दस्य सन्निहितवाचित्वाच्छयेनवैशेषिकाणामिषावसन्निहितत्वान्न तद्वाचित्वम्, ज्योतिष्टोमाङ्गानां तु श्येनेऽपि सत्त्वादत्रापि चोदकेन सन्निहितत्वादस्ति श्येनसादृश्यापादकत्वमिति तदपेक्षोऽयमनुवाद इति प्राप्ते—सत्यमितरशब्दः सन्निहितमभिधत्ते, न तु तन्मात्रम्; किं तु पूर्वनिर्दिष्टसदृशं सन्निहितं च यत्तदभिधत्ते । तदिह यत्सन्निहितं ज्योतिष्टौमिकं न तत्पूर्वोक्तसदृशम्, अप्राकृतानां सप्ताहादीनां पूर्वमुक्तत्वात्, यदप्राकृतं लोहितोष्णीषादिश्येनवैशेषिकं तदसन्निहितमपि पूर्वोक्तसदृशमित्यवश्यहातव्येऽन्यतरस्मिन् लोहितोष्णीषादिप्राप्तिलक्षणप्रयोजनवशेन सन्निहितत्वं हित्वा सादृश्यपरिग्रह इति । द्रव्यभेदवृत्तिराशङ्क्यत इति । प्रथमाध्याये "अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात्"

---

[1] स्यार्थवशेन—ङ. [2] प्रामाण्यस्य—कुं.

परं त्वर्थविशेषानियमान्मत्वर्थलक्षणादोषाच्च कर्मनामत्वं व्यवस्थाप्यत इति। एवं सति "सक्तून्जुहोति", "अग्निहोत्रं जुहोति" इत्यादौ च पदार्थ[1]स्तन्मतिर्वा शाब्दमितौ करणमिति मते कथंचित्करणत्वोपस्थितौ शाब्दमितिः स्यात्,

रत्नतूलिका

इत्यधिकरण इति शेषः। "उद्भिदा यजेत पशुकामः" इत्यत्रोद्भित्पदस्य व्रीह्यादिपदवत्समुदायरूपेण क्वचिद्रूढत्वाभावेऽपि उद्भिनत्तीत्यवयवयोगेन कथंचिदुद्भेदनसाधनद्रव्यविशेषे प्रसिद्धिसंभवेन गुणविधायकत्वम्। तथा सति [2]गुणप्रवृत्तिलक्षणप्रयोजनं सिद्ध्यतीति प्रयोजनवशेन द्रव्यविशेषपरत्वमाशङ्क्यत इत्यर्थः।

ननु कथं पूर्वपक्षे आशङ्कामात्रेण प्रयोजनवशेनार्थव्यवस्थासिद्धिरित्यत आह—परं त्विति। सत्यं द्रव्यपरत्वे प्रवृत्तिविशेषरूपप्रयोजनलाभ इति, तथाप्युद्भेदनसाधनं द्रव्यमिदं तदिति निश्चयासंभवादनिश्चितः शास्त्रार्थः स्यात्। किं चोद्भिद्वता यागेनेति सामानाधिकरण्येनान्वये मत्वर्थलक्षणा स्यात्, अतो नामत्वमिति कारणान्तरेण नामत्वं व्यवस्थापितमिति भावः। ननु "सक्तून्जुहोति" इत्यादौ सक्तूनां भूतभाव्युपयोगाभावेन सामीहितत्वाभावात्तद्वाचिन्या द्वितीयायाः करणत्वे लक्षणा वाच्या, तथा "अग्निहोत्रं जुहोति" इत्यत्र होमस्य भावनाकरणत्वेन तत्र द्वितीयाया लक्षणेति कथं सुविभक्तौ लक्षणाभाववचनमित्यत आह—एवं सतीति। कथंचिदिति। यजति जुहोतीत्यादाविव योग्यतादिना करणत्वोपस्थिताविल्यर्थः। ननु वृत्त्या पदेनोपस्थितिं विना कथं शाब्दबोधविषयत्वमित्यत उक्तं—पदार्थस्तन्मितिर्वेत्यादि। तथा च तन्मते शब्दस्य करणत्वा-

---

[1] स्तन्मिति—ग. ङ. [2] गुणे प्रवृत्ति—च. कुं.

प्रत्ययस्तु यथायोगं होमभावनाविषयताप्राप्तकर्मत्वानुवादः । अथवा "व्यत्ययो बहुलम्" इति छन्दसि द्वितीयापि [1]करणशक्ता स्यात् । अत एव विभक्तिविपरिणाम इष्यते नीतिनिपुणैः ।

एवं सत्यग्निहोत्रेण होमेनेति सामानाधिकरण्यमुपपद्येत, "चतुर्होतारं जुहुयात्" इत्यादौ करणमन्त्रे द्वितीया चेति ।

## रत्नतूलिका

भावात्तद्व्यापाराभावेऽपि न दोष इति भावः । कथं तर्हि द्वितीयाया उपपत्तिरित्यत आह—प्रत्ययस्त्विति । यथायोगमिति । होमविषयता सक्तूनां, भावनाविषयत्वमग्निहोत्रस्येत्यर्थः । न हि समीहितत्वं द्वितीयार्थः, किं तु समीहितासमीहितसाधारणं साध्यत्वमेव । तच्च होमभावनाविषययोरप्यस्तीति द्वितीयया तदनुवाद उपपद्यत इति भावः । अत एवेति । यतो व्यत्ययेन द्वियायाश्छान्दसी करणत्वे शक्तिः, अत एव सक्तुभिर्जुहोतीति विपरिणाम इत्युच्यतेऽभियुक्तैः । न तु लक्षणेतीत्यर्थः ।

अयमेव पक्षो ज्यायानित्याह—एवं सतीति । सामानाधिकरण्यमिति । समानविभक्तिसमभिव्याहारो विरुद्धविभक्त्यभावो वा सामानाधिकरण्यमिति वक्ष्यमाणं पक्षद्वयमपि द्वितीयाया व्यत्ययेन करणत्वशक्तिनिर्वाह्यमिति भावः । किं च "चतुर्होतारं जुहुयात्" इति द्वितीया श्रूयते । न च चतुर्होतुः 'पृथिवी होते'त्यस्य मन्त्रस्य करणस्य होमे सक्तूनामिव विषयतया कर्मत्वसंभवः, येनानुवादः स्यात्, अतो व्यत्ययेन करणत्वे शक्तिरेवाश्रयणीयेत्याह—चतुर्होतारमिति ।

[1] करणशक्त्या—ङ.

कारकविभक्तिबलीयस्त्वं तु पदान्तरयोगनिरपेक्षत्वनिबन्धनम्। उपपदविभक्तेश्च दौर्बल्यं[1] तत्सापेक्षत्वकृतमेव, न लाक्षणिकत्वकृतमनर्थकत्वकृतं वेति।

अन्ये तु—नानार्थेषु व्यत्ययेन प्रत्ययविधानमेव सुब्विभक्तौ लक्षणाभावं गमयति। अन्याय्यापि ह्यनेका शक्तिः कल्प्यते लक्षणा मा भूदिति। अन्यथा लक्षणयैव तत्तदर्थविशेषोपस्थितिसंभवेऽनेकशक्तिकल्पनावैयर्थ्यात्। युक्तं हि गवादिपदानां गौर्बाहीक इत्यादौ लाक्षणिकत्वे सत्येव शक्यार्थेयत्तापरिच्छेदाय नामकोशेषु स्वर्गेषुपशुवाग्वज्राद्यर्थभेदपरिसङ्ख्यानं, तेषां संबन्धनियमाभावेन[2] लक्षणायोगात्।

## रत्नतूलिका

ननूपपदविभक्तेर्दौर्बल्यं कारकविभक्तेः प्राबल्यमिति सर्वसम्प्रतिपन्नम्, तच्च लाक्षणिकत्वालाक्षणिकत्वकृतमिति सुब्विभक्तौ लक्षणा सिद्ध्यत्यत आह—**कारकविभक्तीति**। **तत्सापेक्षत्वकृतमिति**। सापेक्षायाः स्वार्थबोधने विलम्बाद्दौर्बल्यमिति भावः।

**व्यत्ययेनेति**। "कर्मणि द्वितीया" कालाध्वनोरधिकरणयोरत्यन्तसंयोगे द्वितीयेत्यादिविधानमित्यर्थः। लक्षणाभावगमकत्वं दर्शयति—**अन्याय्यापीति**। ननु नानेकशक्तिकल्पनं लक्षणाभावगमकम्; गवादिपदेषु व्यभिचारात्, इत्यत आह—**युक्तं हीति**। बाहीकः बाह्य इत्यर्थः। इयत्तापरिच्छेदः इयत्ताज्ञानम्। ननु तत्रापि [3]स्वर्गार्थत्वप्रतीतेर्लक्षणयापि संभवादनेकार्थत्वकल्पनं व्यर्थमित्यत आह—**तेषामिति**। नियतसंबन्धो लक्षणा, गङ्गातीरयोर्नि-

---

[1] तत्सापेक्ष-ख. [2] लक्षणाया विशेषात्-ङ. [3] स्वर्गाद्यर्थत्व-च. कुं.

कारकविशेषाणां पुनरेकार्थसमवायेन संबन्धनियमसंभावाल्लक्षणा-योगेऽप्यनेकशक्तिविधानस्य लक्षणाव्यावृत्तिफलत्वादिति वदन्ति। सर्वथापि कृद्योगविहिता कर्मणि षष्ठी समासे लुप्तेति तदेव ब्रह्मणो जिज्ञासाकर्मकत्वं ब्रह्मप्रातिपदिकेन लक्ष्यते।

### प्रकृतेर्लुप्तप्रत्ययार्थशक्तिनिरासः।

कश्चिदाह–लुप्तविभक्त्यर्थेषु प्रातिपदिकस्य मुख्यमेवाभि, धानम्, गङ्गायां घोष इत्यादौ संबन्धिनो हि लक्षणा दृष्टा न संबन्धमात्रस्य, विभक्त्यर्थश्च स्वयं संबन्धरूपः।

### रत्नतूलिका

रोध्यनिरोधकभावः, मञ्चाः क्रोशन्तीत्यादौ क्रोशनकालावच्छेदेना-धाराधेयभाव इत्यादिरूपेण संबन्धानां नियमदर्शनात्, न तथा स्वर्गादीनां नियतः सबन्धोऽस्ति; येन लक्षणा स्यादिति भावः। कारकेषु नैवमित्याह––**कारकविशेषाणामिति**। उपसंहरति–– **सर्वथापीति**।

**संबन्धिनो हीति**। तत्रैव मुख्यसंबन्धलाभादिति भावः। ननु संबन्धस्यापि संबन्धित्वमविरुद्धम्, यथा संयोगस्य समवायादिना तत्त्वम्, अतोऽत्र विभक्त्यर्थे लक्षणा युक्तेत्यत आह––**न बंन्धं-मात्रस्येति**। मात्रपदेन संबन्धित्वव्यावृत्तिः। विभक्त्यथश्च न तथेत्याह––**विभक्त्यर्थश्चेति**। **संबन्धरूपः**––क्रियातत्साधनयोः शक्तिलक्षणसंबन्धरूपः करणत्वादिन तु संबन्धिरूपोऽपि; तस्य संबन्धान्तराभावादित्यर्थः, ननु संबन्धस्य संबन्धान्तराभावेऽपि लक्ष्य-

संबन्धस्य स्वपरनिर्वाहकत्वेऽपि तदजानतोऽपि विभक्त्यर्थावगमात्, न चाज्ञातसंबन्धो लक्षणा; अतिप्रसङ्गात्, तस्मात्प्रातिपदिकस्य न लुप्तविभक्त्यर्थे लक्षणेति, तन्मन्दम्; विभक्त्यर्थकारकभेदस्य संबन्धातिरेकात्। संबन्धमात्रत्वेऽपि वा वनं श्रितो वनश्रित इत्यादौ तुल्यवत्प्रकारत्वभानाय

रत्नतूलिका

त्वमविरुद्धम्, तस्य[1]स्वपरनिर्वाहकत्वादित्यत आह--संबन्धस्येति। परस्येव स्वस्यापि संबन्धित्वप्रयुक्तकार्यनिर्वाहकत्वेऽपीत्यर्थः। तदजानतोऽपीति। स्वपरनिर्वाहकत्वमजानतोऽपीत्यर्थः। यद्वा विभक्त्यर्थकारकविशेषरूपसंबन्धमजानतोऽपीत्यर्थः। अतिप्रसङ्गादिति। मुख्यस्य पदशक्यतां लक्ष्यस्य तत्संबन्धं चाजानतोऽपि लक्ष्यार्थप्रतीतिप्रसङ्गादित्यर्थः।

संबन्धातिरेकादिति। न हि शक्तिरूपसंबन्धमात्रं द्वितीयाद्यर्थः। तथा सति घटमित्यादौ घटः कर्मेत्यादिसामानाधिकरण्यप्रतीतिर्न स्यात्, अतः शक्तिमत एव द्वितीयाद्यर्थत्वम्, तस्य च न संबन्धतेति भावः। ननु लाघवात्संबन्धमात्रं विभक्त्यर्थः, सामानाधिकरण्यं त्वाकृतिः शब्दार्थ इति मते घटो द्रव्यमित्यादावाक्षिप्तव्यक्तिमादायेवाक्षिप्तसंबन्धिनमादायाप्युपपद्यत इत्यत आह---संबन्धमात्रत्वेऽपि वेति। तुल्यवदिति। वनं श्रित इत्यत्र विभक्तेः श्रूयमाणतया तदर्थस्य प्रकारत्वं सिद्धम्, तत्तुल्यतया वनश्रित इत्यत्रापि तस्य प्रकारत्वेन भानमङ्गीकार्यम्, पूर्वोपस्थितस्य च प्रकारत्वम्, उपस्थितिश्च वननिरूपितसंबन्धत्वेन वाच्या न संबन्धत्व-

---

[1] स्वरूप–घ.

कथंचिदपि तत्संबन्धज्ञानस्योपगन्तव्यत्वात्। अन्यथा "निषाद-स्थपतिं याजयेत्" इत्यादावपि मुख्ये निषादप्रातिपदिकस्य षष्ठ्यर्थसंबन्धाभिधाने निषादस्थपत्यधिकरणविरोधात्। षष्ठी-समासे लक्षणाप्रसङ्गेन हि तत्र पूर्वपक्षनिरास इति।

### रत्नतूलिका

मात्रेण। तथा च मुख्यसंबन्धः प्रतीत इति भावः। **कथंचिदिति।** स्वस्यैव संबन्धत्वसंबन्धित्वरूपद्वयकल्पनयेत्यर्थः। **उपगन्तव्यत्वा-दिति।** अन्यथा वैशिष्ट्य[1]प्रतियोगितया भासमानत्वरूपप्रकारत्वं न स्यादिति भावः। **अन्यथेति।** लुप्तविभक्त्यर्थे प्रातिपदिकस्य मुख्याभिधानाङ्गीकार इत्यर्थः। **लक्षणाप्रसङ्गेन हीति।** "रौद्रं वास्तुमयं चरुं निर्वपेत्" इति प्रकृत्य श्रुते "एतया निषादस्थपतिं याजयेत्" इत्यत्र निषादानां स्थपतिरिति षष्ठीसमासाश्रयणेन निषा-दानां परिवृढस्य त्रैवर्णिकस्यैवेयमिष्टिः, अन्यथा अपूर्वविद्याप्रयुक्तिः स्यादिति पूर्वपक्षः। षष्ठीसमासाश्रयणे निषादप्रातिपदिकस्य षष्ठ्यर्थे लक्षणा स्यात्। अतो निषादश्चासौ स्थपतिश्चेति कर्मधारय एव, तथा-सति श्रुतिवृत्त्योर्निषादस्थपतिपदयोः समभिव्याहारमात्रेणाभेदलाभान्न कस्यापि लक्षणा, अपूर्वविद्याप्रयुक्तिश्च[2]शब्दसामर्थ्यागता सोढव्येति सिद्धान्तेन निरस्त इत्यर्थः। **तत्रेति।** षष्ठे "स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात्" इत्यधिकरण इत्यर्थः।

नित्यशुद्धेत्यनेनाविद्यासंबन्धव्यावृत्तिः। नित्यबुद्धेत्यनेन वेद्यत्व-व्यावृत्तिः। नित्यमुक्तेत्यनेन जीवव्यावृत्तिः। अस्पृष्टाशिवलेशमिति विशेषणत्रयेण पर्यवसन्नोऽर्थः कालत्रयेऽप्यविद्यादिस्पर्शशून्यमित्यर्थः।

---

[1] प्रतियोगिताभासमानत्व–कुं [2] शब्दसामर्थ्यान्मता–क.

ब्रह्मपदव्युत्पत्तिः ।

ब्रह्मशब्देन च नित्यशुद्धबुद्धमुक्तस्वभावमस्पृष्टाशिवलेशं प्रत्यगेकरसमद्वितीयं वस्तु जिज्ञासाकर्मत्वेन समर्प्यते । अन्यथा तस्यार्थान्तरपरत्वे तज्जिज्ञासा न मुमुक्षोरारभ्येत । यदि हीह सविशेषं प्रत्यगात्मविलक्षणं ब्रह्म गृह्येत, निरवधिकबृहत्त्वबोधिब्रह्मश्रुतिस्तावदुपरुध्येत । उपासनानिष्ठं च शास्त्रमापद्येत । न चोपासिक्रिययाऽविद्यामयानर्थबाधेन निरतिशयानन्दावभासस्वरूपनिष्ठात्मा मोक्षे घटते, ज्ञानस्यैवाज्ञानविरोधित्वात् ।

रत्नतूलिका

**प्रत्यगेकरसमिति** जीवभेदनिरासः । सर्वविशेषणापपत्तये—**अद्वितीयमिति** । अन्यथाशब्दार्थमाह—**अर्थान्तरपरत्व इति** । प्रधानजीवकमलासनादिपरत्व इत्यर्थः । ननु तत्परिहाराय "ब्रह्मविदाप्नोति परम्," "तरति शोकमात्मवित्," "ब्रह्मवेद ब्रह्मैव भवति" इत्यादौ तज्ज्ञानस्य मुक्त्युपायत्वप्रतिपादनेन मुमुक्षोस्तज्जिज्ञासारम्भापपत्तेरित्यत आह—**यदि हीति** । **उपरुध्येतेति** । सविशेषस्य विशेषेभ्यो जीवाच्च व्यावृत्त्यवश्यंभावेन वस्तुपरिच्छेदात्त्रिविधपरिच्छेदशून्यतालक्षणनिरवधिकबृहत्त्वाभावादिति भावः । **उपासनानिष्ठमिति** । [1]प्रत्यगात्मविलक्षणस्य साक्षात्कारायेगेन शास्त्रस्य तत्साक्षात्कारपर्यवसानायोगादिति भावः । नचेष्टापत्तिरित्याह—**न चोपासिक्रिययेत्यादिना** । तथा च मुमुक्षोस्तदनारम्भप्रसङ्ग इति भावः ।

---

[1] प्रत्यगात्मलक्षणस्य साक्षात्कारयोगेन—क.

## ब्रह्मणो जिज्ञासाकर्मत्वाक्षेपः ।

कथं पुनरयमर्थो ब्रह्मशब्दादवगम्यते, ईदृगर्थे मानान्तराविषये लोकव्यवहाराभावेन व्युत्पत्त्यनुपपत्तेः। न च यूपाहवनीयस्वर्गादिवदलौकिकत्वेऽपि "सत्यं ज्ञानमनन्तं ब्रह्म," यतो वा इमानि भूतानि जायन्ते," "तद्ब्रह्म" इत्यदिभिरयमर्थो व्युत्पाद्यत इति शङ्क्यम्; तेषामस्यां दशायामनध्यवसितार्थत्वात् । अन्यथा कृतं विचारारम्भेण ।

अपि चैकं वाक्यं न पदार्थं व्युत्पादयितुं वाक्यार्थमवबोधयितुं च क्षमते, सकृत्प्रयुक्तस्य सकृदर्थकारित्वात् ।

### रत्नतूलिका

ब्रह्मशब्देन निर्विशेषं वस्तु जिज्ञासाकर्मत्वेन समर्प्यत इत्येतदाक्षिपति—कथं पुनरिति। किं गवादिपदेष्विव लोकव्यवहाराद्व्युत्पत्तिः, उत यूपाहवनीयादिपदेष्विव वेदात्, अथवा सूत्रवाक्यादिति विकल्प्य नाद्य इत्याह—ईदृगर्थ इति। द्वितीयमाशङ्क्य निषेधति—न च यूपेति। यथा "यूपं तक्षत्यष्टाश्रीकरोति," "दिवाहनीयमाधत्ते" इत्यादिवाक्यैर्यूपाहवनीयादिपदव्युत्पत्तिस्तथा "सत्यं ज्ञानमनन्तं ब्रह्म," "यतो वा इमानि भूतानि जायन्ते," "तद्ब्रह्म" इत्यादिवाक्यैर्ब्रह्मपदव्युत्पत्तिरिति शङ्कार्थः। अस्यां दशायामिति। विचारकर्तव्यतापरसूत्रार्थनिर्णयदशायामित्यर्थः। अनध्यवसितार्थत्वादिति। लोके सत्यज्ञानादिपदानां भिन्नार्थतावगतेः सत्यज्ञानानन्तानन्दाभिन्नस्य जगज्जन्मस्थितिलयाधारस्य जडव्यावृत्तस्य चासंभावितत‍या विचारविधेः प्रागनध्यवसितत्वमित्यर्थः। अन्यथेति। वाक्यश्रवणमात्रेण निश्चयाङ्गीकार इत्यर्थः।

सत्यज्ञानादिवाक्येन तद्व्युत्पत्तौ प्रातिस्विकं दोषमाह—अपि चैकमिति। पदार्थव्युत्पादकत्वे वेदेत्यनेन संबन्धमनपेक्ष्य यत्सत्यं

न च सति संभवे वाक्यावृत्तिर्युक्ता। एतेन सूत्रवाक्यादपि ब्रह्मपदव्युत्पत्तिः प्रत्युक्ता। यूपादिशब्दाश्च भिन्नवाक्यैरेव व्युत्पाद्यन्त इत्यनन्तरमेव वक्ष्यते। न च परमाप्तप्रणीत-सूत्राक्षरमात्रमप्यनर्थकं युक्तम्। ब्रह्मपदे चानर्थकेऽविदितार्थे वा सूत्रमेव तथा स्यात्। तस्माद्ब्रह्मपदार्थप्रतिपत्त्युपायो वक्तव्यः।

## रत्नतूलिका

ज्ञानमनन्तं तद्ब्रह्मेति पर्यवसानं वाच्यम्, वाक्यार्थबोधकत्वे सामा-नाधिकरण्यावधीरणेन सर्वेषां क्रियान्वयो वाच्य इति वैरूप्यं स्यादिति भावः। नन्विदमेव वाक्यमावृत्त्या पदार्थव्युत्पादकं वाक्यार्थबोधकं चेत्यत आह--न च सतीति। तृतीयं निरस्यति--एतेनेति। वेदवाक्यानामनध्यवसितत्वकथनेनेत्यर्थः। विना विचारमथातःशब्द-समभिव्याहारेण जिज्ञासापदसमभिव्याहारमात्रेण वा तद्व्युत्पत्त्यनुपपत्ते-रिति भावः। यूपादिशब्देषु वैषम्यमाह--यूपादिशब्दाश्चेति। भिन्नवाक्यैरिति। यत्र शब्दार्थनिर्णयोऽपेक्षितः "यूपे पशुं नियुञ्जीत" इत्यादौ तद्भिन्नैर्यूपं तक्षतीत्यादि वाक्यैरित्यर्थः।

"बृहि वृद्धौ" इति धातोः "बृंहेरम्नलोपश्च" इति सूत्रेणा-मागमे नलोपे मनिन्प्रत्यये च कृते ब्रह्मेति रूपम्। ततश्च बृंहत इति ब्रह्मेति बृहत्त्वमुपाधिं कृत्वा लोके यत्र जात्यादिषु प्रयुज्यते शब्दस्तत्रैव व्युत्पद्यते। एवं लोके व्युत्पन्नः शब्दः सूत्रे प्रयुज्यमानो मुमुक्षुजिज्ञा-सासमभिव्याहारबलेन तेनैवोपाधिनापूर्वमर्थं बोधयति। यथा लोके क्रियाकार्ये कार्यत्वोपाधिना व्युत्पन्नो लिङ्प्रत्ययो वेदे प्रयुज्यमानः स्वर्गकामलक्षणनियोज्यसमभिव्याहारबलात्तेनैवोपाधिना स्थायि कार्यं प्रति-पादयति, यथा वा घटत्वाद्युपाधिना घटान्तरादिषु व्युत्पन्नाः शब्दा-

## ब्रह्मणो जिज्ञासाकर्मत्वसमर्थनम् ।

उच्यते — बृहेर्वृद्धिकर्मणो मनिन्प्रत्ययान्तस्येदं रूपं ब्रह्मेति। निर्वक्तारोऽपि हि भवन्ति —

"बृहत्त्वात् बृंहणत्वाच्च ब्रह्मेति परिपठ्यते।" इति ॥

ततश्च तदेकोपाधिना जात्यादिष्वेव तद्व्युत्पाद्यते। सूत्रे च मुमुक्षुजिज्ञासाविषयसमर्पणपरं ब्रह्मपदं प्रसिद्धजातिजीवादिवाधे प्रकरणोपपदादिसङ्कोचहेत्वभावात् देशकालवस्तुगुणदोषसंबन्धपरिच्छेदरूपसर्वविधाल्पत्वविरोधिरूपमनवधिकबृहत्त्वमपूर्वमर्थं

### रत्नतूलिका

स्तत्प्रकारेणोपपदादिमहिम्ना तेनैवोपाधिना पूर्वं घटादिकमुपस्थापयन्ति तद्वदिति प्रथमकल्पमालम्ब्य सिद्धान्तयति—उच्यते—बृहेरिति। जात्यादिष्वेवेति। बृहत्त्वोपाधिना सर्वेषां शब्दार्थत्वाविशेषेऽपि यत्र प्रयुज्यते शब्दस्तत्रैव तद्व्युत्पत्तिरिति भावः। जातिजीवादिबाध इति। जात्यादिज्ञानस्य मोक्षोपायत्वाभावेन तस्य जिज्ञासाविषयत्वबाध इत्यर्थः। सर्वविधाल्पत्वेति। श्रुतौ "यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्" इति यत्किंचिद्विशेषसंबन्धेऽल्पत्वप्रतिपादनाद्देशादिविशेषसंबन्धे तत्कृतमल्पत्वं भवतीति तद्विरोधिभावमात्ररूपमपूर्वं वस्तु ब्रह्मपदं समर्पयतीत्यर्थः। कालपरिच्छिन्ने घटादौ देशपरिच्छिन्नेऽण्वादौ दोषसंबन्धपरिच्छिन्ने ब्रह्महादौ चाल्पत्वव्यवहारादस्तु तत्परिच्छेदोऽल्पत्वम्, न तु गुणसंबन्धपरिच्छेदः; तस्य महत्त्वप्रयोजकतयाल्पत्वाप्रयोजकत्वात्, गगनादौ परिमाणविशेषस्य राजादावैश्वर्यस्य च महत्त्वप्रयोजकत्वदर्शनात्। प्रत्युत वस्त्वपरिच्छेदे ब्रह्मणो हेयाभेदापत्त्या महत्त्वमेव न स्यात्, इत्याद्याशङ्कानिवृत्तये गुणसंबन्धस्याप्यल्पत्वप्रयोजकत्वमुक्तम्।

## प्रतिपादयतीत्यवगम्यते। ततो मुमुक्षुजिज्ञासासमभिव्याहारार्थोदीरितविमर्शसनाथया प्रथमावगतव्युत्पत्त्यैवापूर्वार्थोपस्थितौ

### रत्नतूलिका

अयं भावः—"यत्र नान्यत्पश्यति" इत्यादिना वस्त्वपरिच्छेदे भूमानं भावमात्रमुक्त्वा "अथ यत्रान्यत्पश्यति" इत्यादिना वस्तुपरिच्छेदेऽल्पत्वं चोक्त्वा "स एवाधस्तात्" इत्यारभ्य "स एवेदं सर्वं" इति सार्वात्म्यमुपसंहरन्ती श्रुतिः वस्त्वपरिच्छेद एव बृहत्त्वं तदेव सर्वविधाल्पत्वविरोधि भावमात्रं ब्रह्मशब्दार्थ इत्यभिप्रैतीति गम्यते। एवं सत्याकाशादौ राजादौ च "यत्रान्यत्पश्यति" इत्याद्युपपादिताल्पत्वे सत्येव देशाद्यवधिविधुरत्वादिमात्रेणाल्पतमघटादिवैलक्षण्येन लौकिकानामल्पत्वबुद्ध्यभिभवमात्रम्। अथ गुणोत्कर्ष एव महत्त्वम्, तदपकर्षोऽल्पत्वम्, लोकव्यवहारात्, न तु [1]वस्त्वपरिच्छेद इत्युच्येत, तथा सति निरतिशयोत्कर्षसिद्धये वस्त्वपरिच्छेदोऽपि वाच्यः। अन्यथा वस्त्वनात्मकत्वलक्षणापकर्षः स्यात्। अत एव सर्वोऽपि स एवेति सार्वात्म्येन राजादिः स्तूयते। लोके तु गुणकृतमहत्त्वं विवक्षितं न स्वरूपमहत्त्वमिति न वस्त्वपरिच्छेदापेक्षा। न च वस्त्वपरिच्छेदे ब्रह्मणो हेयाभेदोऽपि स्यादिति वाच्यम्; न हि हेयं किंचिदवस्थाप्य तदभेदं ब्रह्मणो वदामः; किं तु निरवधिकबृहत्त्वबोधिब्रह्मपदमाहिम्ना आत्मातिरेकेण हेयमहेयं वा वस्त्वन्तरं नास्तीति, सर्वमात्मेति पर्यवसानादिति।

जात्यादौ लोकव्युत्पत्त्यैव सूत्रे ब्रह्मशब्दार्थप्रतिपत्तिमुपसंहरन्नानर्थक्यमविदितार्थकत्वं च नास्तीत्याह—**ततो मुमुक्षुजिज्ञासेति। उदीरितविमर्शेति।** अन्यथा तस्यार्थान्तरपरत्वे इत्यारभ्य ज्ञानस्यै-

[1] वस्तुपरिच्छेद इत्युच्यते—कुं.

सूत्रवाक्यार्थः प्रतिपद्यत इति न सङ्कटं किञ्चित्। तदिदमाह भगवान्भाष्यकारः—"ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते। बृहतेर्धातोरर्थानुगमात्" इति। न च विचारकर्तव्यतापरे सूत्रेऽयमर्थो विमृष्टोऽपि पदमात्रोपस्थितो निर्विचिकित्समधिगतो भवतीति तदधिगमाय लक्षणादिमुखेन विचारमारप्स्यते भगवान् सूत्रकारः "जन्माद्यस्य यतः" इत्यादिना। जगत्कारणत्वमपि निर्विशेषस्यैव लक्षणं न सविशेषस्येत्यग्रे दर्शयिष्यते। अत एव सविशेषस्य ब्रह्मणोऽत्र शास्त्रे जिज्ञास्यत्वमुत्सूत्रमौत्प्रेक्षिकमिति [1]दर्शयति

रत्नतूलिका

वाज्ञानविरोधित्वादित्यन्तेनोदीरितस्येर्थः। प्रकरणोपपदाद्यभावे ब्रह्मपदादेवैतादृशार्थप्रतीतौ विचारवैयर्थ्यमित्याशङ्कां परिहरति—न च विचारेति। न हीदं सूत्रं ब्रह्मपदव्युत्पादकम्, येन विमर्शसनाथया ब्रह्मश्रुत्या निर्विचिकित्समर्थप्रतीतिः स्यात्, किं त्वन्यपरमित्यभिप्रेत्य विचारकर्तव्यतापर इति विशेषणम्। तदधिगमाय निर्विशेषब्रह्माधिगमाय। ननु "जन्माद्यस्य यतः" इत्याद्युत्तरसन्दर्भेण कारणस्यैव लक्षणप्रतिपादनात्तदनुसारेण ब्रह्मपदार्थो वक्तव्यः; [2]न तु निर्विशेषं तदर्थ इत्यत आह—जगत्कारणत्वमपीति। न सविशेषस्येति। ज्ञातं हि लक्षणम्। तच्चाज्ञातज्ञानाय क्रियते। कारणरूपं चानुमानेन ज्ञातम्; अन्यथा लक्षणत्वायोगात्। अतो निर्विशेषस्यैव लक्षणं, न सविशेषस्येत्यर्थः। अत एवेति। यतोऽज्ञातस्य निर्विशेषस्यैव लक्ष्यत्वमत इत्यर्थः। उत्सूत्रम् सूत्रादुद्गतम्। सूत्रस्थब्रह्मशब्दस्य

---

[1] दर्शयितुमाह—ङ. [2] ततश्च न निर्विशेषं तदर्थः—घ. च. कुं.

भगवान् भाष्यकारः—"ब्रह्म च वक्ष्यमाणलक्षणं जन्माद्यस्य यत इति" इति।

परमते ब्रह्मशब्दव्युत्पत्तिः

अत्राह—न बृहत्त्वोपाधिना सर्वत्र ब्रह्मशब्दस्यैका शक्तिरिति युज्यते; बृहन् कुम्भो महदाकाशमित्यादिवत् ब्रह्म कुम्भ इत्यपि प्रयोगापत्तेः। न च त्रसरेण्वादावापेक्षिकबृहत्त्वेऽपि ब्रह्मशब्दः क्वचित्कदाचित्प्रयुज्यते, न च पङ्कजादिपदस्याविशेषितपङ्कजनिकर्त्रादिवृत्तेरेव व्यक्तिविशेषविषयत्वनियामक-

रत्नतूलिका

निर्विशेषप्रतिपादकत्वादिति भावः। वक्ष्यमाणं जगत्कारणं लक्षणं यस्य निर्विशेषस्येति तस्यैव [1] जिज्ञास्यत्वमुक्तमित्यर्थः।

किं ब्रह्मशब्दस्य बृहत्त्वसामान्यमेव शक्यतावच्छेदकम्, उतावयवार्थानुगुणं [2] तद्बृहत्त्वमिति विकल्प्य नाद्य इत्याह—न बृहत्त्वोपाधिनेति। ब्रह्मशब्दप्रयोगापादनाय बृहच्छब्दपर्यायान्तर[3]प्रदर्शनं कृतम्; तत्तु अनास्थया महदाकाशमिति विषयान्तरे कृतमिति द्रष्टव्यम्। न चेष्टापत्तिः; तथा सत्ययोग्ये त्र्यणुकादावपि प्रयोगापत्तिरित्यभिप्रेत्याह—न च त्रसरेण्वादाविति। ननु यथा पङ्कजपदशक्तेः प्रयोगस्य वा कुमुदादौ नातिप्रसङ्गः, तथा ब्रह्मशब्दस्यापीत्याशङ्क्य वैषम्यमाह—न च पङ्कजादीति। अत्र शक्यतावच्छेदकस्यापि पद्मत्वादेः शक्तिप्रयोगनियामकत्वमप्यस्तीति तदंशे दृष्टान्ततयोपादानं, न तु शक्त्याद्युपाधितयेति बोध्यम्। यः शक्तिविषयत्वमन्तरा तटस्थः

---

[1] जिज्ञास्यत्वमित्यर्थः—च. [2] जात्यादिनिष्ठं तद्बृहत्त्वं—च. कुं. [3] रप्रयोगदर्शनम्—कुं. च.

पङ्कत्वादिवत् ब्रह्मशब्दस्य कश्चिज्जात्यादिविषयत्वनियामकानुगतोपाधिरुपलभ्यते, येन शक्तिर्वा प्रयोगो वा नियम्येत। तदेवमनुगतनिमित्तासंभवादनेकशक्तिकल्पनागौरवात्, "अन्याय्यश्चानेकार्थत्वम्" इति न्यायात्, स्वरूपतो गुणतश्च निरवधिक-

## रत्नतूलिका

सन्नियच्छति स शक्त्युपाधिः, यथा धेन्वादिपदे गोत्वादिः, तथात्वमभिप्रेत्याह—**शक्तिर्वेति**। शक्त्या अविशेषेण प्रयोगप्रसक्तौ यः प्रयोगं नियच्छति स प्रयोगोपाधिः, यथा सर्वनाम्नां बुद्धिस्थत्वादिः, तत्पक्षाभिप्रायेणाह—**प्रयोगो वेति**। शक्यतावच्छेदकस्य तु घटत्वादेः शक्तिविषयत्वमधिकमिति द्रष्टव्यम्। प्रथमपक्षे दूषणमुपसंहरन् द्वितीये पातयति—**तदेवमिति**। तथा चावयवानुगमसंभवाज्जीवादिगततत्तद्बृहत्त्वादीनि वा जीवत्वादीनि वा निमित्तानीत्यङ्गीकार्यमिति भावः। इष्टापत्तिरित्यत आह—**अनेकशक्तीति**। अथ वा—न बृहत्त्वोपाधिनेत्यादेरेवं व्याख्या—किं ब्रह्मशब्द एकार्थः, उत नानार्थ इति। आद्येऽपि किं केवलयौगिकः, अथ वा रूढश्चेति विकल्प्याद्यं दूषयति—**न बृहत्त्वोपाधिनेति**। आद्ये द्वितीयं दूषयति—**न च पङ्कजादिपदस्येति**। **अनुगतोपाधिरिति**। अनुगतं शक्यतावच्छेदकमित्यर्थः। अस्मिन्पक्षे शक्तिर्वा प्रयोगो वा नियम्येतेति न शक्त्याद्युपाधित्वाभिप्रायम्, किं त्ववच्छेदकस्याप्युभयनियामकत्वमस्तीत्यवच्छेदकत्वाभिप्रायम्। तथा सति पङ्कत्वादिदृष्टान्त उपपद्यत इति ध्येयम्। आद्यमुपसंहरन् द्वितीये पातयति—**तदेवमिति**। अन्यत्समानम्। अनेकशक्तिकल्पनाया दोषत्वे जैमिनिसूत्रं संवादयति—**अन्याय्यश्चेति**। कस्तर्हि ब्रह्मशब्दार्थ इत्यत आह—**स्वरूपत इति**।

बृहत्त्वे पुरुषोत्तम एव ब्रह्मशब्दो मुख्यः अन्यत्र तु जात्यादौ बृहत्त्वगुणलेशयोगादौपचारिक एव। यथाह सूत्रकारः— "स्याच्चैकस्य ब्रह्मशब्दवत्" इति, "परं जैमिनिर्मुख्यत्वात्" इति च। गरुडपुराणमपि—

"वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणः।
तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने॥" इति।

"यस्मिन्प्रयुज्यमाने तु गुणयोगः सुपुष्कलः।
तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः॥" इति च।

मुमुक्षुजिज्ञासासमभिव्याहाराच्च। "वेदाहमेतं पुरुषं महान्तम्" इत्युक्त्वा "तमेवं विद्वानमृत इह भवति" इति श्रुतेर्महापुरुषज्ञानस्यैव मोक्षहेतुत्वावगमात्। "स सर्वभूतप्रकृतिं विकारान्"

## रत्नतूलिका

देशकालापरिच्छेदः स्वरूपतो बृहत्त्वं न तु [1]वस्त्वन्तरपरिच्छेद इति भावः। अनेकार्थत्वं परिहरति—अन्यत्र त्विति। ज्ञानैश्वर्यादिलेशो गुणलेशः। एकस्य "आत्मन आकाशः सम्भूतः" इत्यादौ सम्भूतशब्दस्य मुख्यामुख्यार्थद्वयं स्यात् ब्रह्मशब्दवदिति स्याच्चेति सूत्रार्थः। "उपासकानमानवः पुरुषः परं ब्रह्म गमयति", "स एतान्ब्रह्म गमयति" इत्यत्रत्यब्रह्मशब्दस्य तत्रैव मुख्यत्वादिति जैमिनिराचार्यो मन्यत इति परं जैमिनिरिति सूत्रार्थः। शब्दसामर्थ्यात्पुरुषोत्तमपरत्वमुक्तम्। इदानीं जिज्ञासासमभिव्याहारादपि तत्परत्वमाह—मुमुक्षुजिज्ञासेति। महापुरुषज्ञानस्यैवेति। "तमेवं विद्वान्"

---

[1] वस्त्वपरि—क. कुं.

"समस्तकल्याणगुणात्मकोऽसौ," "स ईश्वरो व्यस्तसमस्त-रूपः' इत्युक्त्वा "संज्ञायते," "तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्" इति स्मृतेश्च। तस्मात्स्वभावतो निर्दोषनिरतिशयासंख्येय-कल्याणगुणगणास्पदं पुरुषोत्तमशब्दितं ब्रह्मेह जिज्ञास्यमुप-दिश्यत इति। अत्र ब्रूमः—[1]एवमलौकिके व्युत्पत्त्यनुपपत्त्या

रत्नतूलिका

इत्यत्रैवंशब्देन पूर्वोक्तमहत्त्व[2]विशेषणपरामर्शादिति भावः। "स सर्व-भूतप्रकृतिं" इत्यनेन स्वतो निर्दोषत्वमुक्तम्।

............ विकारान्
गुणांश्च दोषांश्च मुने व्यतीतः।
अतीतसर्वावरणोऽखिलात्मा
तेनास्तृतं यद्भुवनान्तराले॥ इति श्लोकशेषः।

समस्तेति।

समस्तकल्याणगुणात्मकोऽसौ
स्वशक्तिलेशोद्धृतभूतसर्गः।
इच्छागृहीताभिमतोरुदेहः
संसाधिताशेषजगद्धितोऽसौ॥

इति श्लोकः। व्यस्तरूपश्चराचरभूतग्रामरूपेण, समस्तरूपः वैराजरूपेण, स ईश्वरो व्यस्तसमस्तरूपो व्यक्तस्वरूपः प्रकटस्वरूपः सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः इति श्लोकार्थः। इतीश्वरस्वरूपमुक्त्वेत्यर्थः।

---

[1] एवं लौकिके—ख. [2] विशेषेण परा—कुं.

ब्रह्मपदगर्भे श्रुतिसूत्रे प्रतिपत्तिवन्ध्ये प्रसज्येयाताम्। न च सत्यज्ञानादिवाक्यैर्ब्रह्मपदं व्युत्पद्यते; तेषां वाक्यार्थबोधनिष्ठत्वात्। न हि "सत्यं ज्ञानमनन्तं ब्रह्म" इत्युक्त्वा तत् "यो वेद निहितं गुहायाम्" इत्युच्यते, येन पूर्ववाक्यं व्युत्पत्तिपरं स्यात्।

न च तस्यावृत्तिर्युक्ता। न चैवमस्य लक्षणवाक्यत्वानुपपत्तिः; लक्ष्यस्वरूपबोधपरत्वात्। "ब्रह्मविदाप्नोति परम्"

रत्नतूलिका

संज्ञायते येन तदस्तदोषं
शुद्धं परं निर्मलमेकरूपम्।
संदृश्यते वाप्यथ गम्यते वा
तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्॥

इति श्लोकेऽपेक्षितमात्रोक्तिः। न हीति। तथोक्तौ यत्सत्यं ज्ञानमनन्तं तद्ब्रह्मेति बोधनात् ब्रह्मपदं व्युत्पद्यत इति भावः। नन्वेवं सत्यज्ञानादिपदानां वेदेत्यनेनान्वयेन वाक्यार्थबोधनिष्ठत्वे लक्षणवाक्यत्वानुपपत्तिरित्याशङ्क्य निषेधति—नचैवमिति। पार्ष्ठिकसामानाधिकरण्यनिर्देशलभ्यमभेदबोधमादाय लक्षणवाक्यतोपपन्नेत्यभिप्रेत्याह—लक्ष्यस्वरूपेति। तत्र हेतुमाह—ब्रह्मविदाप्नोतीति। "ब्रह्मविदाप्नोति परम्" इति सूत्रभूतवाक्ये ब्रह्म तद्वित् तस्य परब्रह्मप्राप्तिश्चेति त्रयमुपक्षिप्तम्। तत्संवादायैषा ऋगुदाह्रियते। तत्र वेदनकर्मतया ब्रह्मण्युपादीयमाने सत्यज्ञानादीनां बहूनां कर्मत्वप्रतीतिर्माभूदिति पार्ष्ठिकं सामानाधिकरण्यमादाय सूत्रोपक्षिप्तब्रह्मस्वरूपं सत्यज्ञानानन्तलक्षणमस्यामृचि प्रतीयत इति वाच्यम्। ततश्च लक्षणमुखेन लक्ष्यस्वरूपप्रतीतिहेतुत्वमप्यस्तीति लक्षणवाक्यत्वमित्यर्थः।

इत्युक्तार्थसंवादाय ह्येषा ऋगुदाह्रियते। तत्र वेदनकर्मतयैव ब्रह्मण्युपादीयमाने सामानाधिकरण्यानिर्देशसामर्थ्यान्नान्तरीयकतया तज्ज्ञानादिरूपत्वमवगम्यत इत्यत इदं लक्षणवाक्यमुच्यत इति।

स्वर्गादौ तु "यन्न दुःखेन संभिन्नम्" इत्यादिना व्युत्पादिते "स्वर्गकामो यजेत" इत्यादिवाक्यार्थो बुध्यते। तथा "खादिरो यूपो भवति" इति खदिरविकारविशेषो यूप इत्यवगम्यते। "यूपं तक्षति" इत्यादौ यूपशब्दस्याव्युत्पन्नतया यूपात्मना तक्षणाद्य[1]नन्वायितया च खदिरं तक्षतीत्येव वाक्यार्थे प्रतिपद्यमाने यूपपदोपादानफलं विमृशतो नूनं

रत्नतूलिका

स्वर्गादिपदेषु ब्रह्मपदवैषम्यं दर्शयितुं यूपादिशब्दाश्च भिन्नवाक्यैरेव व्युत्पद्यन्त इति वक्ष्यत इत्युक्तं दर्शयति—**स्वर्गादौ त्विति**। **यन्न दुःखेनेति**।

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं यत्तत्सुखं स्वःपदास्पदम्॥

इत्यनेन सुखजातिविशेषः स्वर्गशब्दार्थ इति व्युत्पादित इत्यर्थः। यूपशब्दव्युत्पत्तिं दर्शयति—**तथा खादिर इति**। **अव्युत्पन्नतयेति**। तथा च यूपं सन्तं तक्षतीति नान्वयः, यूपशब्दार्थापरिज्ञानात्; किं तु यथा तक्षणेन यूपः [2]संपद्यते तथा खदिरं तक्षतीति। तथान्वये युक्त्यन्तरमप्याह—**यूपात्मनेति**। च्छेदनादिसंस्कारसंघटितावयविन एव यूपतया तद्रूपेण तक्षणाद्यन्वयायोग्यत्वादित्यर्थः।

---

[1] अन्वयितया—ख. [2] संपाद्यते—कुं.

तक्षणादिसंस्कृतः खदिरविकारविशेषो यूप इत्यर्थाद्व्युत्पद्यते। ततो "यूपे पशुं नियुञ्जीत" इति वाक्यार्थप्रतिपत्तिः। एवं "अग्निमाधत्ते" इति संस्कार्यत्वेऽवगते "नक्तं गार्हपत्यमाधत्ते, दिवाहवनीयम्" इत्यादिविशेषविधिषु गार्हपत्यादिरूपेण संस्कारविध्यनन्वयितया तत्पदोपादानफलविमर्शे नूनं नक्तमाहितो गार्हपत्यसंज्ञो दिवाहित आहवनीयसंज्ञ इत्यर्थाद्व्युत्पद्यते। ततः "आहवनीये जुहोति" इत्यादिवाक्यार्थावगमः।

रत्नतूलिका

**अर्थादिति।** खदिरं तक्षतीति वक्तव्ये यूपं तक्षतीति यूपपदोपादानसामर्थ्यादित्यर्थः। तत इति। तक्षणादिवाक्यैर्यूपशब्दव्युत्पत्त्यनन्तरमित्यर्थः। अत एव यूपस्य सतो नियोजने साधनतयान्वयान्न तस्य यूपशब्दार्थतेति न वाक्यार्थ[1]प्रतिपत्त्यनुपपत्तिरिति भावः। संस्कार्यत्वावगतिकथनमाधानादिसंस्कारस्याहवनीयाद्यर्थत्वस्फोरणाय, तस्य च फलमाहवनीयाद्यात्मनाऽऽधानसंस्कारानन्वयित्वज्ञानम्, तदेतदाह— **गार्हपत्यादिरूपेणेति।** इदमुपलक्षणम्। गार्हपत्यादिपदाना[2]मुत्पन्नतयेत्यपि बोध्यम्। **अर्थादिति।** गार्हपत्यादिपदोपादनसामर्थ्यादित्यर्थः। दिवाग्निमाधत्ते नक्तमग्निमाधत्त इति वक्तुं शक्येऽपि यद्गार्हपत्याहवनीयशब्दावुपादत्ते, तस्येदं प्रयोजनं दिवाहित आहवनीयो नक्तमाहितो गार्हपत्य इति गार्हपत्यादिपदव्युत्पत्तिरिति भावः। **वाक्यार्थावगम इति।** तत्राहवनीयस्य सतो होमार्थता प्रतीयते, न होमस्य तादर्थ्यमिति न वाक्यार्थावगमानुपपत्तिरिति भावः। "गौः ग्मा ज्मा" इत्यादिनिगमैर्यथा गवादिशब्दानां भूम्यादिषु व्युत्पत्तिस्तद्वत्स्फ्यादि[3]शब्दानामपि आकृतिविशेषे व्युत्पत्ति-

[1] प्रतिपत्त्यापत्तिरिति—कुं [2] मव्युत्पन्न—च. कुं. [3] पदाना—च.

स्फ्यचपालचात्वालादिशब्दाश्च गोऽश्वाजादिशब्दवन्निगमादिनैव व्युत्पद्यन्ते। तथा च पातञ्जलं दर्शनम् "वेदेऽपि याज्ञिकाः संज्ञां कुर्वन्ति स्फ्यो यूपश्चषाल इति। तत्रभावतामुपचारादन्येऽपि जानन्ति इयमस्य संज्ञा" इति। नहि "स्फ्येनोद्धन्ति," "चात्वालात् धिष्णियानुपवपति" इत्यादिसिद्धपदसान्निध्येऽपि तदर्थो व्युत्पद्यते। वसन्ते सहकारे पिको मधुरं रौतीत्यादौ च बहुशो दृष्टसंबन्धतया वसन्तादिपदार्थानां संभावनामात्रेण पिकशब्दः कोकिले व्युत्पन्नो यदृच्छया न विसंवदते, कुसुमिते सहकारे पिको ध्वनतीत्यादौ कदाचिद्भृङ्गेऽपि व्युत्पत्तौ विसंवाददर्शनात्। न चैवमननुभूतचरसंबन्धार्थकसिद्धपदसान्निध्येऽप्यसिद्धपदव्युत्पत्तिः संभवति,

"चित्रीयते चरन्नेष महिषः कर्कसङ्कटे"

रत्नतूलिका

रित्याह--स्फ्यचपालेति। निगमादिनैवेत्येवकारव्यावर्त्यं दर्शयति--न हीति। सिद्धपदसान्निध्ये सत्यसिद्धपदव्युपत्तिरन्यत्र दृष्टेत्यत आह---वसन्त इति। दृष्टसंबन्धतयेति। वसन्तसहकारकोकिलानां संबन्धस्य बहुशो दृष्टत्वा[1]दित्यर्थः। संभावनामात्रेण व्युत्पत्तिर्यदृच्छया च न विसंवाद इत्युक्तम्। कुत एतदित्याशङ्क्य दृष्टसंबन्धपदार्थान्तरेऽपि व्युत्पत्तिभ्रमदर्शनेन विसंवाददर्शनादित्याह---कुसुमित इति। अन्यत्र संभावनायामपि नात्र संभावना; स्फ्यादीनामुद्धननादीनां च संबन्धस्य पूर्वमननुभवादित्याह---न चैवमिति। न केवलं व्युत्पत्त्यभावः, अपि त्वप्रसिद्धार्थकपदसान्निधाने वाक्यार्थबोध एव प्रतिबद्ध्यत इति सदृष्टान्तमाह---चित्रीयत इति।

[1] दिति भावः--कुं.

इत्यादावप्रसिद्धार्थपदसमभिव्याहारे वाक्यार्थबोधस्यैव प्रतिबन्धात्। न चेह सत्यादिवाक्ये कारणवाक्ये वा ब्रह्मपदार्थानन्तर्भावेन वाक्यार्थः प्रतिपद्यते, येन "यूपं तक्षति" इत्यादाविवार्थाद्ब्रह्मपदं व्युत्पाद्येत। अस्यां दशायामुक्तागमस्यानवधृतार्थत्वाच्च। न चोदाहृतपुराणवाक्येन शक्त्यवधारणा युक्ता। अधीतस्वाध्यायस्य कर्मविचारानन्तरमेव ब्रह्मविचारमुपेत्य शास्त्रान्तराद्यवसराभावेन नित्यानित्यविवेका[1]द्यसंभवे यतमानस्य तान्त्रिकस्य तदयोगात्। अन्यथा पुराणादिनैव

रत्नतूलिका

चित्रवदाचरति चित्रीयते, आश्चर्यो भवतीत्यर्थः। कर्कसङ्कटे श्वेताश्वसङ्कटे। एवं स्वर्गयूपाहवनीयस्फयादिपदेषु व्युत्पत्तिप्रकारमभिधाय ब्रह्मपदे तद्वैषम्यमाह–न चेहेति। किं श्रुत्यन्तरेण व्युत्पत्तिः, अथवा पुराणवचनेन, आहोस्विन्निगमादिनेति विकल्प्य नाद्य इत्याह—न चेहेति। तक्षणादिवाक्यानां यूपादिपदव्युत्पादकत्वमभिधाय सत्यादिवाक्ये [2]तद्वैलक्षण्यमाह—न चेहेति। "यूपं तक्षति" इत्यादौ यूपपदानन्तर्भावेन खदिरं तक्षतीति वाक्यार्थप्रतीतिसंभवाद्यूपपदोपादानं तद्व्युत्पत्त्यर्थम्। न चेह तथा सत्यज्ञानादिपदानां भिन्नभिन्नार्थेषु व्युत्पन्नानां सामानाधिकरण्यं गौरश्व इत्यादिवत् संभवति, अतस्तन्निर्वाहाय ब्रह्मपदेन किंचिद्वस्तु समर्पणीयम्। एवं कारणवाक्येऽपि "यतो वा इमानि" इति यच्छब्दार्थभूतब्रह्मान्तर्भावेन वाक्यार्थप्रतीतिर्वाच्येत्युभयत्रापि तदन्तर्भाव इत्यर्थः। अस्यां दशायामिति। विचारारम्भदशायामित्यर्थः। विचारेण तादृशवस्तुसंभावनायामेव वाक्यार्थावधारणं भवति, नान्यथेति भावः। द्वितीयं निषेधति—न चोदाहृतेति। यतमानस्येति। कर्म-

[1] दिसंभवे–ङ. [2] तद्वैषम्यमाह–कुं.

ब्रह्मतत्त्वावगमोऽप्यस्त्विति कृतं तद्विचारेण। निरुक्तव्याकरणाभ्यां तु वृद्धिपर्यायबृहत्त्वोपाधिना जातिजीवादिसाधारण्येन शक्तिरवधार्यते। तत्र तत्र प्रयोगे च प्रकरणोपपदादिना विशेषलाभ इति युक्तम्। [1]तत्र कारणभूतसविशेषविषये प्रयुज्यमानो ब्रह्मशब्दः [2]पुष्कलार्थो भवति, स्वरूपतो गुणतश्च निरतिशयबृहत्त्वयोगात्। तत्रापि गुणानां ब्रह्मणो गुणेभ्यश्च ब्रह्मणो व्यवच्छिद्यमानतया नात्यन्तिकं बृहत्त्वम्।

### रत्नतूलिका

विचारानन्तर्यमथशब्दार्थः, न तु विवेकाद्यानन्तर्यम्; अधीतस्वाध्यायस्य कर्मब्रह्मविचारयोरन्तराले शास्त्रान्तरावसराभावात् विवेकादेश्च तत्साध्यत्वादिति विवेकाद्यसंभवे यत्नं कुर्वतोऽन्तराले पुराणस्याप्यनवसरपराहतत्वादित्यर्थः। तृतीयमङ्गीकरोति--**निरुक्तव्याकरणाभ्यां** त्विति। साधारणशक्त्यङ्गीकारे कथं विशेषलाभ इत्यत आह--तत्र तत्रेति। ननु बृहत्त्वप्रवृत्तिनिमित्तकेन ब्रह्मशब्देन कथं निर्विशेषं ब्रह्म लभ्येत; तस्य प्रवृत्तिनिमित्ताभावेनामुख्यत्वात्, अतः स्वरूपतो गुणतश्च यत्र बृहत्त्वं सविशेषे स एव मुख्योऽर्थ इति तस्यैव जिज्ञास्यत्वं स्यादित्याशङ्क्य, सत्यं यत्र प्रवृत्तिनिमित्तपौष्कल्यं स एव मुख्यार्थः; तथापि नात्र ब्रह्मपदेन तस्य ग्रहणम्, किं तु निर्विशेषस्यैवेत्यभिप्रेत्याह—**तत्र कारणभूतसविशेषविषय** इति। बृहत्त्वोपाधिना जात्यादौ लोके व्युत्पद्यमानं ब्रह्मपदं यत्र निरतिशयबृहत्त्वं सविशेषे ब्रह्मणि तावन्मुख्यार्थत्वेन स्वीकरोति तत्रापि गुणगुणिनोर्भेदेन वस्तुपरिच्छेदान्निरतिशयं बृहत्त्वं नेत्यपरितोषाद्धात्वर्थपौष्कल्याय त्रिविधपरिच्छेदशून्यं बृहत्त्वभावमात्रं

---

[1] अत्र–ङ. [2] पुष्कलो–ख.

तथापि कारणातीते सर्वविधाल्पत्वविरोधिस्वरूपमात्रे निर्विशेषे प्रवृत्तिनिमित्तासंभवेन कारणरूप एव ब्रह्मपदशक्तिः पर्यवस्यति। अल्पत्वविरोधिस्वरूप[1]लक्षणया तु ब्रह्मतत्त्वमुपस्थाप्यते "सत्यं ज्ञानमनन्तम्" इत्यादिषु। न चात्र[2] मुख्यग्रहणं न्याय्यम्; अविशेषितानन्त्यविरोधात्, प्रकरणादिविशेषपर्यवसानहेत्वभावाच्च, "ब्रह्मविदाप्नोति परम्" इति मुक्तिहेतुवेदनमात्रविषयत्वाभिधानाच्च। अत एव मुमुक्षुजिज्ञासासमभिव्याहारात् सौत्रमपि ब्रह्मपदं न सविशेषविषयमित्यवोचाम। "तमेवं विद्वान्" इत्यादि च निर्विशेषविषयं व्याख्यास्यते।

## रत्नतूलिका

मुख्यार्थत्वेन स्वीकर्तुं प्रस्थितं सत् तत्र प्रवृत्तिनिमित्तालाभेन सविशेष एव पर्यवस्यति। निर्विशेषसत्तामात्रस्वरूपं तु लक्षणया बोधयतीति ग्रन्थार्थः।

**लक्षणया त्विति।** प्रवृत्तिनिमित्तवत एव शब्दशक्यत्वं नान्यस्येति पक्षावलम्बनेन लक्षणोक्तिः। तदनपेक्षायां तु तस्यापि मुख्यत्वमिति ध्येयम्। **अविशेषितेति।** "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्राविशेषितमानन्त्यं प्रतीयते, तच्च परिच्छेदशून्यत्वम्, तच्च मुख्यग्रहणे विरुद्धं स्यादित्यर्थः। **प्रकरणादीति।** यथा जातिजीवादिप्रकरणे प्रयुज्यमानस्य तत्परत्वम्। आदिपदेन जात्याद्युपपदपरिग्रहः। बृहदाकाशमिति प्रयोगे परिमाणतो बृहत्त्वपर्यवसानम्। न चेह तदुभयम्। अतः सर्वविधाल्पत्वविरोधिस्वरूपपरत्वमित्यर्थः। **वेदनमात्रेति।** न तूपासनाविषयत्वमभिधीयते, विदेर्ज्ञाने स्वरसत्वात्। तच्च प्रत्यगेकरसब्रह्मपरत्वे घटते, नान्यथेति भावः। **अत एवेति।** यतो मुक्तिहेतुवेदनमात्रविषयत्वाभिधानं श्रुतौ अत एवेत्यर्थः। श्रुतिसूत्रयोरैककण्ठ्यादत्रापि मुक्तिसाधनेष्यमाणज्ञानविषयत्वोपक्षेप इति भावः।

---

[1] लक्षणतया—ग. [2] न चात्रामु—ङ.

ब्रह्मपदार्थमुख्यामुख्यत्वविवेकः

नन्वेवमेकनिमित्तकशक्तिकत्वे ब्रह्मपदस्य किंकृतो मुख्यामुख्यत्वविभागः, "परं जैमिनिर्मुख्यत्वात्", "तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तः" इत्यादिः, उच्यते, सामान्यशक्तस्य गवादिपदस्य खण्डादाविव ब्रह्मपदस्य जातिजीवादिविशेषेष्वौपचारिकता स्यात्। [1]न चैवमपि परमात्मन्यपि विशेषेऽमुख्यत्वापत्तिः; वेदान्तेषु तदुपबृंहणस्मृतीतिहासादिषु च प्रयोगप्राचुर्यात् प्रथमतरप्रत्ययत्वे निरूढवृत्त्या मुख्यत्वोक्त्युपपत्तेः। तदिदमुक्तं—"वेदे भूरिप्रयोगात्" इति। अथ वा परप्रकरणोपपदादिविशेषाभावे स्वरूपतो गुणतश्चासङ्कुचितबृहत्त्वेनैवाल्पत्वविरोधिस्वरूपेणैव वा ब्रह्मणि ब्रह्मपदादुपस्थिते तावतैवा-

रत्नतूलिका

मुख्यामुख्यत्वविभागस्थलमेव दर्शयति—परं जैमिनिरिति। गोत्वसामान्ये गोपदस्येव बृहत्त्वसामान्ये ब्रह्मपदस्य शक्तिः, इतरत्र सर्वत्रापि लक्षणेत्यभिप्रेत्याह—उच्यत इति। अमुख्यत्वापत्तिरिति। न चेष्टापत्तिः; "परं जैमिनिर्मुख्यत्वात्, तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तः" इत्यादिषु मुख्यत्वाभिधानविरोधादिति भावः। मुख्यत्वोक्त्युपपत्तेरिति। निरूढलक्षणायाः शक्तितुल्यतया मुख्यत्वोक्तिमात्रं, न तु वस्तुतो मुख्यत्वमिति भावः। अस्मिन्पक्षे बृहत्त्वसामान्यरूपे निर्विशेषेऽपि शक्तिरिति भावः। बृहत्त्वावच्छिन्ने सर्वत्र शक्तिरेव, अथापि सापेक्षनिरपेक्षत्वाभ्यां मुख्यामुख्यत्वविभाग इति पक्षान्तरमाह—अथ वेति। अल्पत्वविरोधीत्यादि निर्विशेषाभिप्रायेण। अयं भावः—प्रकरणादिसङ्कोचाभावे ब्रह्मपदेनासङ्कुचितबृहत्त्वावच्छिन्नं बृहदित्येव

---

[1] न चैवं.

सङ्कीर्णस्वार्थवृत्तितया तत्र रूपान्तरोपस्थित्यनपेक्षणात्, जात्यादौ च बृहत्त्वमात्रस्य साधारणतया शक्त्यासङ्कीर्णरूपविशेषोपस्थित्यवश्यम्भावात् मुख्यामुख्यविभागो न विरुध्यते। न चैवं त्र्यणुकादावपि प्रयोगापत्तिः; अप्रयोगादेवाप्रयोगसंभवात्। "आरोपे सति निमित्तानुसरणं न हि निमित्तमस्तीत्यारोपः" इति न्यायात्। न हि यद्यत्र शक्तं तत्तत्रावश्यं प्रयोक्तव्यमिति नियमः। पुमन्तदैवतपद्मादिशब्दस्यामरकमलादिशक्तावपि तत्राप्रयोगादेवाप्रयोगदर्शनात् लिङ्गभेद इव प्रत्ययभेदे शक्येऽप्यप्रयोगोपपत्तेः।

भगवच्छब्दार्थः

एतेनालौकिकज्ञानादिमति ज्ञानादिमत्येव वा भगवत्पद-

रत्नतूलिका

प्रतीयते। तादृशं बृहदन्यन्नास्तीत्युपस्थितरूपस्यैवासाधारणतया असङ्कीर्णत्वात् व्यावर्तकरूपान्तरस्योपस्थितिर्नापेक्षितव्या। जात्यादौ तु बृहत्त्वस्य सङ्कुचिततया अनेन रूपेणेदं बृहदिति व्यावर्तकरूपोपस्थितिरपेक्षितव्येति। यदुक्तं त्र्यणुकादावपि प्रयोगापत्तिरिति, तद्दूषयति—न चैवमिति। अमरकमलादिशक्तावपीति। "वा पुंसि पद्मं नलिनम्, बृन्दारका दैवतानि पुंसि वा" इत्यादिकोशवचनानां शक्तिग्राहकत्वादिति भावः। प्रत्ययभेद इति। प्रत्ययविशेष इत्यर्थः। एवं लिङ्गभेद इत्यत्रापि। एतावांस्तु विशेषः—पुल्लिङ्गयोः पद्मदैवतशब्दयोः शक्यविषये न कुत्रापि प्रयोगः। ब्रह्मशब्दस्य मनिन्प्रत्ययान्तस्य केषुचिदप्रयोग इति।

ब्रह्मपदव्युत्पत्तौ दृष्टान्ततया भगवच्छब्दव्युत्पत्तिः परेण दर्शिता तां दूषयति—एतेनेति। अलौकिकं लोकप्रमाणाजन्यं यज्ज्ञानं

शक्तिरपि व्याख्याता । न च परमेश्वरे—

" ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा " ॥
" ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः " ॥

इति निर्दोषसमग्रज्ञानादिसमुदायस्य भगवत्पदशक्यत्वस्मरणात्, अन्यत्र च--

" उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति " ॥

इति स्मृतेः, "वसिष्ठो भगवानृषिः" इत्यादिप्रयोगाच्च यथागममुभयी शक्तिः प्रतिपत्तुं युक्ता; गौरवात् । नन्वत एव भगवच्छब्दं प्रकृत्य--

" तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽयं नोपचारेण त्वन्यत्र ह्युपचारतः " ॥

रत्नतूलिका

तद्वतीत्यर्थः । ननु भगवच्छब्दस्य नैका शक्तिः; ईश्वरे वसिष्ठादौ च स्मृतौ प्रवृत्तिनिमित्तभेदप्रतिपादनेन शक्तिद्वयाङ्गीकारस्यैव युक्तत्वादिति तटस्थशङ्कामाशङ्क्य निषेधति—न च परमेश्वर इति । अन्यत्र ईश्वरादन्यत्र । ज्ञानादिसमुदायस्येति । अशेषत इति विशेषणान्न प्रत्येकशक्तिरिति भावः । दूषयति—गौरवादिति । परमतमाशङ्कते—नन्वत एवेति । यतः शक्तिद्वय[1]कल्पनागौरवमत इत्यर्थः । पुरुषोत्तमे शक्तिरितरत्र लक्षणेत्यत्र विष्णुपुराणवचनं प्रमाणयति—तत्र पूज्यपदार्थोक्तीति । पूज्यपदार्थस्योक्त्या परि-

[1] कल्पने गौ—च. कुं.

इति स्मरणादनीश्वरे शक्यगुणलेशयोगेन गौणत्वं स्यादिति चेत्, न; सामान्येनैकशक्त्युपपत्तौ गौणत्वकल्पनाया अन्याय्यत्वात्। स्मृतेरपि विषयविशेषेण प्रयोगप्राचुर्याभ्यां शक्यार्थपौष्कल्यापौष्कल्याभ्यां च निरूढाभिप्रायत्वोपपत्तेः। अत एव परिभाषासमन्वित इत्युक्तम्। परिभाषेति हि समयेनाव्यभिचरितप्रयोग उच्यते, वैयाकरणपरिभाषेत्यादिदर्शनात्। अत एव ज्ञानशक्तिबलैश्वर्येत्यत्र तिरश्चामपि ज्ञानादीनि भगवच्छब्दवाच्या-

## रत्नतूलिका

भाषया च समन्वित इत्यर्थः। ईश्वरानीश्वरसाधारण्येन ज्ञानाद्युपाधिना एकशक्त्युपपत्तावेकत्र गौणत्वकल्पना अन्याय्येति दूषयति—न, सामान्येति। स्मृतेः का गतिरित्यत आह—स्मृतेरपीति। विषयविशेषेण ईश्वरानीश्वरलक्षणविषयभेदेनेत्यर्थः। सर्वत्र शक्त्यविशेषेऽपि प्रयोगप्राचुर्यमीश्वरे,[1] अन्यत्र तदप्राचुर्यम्। ज्ञानादेः शक्यार्थस्येश्वरे पौष्कल्यमितरत्र वसिष्ठादावपौष्कल्यम्। यत्र प्रयोग प्राचुर्यं शक्यार्थपौष्कल्यं च सोऽर्थो झटित्युपस्थितो भवतीति तत्र शब्दो निरूढः इति भावः। अत एवेति। यतः परमेश्वरे शब्दो निरूढः अत इत्यर्थः। अत एव ज्ञानेति। भगवच्छब्दस्य ईश्वरीयज्ञानशक्त्यादौ निरूढत्वादेव। ईश्वरे यत् ज्ञानशक्त्यादि भगवच्छब्दवाच्यं तदेव पिपीलिकादावपीति तस्यापि भगवच्छब्दवाच्यत्वमित्यभिप्रायेणाशेषत इत्युपात्तमित्यर्थः। नन्वीश्वरस्य

---

[1] इतरत्र-च. कुं.

नीत्यभिप्रायेणाशेषत इत्युपात्तम्। परमात्मन एव ह्यभिन्नस्य ज्ञानशक्त्यादेरविद्यामयः प्राणिभेदेषु खिल्यभावः, तस्यैव सर्वमयत्वात्। न तु समुदायाभिप्रायेण, समुच्चितैकविभक्तिनिर्देशादेव ज्ञानादिसमुदायसिद्धेः। अपि च ज्ञानादि प्रत्येकमेव शक्यमस्तु, अनेकार्थत्वस्य समुदायशक्तिपक्षेऽप्यवर्जनीयत्वात्। न चैकोपाध्यवच्छेदा[1]दनर्थान्तरं समुदायः शक्यतावच्छेदकः, येनैकार्थ्यं स्यात्॥

## रत्नतूलिका

तिरश्चां च कथं ज्ञानशक्त्याद्यभेद इत्यत आह—**परमात्मन एव हीति**। परमात्मन इति पञ्चमी। परमात्मस्वरूपमेव पिपीलिकादीश्वरपर्यन्तं तारतम्येन ज्ञानशक्त्यादिरूपमिति तस्य भगवच्छब्दवाच्यतेति भावः। **खिल्यभावः** पृथग्भावः। अस्मिन्पक्षे आविद्यकपृथग्भावस्यात्मन एकस्यैव वाच्यत्वमिति न नानार्थतेति भावः। ननु नात्मनः स्वरूपेण वाच्यता, किं त्वाविद्यकरूपभेदेनैव, तेषां च भिन्नत्वान्नानार्थत्वं स्यात्, अतः समुदायस्य वाच्यत्वमिति तदभिप्रायेणाशेषत इत्युक्तम्, न तु ज्ञानाद्यभेदोपक्षेपेण पिपीलिकादिज्ञानानामपि वाच्यत्वाभिप्रायेणेति परोक्तं प्रतिक्षिपति—**न त्विति**। समुदायस्य शक्यतावच्छेदकत्वमङ्गीकृत्यैकविभक्तिनिर्देशेन तत्सिद्धेरशेषत इत्युक्तिरन्याभिप्रायेणेत्युक्तम्। इदानीमङ्गीकारं परित्यजति—**अपि चेति**। समुदायस्वरूपं वदन् तस्य शक्यतावच्छेदकत्वं निषेधति—**न चैकोपाध्यवच्छेदादिति**॥

---

[1] दर्थान्तर—ग.

वनशब्दार्थः

न खलु वनशब्दस्यैकदेशस्थत्वमप्यर्थः; गौरवात्, किं त्वेकदेशपरिचिता वृक्षा एवानिरूपितभेदा अपि बहवो वनशब्दवाच्या इति शक्त्यनेकत्वम्। यदाहुः—"वृक्षा हि बहवो वनम्" इति। अन्यथा मानान्तरानवगम्ये वनशब्दबुद्ध्योराभासत्वप्रसङ्गात्। न च वृक्षाश्रयं बहुत्वं बह्वाश्रयं वा वृक्षत्वं वनशब्दप्रवृत्तिनिमित्तमित्यैकार्थ्यं शङ्क्यम्; अतिप्रसङ्गात्।

रत्नतूलिका

ननु यथा वनशब्दस्य समुदायशक्तस्यैकार्थत्वं तद्वद्भविष्यतीत्याशङ्क्य दृष्टान्तं विघटयति—न खल्विति। वनशब्दस्यैकार्थत्वे किं समुदायः प्रवृत्तिनिमित्तम्, अन्यद्वा, वनत्वलक्षणजातिविशेषो वेति त्रेधा विकल्प्य, आद्येऽपि किं समुदाय एकदेशस्थत्वम्, अथ वान्य इति द्वेधा विकल्प्य, नाद्य इत्याह—गौरवादिति। देशेऽपि शक्तिकल्पनापत्तेरिति भावः। इतरपक्षेषु दूषणमनुक्त्वैव श्रोतुरौत्सुक्यनिवृत्तये प्रथमं स्वमतमनेकार्थत्वमाह—किं त्वेकदेशेति। परिचिताः ज्ञाताः। अनिरूपितभेदाः अज्ञाताम्रत्वपनसत्वादिजातिभेदाः। तथा चैकदेशस्थत्वस्य ताटस्थ्येन शक्त्युपाधित्वेऽपि शक्यतावच्छेदकत्वाभावान्नैकार्थत्वमिति भावः। मानान्तरेति। उक्तापेक्षया प्रकारान्तराभावेन तस्य मानान्तरागम्यत्वम्। तस्य शक्तिग्रहाभावेन वनशब्दस्याभासत्वम्। मानान्तरसंवादायोग्येऽर्थे लौकिकबुद्धेरप्याभासत्वमित्यर्थः। प्रकारान्तरसंभावनाय महाविकल्पे द्वितीयं पक्षमाशङ्क्य निषेधति—न च वृक्षाश्रयमिति। किं तस्य समुदायनिरपेक्षस्य प्रवृत्तिनिमित्तत्वम्, उत तत्सापेक्षस्येति विकल्प्याद्यं दूषयति—अतिप्रसङ्गादिति। भिन्नदेशस्थेष्वपि वृक्षेषु वनशब्द-

एकदेशाद्यवच्छेदस्य चापेक्षायामुक्तस्यानपेक्ष्यत्वात् । न च तदतिरिक्तो वृक्षेषु समुदायो नाम । तस्य [1]पर्याप्यवृत्तित्वे छिन्नशिष्ट एकस्मिन्नपि वृक्षे वनशब्दप्रयोगापत्तेः । व्यासज्य-वृत्तित्वे च वृक्ष एकस्मिन्वृक्णे समुदायविनाशात्तत्रैव वनशब्दस्य समुदायान्तरविषयत्वकल्पनायामनेकार्थत्वापरिहारात् । न च समुदायभेदानुगतमेकं सामान्यम्; मानाभावात् । देशकाल-

### रत्नतूलिका

बुद्ध्योः प्रसङ्गादित्यर्थः । द्वितीये वह्वाश्रयमित्याद्युक्तवैयर्थ्यमित्याह— एकदेशाद्यवच्छेदस्येति । न चैकदेशादेरवच्छेदकत्वं; तस्य गौरवेण दूषितत्वादिति भावः । तर्हि तत्परिहारायाद्यद्वितीयपक्षोऽस्त्वित्याशङ्क्य निषेधति—न च तदतिरिक्त इति । अनेकार्थत्वापरिहारादिति । पूर्वमेकः समुदायः, एकस्मिन्वृक्षे छिन्ने समुदायान्तरम्, एवं वृक्षान्तर इत्यनेकार्थत्वमित्यर्थः । प्रवृत्तिनिमित्तैक्यान्नानेकार्थत्वमित्यत आह— न च समुदायेति । अनुगतव्यवहार एव मानमित्याशङ्क्य सोऽन्यथा सिद्ध इत्याह—देशकालेति । वनशब्दवाच्येषु वृक्षेषु देशोपाधिना, दर्शपूर्णमासाभ्यामित्यादौ दर्शशब्दार्थेषु पूर्णमासशब्दार्थेषु चाग्नेयादिषु त्रिषु त्रिषु यागेषु पौर्णमास्यमावास्यालक्षणकालोपाधिना, एकं पदमेकं वाक्यमित्यादौ तत्तदर्थप्रतीतिरूपकार्योपाधिना च समुदायव्यवहार इत्यर्थः । ततश्च समुदायप्रतीतेर्देशादिनिमित्ततया जातिनिमित्तत्वाभावे सिद्धे तदनुगतप्रतीतेरपि व्यक्त्यनुगतबुद्धिवत् [2](जात्यनुगतबुद्धिवच्च) सामान्यविषयत्वाभावेऽपि समुदायादिशब्दबुद्धिनिष्ठधर्मारोपेण कथंचि-न्निर्वाह इति भावः ।

---

[1] पर्याप्तय–क. [2] कुण्डलितो ग्रन्थः कुं–पुस्तके नास्ति.

कार्याद्युपाधिनापि सर्वत्र समुदायव्यवहारोपपत्तेः। न च वनत्वं नाम सामान्यभेदः; वृक्षजातिभेदैरेव साङ्कर्यात्। वनशब्दस्य युगपदनेकवृत्तित्वेऽपि "ग्रहं संमार्ष्टि" इत्यादौ ग्रहशब्दस्येव नैकवचनानुपपत्तिः।

अथ वा तदुपाधिसंख्यारोपेण वचनानि भवन्ति वनमित्यादीनि, वर्णेषु बुद्ध्यादिसंख्यारोपेण पदमित्यादिवत्।

रत्नतूलिका

तृतीयमाशङ्क्य निषेधति—न च वनत्वं नामेति। **वृक्षजातिभेदैः** प्लक्षत्वादिभिः। **साङ्कर्यादिति**। वनत्वं विहाय प्लक्षत्वं वनानन्तर्गते प्लक्षे वर्तते, प्लक्षत्वं विहाय वनत्वमाम्रपनसादिवनेषु, उभयं प्लक्षवन इति साङ्कर्यं स्यादित्यर्थः। कथं तर्हि वनमित्येकवचनमित्यत आह—**वनशब्दस्येति**। **ग्रहशब्दस्येवेति**। "ग्रहं संमार्ष्टि" इत्यत्र ग्रहोद्देशेन संमार्गो विधीयते। स चैन्द्रवायवादिषु सर्वेषु ग्रहेषु प्रापणीयः। तत्प्रापणं च ग्रहशब्दस्य युगपदनेकव्यक्तिवृत्तित्वे घटते, जातेस्तदन्वयायोग्यत्वात्, नान्यथा। अथापि ग्रहत्वजात्यामेकत्वमिति यथैकवचनोपपत्तिस्तथा वनशब्दवाच्यानां वृक्षाणामुपाधिनैकीकृतत्वादेकवचनम्। इयांस्तु विशेषः—ग्रहशब्दस्य जातिशब्दत्वात्तस्याश्च प्रयोगहेतोस्तत्र तत्र पर्याप्यवृत्तित्वादेकस्मिन्नपि प्रयोगार्हता। वनशब्दे त्वेकदेशस्थत्वस्य शक्तिप्रयोगयोरुपाधित्वात्तस्य चापर्याप्यवृत्तित्वान्नैकत्र प्रयोगार्हतेति भेद इति भावः।

पूर्वमुपाधिनैकीकरणादेकवचनमित्युक्तम्। इदानीं तद्गतसंख्यारोपेणोपपत्तिमाह—**अथ वेति**। देशलक्षणोपाधिगतसंख्यारोपेणेत्यर्थः। **बुद्ध्यादीति**। अनेकवर्णेष्वेकं पदमिति बुद्धिः। पदजन्यपदार्थस्मृतिनिष्ठस्य वा स्मर्यमाणपदार्थनिष्ठस्य वा नानावर्णानुभवजनित-

कालादावेकस्मिन्नेवोपाधिसंख्याश्रयवचनभेददर्शनात् कालः कालौ काला इति। तदेवमिह प्रत्येकशक्तिपक्षे समुदितशक्तिपक्षे च तुल्ये शक्त्यनेकत्वे न ज्ञानादिसमुदायोपाधौ क्लृप्तं युक्तम्। "विना हेयैर्गुणादिभिः" इति च न निर्दोषत्वमपि वाच्यकोटिनिविष्टमित्यभिप्रायः; गौरवात्। किं तु ज्ञानादिमात्रशक्तिकं पिपीलिकादावपि भगवत्पदं किं न प्रयुज्येतेति शङ्किते दोषाभि-

रत्नतूलिका

संस्कारैर्युगपत्तावद्वर्णगोचरमेकं यत्स्मरणं तन्निष्ठस्य वैकत्वस्यारोपेण निर्वहणीयेति भावः। यत्संख्यानुसारेण यत्रैकवचनादिस्तत्र तत्संख्यारोपः स्फुट इत्यभिप्रेत्याह--कालादाविति। तुल्ये शक्त्यनेकत्व इति। न चैवं यूपाहवनीयादिशब्दानामपि तत्तत्संस्कारसमुदायवाचिनामनेकार्थत्वापत्तिरिति वाच्यम्; तत्राधानादिभिस्तक्षणादिभिश्चालौकिकस्तत्तत्संस्कारघटितोऽवयव्युत्पद्यत इति तद्वाचित्वान्न नानार्थत्वमिति भावः। ननु "विना हेयैर्गुणादिभिः" इति निर्दोषज्ञानादीनामेव भगवच्छब्दवाच्यत्वावगमात् कथं तिर्यग्ज्ञानादीनामपि तद्वाच्यतेत्याशङ्क्य पिपीलिकादावप्रयोगनियामकतया वाच्यस्याभिभवाभिप्रायेण तदुक्तिर्न तु निर्दोषत्वमपि वाच्यकोटिनिविष्टमित्यभिप्रायेणेत्याह--विना हेयैरित्यादि। न हि यद्यथारूपमुपवर्ण्यते तत्तथारूपमेव तत्पदशक्यम्; अतिप्रसङ्गात्।

[1]"नैव शुक्लो न कपिलो न कृष्णो न च लोहितः।
अणीयान् क्षुरधाराया धर्मस्तं को विवक्षति॥"

इत्यादौ शुक्लाद्यन्यत्वमपि धर्मशब्दार्थः स्यादिति भावः। नन्वैश्वर्यस्य

---

[1] न कल्माषो न कपिलः--पाठः.

भूततया ज्ञानादेरसत्कल्पत्वादप्रयोग इत्यभिप्रायः। "ऐश्वर्यस्य समग्रस्य" इत्यत्रापि सामग्र्यं दोषानभिभवो भगवत्पदप्रयोगाप्रतिबन्धायोच्यते। एतदभिप्रायेणैव

"एवमेष महाशब्दो मैत्रेय भगवानिति।
परमब्रह्मभूतस्य वासुदेवस्य नान्यगः॥"

इति स्मर्यते। तस्माद्दोषानभिभूतोद्भूतज्ञानशक्त्यादिमति भगवत्पदप्रयोग [1]इति न गौणः कल्पनीयः। प्रह्लादादौ च यः परस्य गौणप्रयोगाभावहेतुः स एव नस्तदभावहेतुः। यदि च

रत्नतूलिका

समग्रस्येत्यत्र श्रूयमाणं सामग्र्यं लिङ्गवचनविपरिणामेन सर्वत्रान्वेतीत्यसमग्रज्ञानादिमति पिपीलिकादौ शक्तिसंकोचकं स्यादित्यत आह—**ऐश्वर्यस्येति। एतदभिप्रायेणैवेति।** प्रयोगाभावाभिप्रायेण, न तु शक्त्यभावाभिप्रायेणेत्यर्थः। ततश्च नान्यगः—अन्यं न गच्छति, तत्र न प्रयुज्यत इति स्मृत्यर्थ इति भावः। प्रयोगनियामकं वदन्नन्यत्र प्रयोगाभावमुपसंहरति—**तस्मादिति।** यः प्रयोगः परस्य गौणत्वेनाभिमतः स एवास्माकं मुख्यः, यश्च गौणप्रयोगाभावे हेतुः स एवास्माकं मुख्यप्रयोगाभावे, ततश्च ज्ञानादिमात्रशक्त्यङ्गीकारेऽन्यत्रापि प्रयोगः स्यादित्यापादनं नास्मन्मते दोषः, तस्य तत्परिहारस्य च परमतेऽपि गौणप्रयोगसाधारणत्वात्, "यश्चोभयोः समो दोषः" इति न्यायादित्यभिप्रेत्याह—**प्रह्लादादौ चेति।** इयता प्रबन्धेन भगवच्छब्दे दृष्टान्तत्वमङ्गीकृत्य तद्विघटनाय तत्रापि साधारणशक्तिप्रतिपादनं कृतम्।

---

[1] इति गौणः—ख.

परस्य प्रयोग इष्टः स एव नो मुख्यः प्रयोग इति । अस्तु वा भगवच्छब्दस्य परमेश्वरे मुख्यत्वमन्यत्र गौणत्वम् । ब्रह्मशब्दस्य तु निरुक्ताद्यवगम्या शक्तिः साधारण्येव युक्ता । अन्यथा जिज्ञासासूत्रस्य प्रतिपत्तिवन्ध्यतापत्तेरिति ॥

### जिज्ञासाशब्दार्थः

ज्ञातुमिच्छा जिज्ञासा । नन्वत्र विचारकर्तव्यत्वपरे सूत्रेऽवयवार्थस्यैव विचारलक्षणा युक्ता ; तस्य विध्युपपत्तेः, अन्यथा ब्रह्मजिज्ञासा भवतीत्यनुवादमात्रत्वापत्तेः, "तद्विजिज्ञासस्व", "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः", "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इत्यादिविधिश्रुतिमूलत्वानुपपत्तेश्च ।

### रत्नतूलिका

इदानीं तत्परित्यज्य तयोर्वैषम्यमङ्गीकरोति--अस्तु वेति । निरुक्ताद्यवगम्येति । "बृहत्त्वाद्बृंहणत्वाच्च" इत्यादिनिरुक्ताद्यवगम्येत्यर्थः । तथा च नियामकाभावेनान्यत्र साधारणशक्त्यनङ्गीकारेऽपि ब्रह्मशब्दे न तथा, तत्सत्त्वादिति भावः । प्रतिपत्तिवन्ध्यतापत्तेरिति । साधारणशक्तिं विना प्रकारान्तरेण शक्तिग्रहो नेत्युपपादितत्वादिति भावः ॥

किमत्रावयवार्थविवक्षा उत नेति विकल्प्य पक्षद्वयमपि दूषयितुं प्रथममवयवार्थप्रदर्शनमाक्षिपति--नन्वत्रेति । अविवक्षितावयवार्थस्येति । जिज्ञासापदस्येति शेषः । अविवक्षायां साधकमुक्त्वा तद्विवक्षायां बाधकमाह--अन्यथेति । नन्ववयवार्थस्यापि विधिसंभवान्न विधिश्रुतिमूलकत्वानुपपत्तिरित्याशङ्क्य, किमर्थतः प्रधानं प्रकृत्यर्थभूतं ज्ञानं विधेयं, किं वा शब्दतः प्रधानं प्रत्ययार्थ इच्छेति विकल्प्य नाद्य

न खलु ज्ञानं प्रमाणवस्तुपरतन्त्रं विधीयते, नापि वस्तुसौन्दर्य-ज्ञानाधीनेच्छा; अपुरुषतन्त्रत्वात्, न च तथैव विचारो लक्ष्येत, लाक्षणिकजिज्ञासापदोपादानानर्थक्यात् अथातो ब्रह्म-विचार इत्येव सूत्रं प्रणीयेत। "स्वायत्ते शब्दप्रयोगे नावाचकं प्रयोक्तव्यम्" इति न्यायात्, संभवन्मुख्यशब्दे च लाक्षणिक-प्रयोगे हि प्रयोजनं मृग्यते, गङ्गायां घोष इत्यादौ च पावन-त्वादिप्रत्ययः प्रयोजनम्, इत्युभयथापि दोष इति। उच्यते--तदेव लाक्षणिकपदोपादानप्रयोजनं दर्शयितुमवयवार्थोऽनुवर्ण्यते।

## रत्नतूलिका

इत्याह--न खलु ज्ञानमिति। प्रमाणेन प्रत्यक्षादिना वस्तुना विषयेण च परतन्त्रं पराधीनमित्यर्थः। द्वितीयं निराह--नापीति। उभयत्र हेतुमाह—अपुरुषतन्त्रत्वादिति। अवयवार्थाविवक्षेति द्वितीयं पक्षं निराचष्टे--न च तथैवेति। तर्हि लाक्षणिकपदोपादानं कुत्रापि न स्यात्, सर्वत्रापि मुख्यशब्दसंभवादित्याशङ्क्य प्रयोजन-वशात्तदुपादानमित्याह--संभवन्मुख्यशब्दे चेति। प्रसिद्धलाक्षणिके प्रयोजनमाह—गङ्गायां घोष इत्यादौ चेति। आदिपदाद्दूरत्व-प्रत्ययपरिग्रहः। अस्त्यवयवार्थविवक्षा, न च तावन्मात्रे सूत्रतात्पर्य-पर्यवसानम्, येनोक्तदोषः स्यात्, किं तु विवक्षितावयवार्थजिज्ञासा-पदोपन्यासमुखेन विचारलक्षणायां, तथोपन्यासस्य च प्रयोजनं विचारस्य फलप्रदर्शनमित्यभिप्रेत्य सिद्धान्तमाह—उच्यत इति। अयमाशयः—यद्याहत्य "अथातो ब्रह्मविचारः" इति सूत्रं स्यात् तर्हि कर्तव्य-विचारस्य फलं न सूत्रोपात्तं स्यात्। अतो लाक्षणिकोपादानम्। एवमप्यवयवार्थाविवक्षायां स दोषस्तदवस्थः स्यात्, तद्विवक्षायां इष्यमाणं ज्ञानं विचारफलम्। तच्च स्वरूपावगतिपर्यन्तमपरोक्षरूपं

विविदिषितविचारस्येष्यमाणज्ञानफलत्वप्रत्ययः प्रयोजनम्, निष्फलविचारविधानायोगात् । स्वरूपावगतिपर्यन्तं हि ज्ञानमशेषसंसारबीजानर्थनिबर्हणं परमपुरुषार्थत्वादेषितव्यमिति । तदिदमाह भगवान् भाष्यकारः—"ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा निश्रेयसप्रयोजना प्रस्तूयते" इति ।

अन्ये तु शब्दतः प्रधानस्येच्छाया अनधिकार्यत्वेन तत्समानवाक्येऽप्यथशब्दस्याधिकारार्थत्वनिरासेन प्रकरणमात्रोपात्तसाधनचतुष्टयसम्पत्त्यानन्तर्यार्थतया विशिष्टाधिकारिसूचनायावयवृत्तिनिरूपणमित्याहुः ।

### रत्नतूलिका

परमपुरुषार्थः । अन्यस्येष्यमाणत्वाभावादित्यर्थादुक्तं भवतीति । उक्तेऽर्थे भाष्यसंमतिमाह—तदिदमिति । ब्रह्मजिज्ञासोपन्यासमुखेनेत्यनेन लाक्षणिकपदावयवार्थविवक्षा दर्शिता, तत्प्रयोजनं निश्रेयसप्रयोजनेत्यनेनेति भावः ।

अवयवार्थोपन्यासस्य विचारफलप्रदर्शनं प्रयोजनमिति स्वेनोक्तम् । अन्ये त्वधिकारिविशेषसूचनं फलमित्याहुस्तद्दर्शयति— अन्ये त्विति । अयं भावः—अवयवार्थनिरूपणे जिज्ञासापदस्येच्छा अर्थो भवति, सा चानधिकार्या । अतस्तदेकवाक्यतापन्नस्याप्यथशब्दस्याधिकारार्थत्यागेनानन्तर्यार्थत्वं भवति । तत्र किमानन्तर्यमिति प्रतियोगिजिज्ञासायामुपनिषत्सु तत्र तत्र विचारविधिप्रकरणे आम्नातानि विवेकादीन्युपतिष्ठन्त इति तत्सम्पन्नोऽधिकारी लभ्यत इति । तत्समानवाक्येऽपि तदेकवाक्येऽपि । प्रकरणमात्रोपात्तेत्यत्र मात्रशब्दः कार्त्स्न्यपरः, तत्तत्प्रकरणोपात्तेत्यर्थः ।

कश्चिदाह---इष्यमाणं ज्ञानमत्र विधीयत इति। तद्बालिशभाषितम्, प्रमाणफलज्ञानस्यापुरुषतन्त्रत्वेनाविधेयत्वात्। न च विचारात्मकं ज्ञानं विधीयेत; तस्येष्यमाणत्वायोगात्। फलविषयत्वादिच्छायाः। फलोपाधिका साधनेऽपि स्यादिच्छेति चेत्, किं पुनरायुष्मता फलमभिपन्नम्? न विचारानुगृहीत-

रत्नतूलिका

इष्यमाणं ज्ञानं विधेयमिति वदतः कोऽभिप्रायः? किं फलभूतं ज्ञानं, आहोस्वित्साधनभूतमिति। आद्ये भगवत्स्वरूपगुणविभवविषयस्य निरतिशयविकासिविज्ञानस्य त्वदभिमतस्य नित्यत्वाद्विधेयत्वशङ्का नास्तीत्यस्मदभिमतस्य प्रमाणफलस्यात्मापरोक्षस्य विधेयता वाच्या, सा चानुपपन्ना; प्रमाणपरतन्त्रत्वेनापुरुषतन्त्रत्वादित्याह---प्रमाणफलज्ञानस्येति। द्वितीयं निषेधति---न च विचारात्मकमिति। तत्रापि किं तस्य स्वरसत इष्यमाणत्वम्, अथ वान्याधीनमिति विकल्प्याद्य आह---तस्येष्यमाणत्वायोगादिति। सूत्रे जिज्ञासापदेन यत्स्वरसत इष्यमाणं फलभूतज्ञानं तत्प्रतीयते। तथा च तत्परित्यागेन कथं साधने बुद्ध्यवतारः, येन तस्य विधानं स्यादिति [1]गूढाभिसन्धिराह---फलविषयत्वादिति। आशयमजानानस्तस्यान्याधीनमिष्यमाणत्वमिति द्वितीयं पक्षं शङ्कते---फलोपाधिकेति। प्रमाणतन्त्रं स्वरूपज्ञानमेव फलमिति स्वपक्षे पातयितुं फलं पृच्छति---किं पुनरिति। आयुष्मतेति निन्दायां मतुप्। अभिपन्नम्—अभिमतम्। तस्याः किं मुख्यं

---

[1] गूढाभिसन्धिनाह-क.

वाक्यजा प्रमितिः ; असुखदुःखाभावत्वात् । भगवत्स्वरूपगुण-विभवविषयस्यापि परोक्षस्याप्रयोजनत्वात् । अनुकूलवेदनीयापरोक्षस्यैव प्रयोजनत्वात् । अथ तदपि साक्षात्कारपर्यन्तध्यानात्मतापन्नं सुखापरोक्षसाधनमितीष्येत, आवश्यकत्वात्, तदेव स्वरूपावगतिरूपं ब्रह्मज्ञानमिष्यमाणमिह गृह्यताम्, बहिरङ्गानपेक्षतया स्वारसिकत्वात्, किमनेन बकबन्धयत्नेन । तस्य चाविधेयत्वात् तल्लक्षितो विचार एव विधीयत इति ॥

## रत्नतूलिका

फलत्वं, उत फलसाधनत्वाद्गौणमिति विकल्प्य नाद्य इत्याह--असुखदुःखाभावत्वादिति । सुखदुःखाभावभिन्नत्वादित्यर्थः । ननु सुखवत्तज्ज्ञानस्यापि पुरुषार्थत्वं, भगवत्स्वरूपादीनां च सुखरूपत्वात्तज्ज्ञानं पुरुषार्थ इत्याशङ्कय तदपरोक्षस्यैव तथात्वम्, न तु ज्ञानमात्रस्य, अन्यथा परकीयसुखज्ञानमपि पुरुषार्थः स्यादित्यभिप्रेत्याह--भगवत्स्वरूपेति । द्वितीयमाशङ्कते--अथ तदपीति । इतिर्हेतौ । सुखापरोक्षसाधनत्वादिष्येतेत्यर्थः । आशयमुद्घाटयति--आवश्यकत्वादिति । यस्य साधनेच्छा तस्य फलेच्छावश्यं वाच्या, अन्यथानुपपत्तेः । अतः सूत्रे जिज्ञासापदेन फलभूतं ज्ञानमिष्यमाणं स्वरसतः प्रतीयत इति न तस्य त्यागः, हेत्वभावादित्यर्थः । बहिरङ्गेति । यथा साधने इष्यमाणता बहिरङ्गभूतां स्वानन्तर्गतां फलेष्यमाणतामपेक्षते न तथा फलेष्यमाणतान्यदपेक्षत इति स्वारसिकत्वमित्यर्थः । इष्टापत्तिमाशङ्कयोक्तं मा विस्मार्षीरित्याह-- तस्य चेति । विचार एवेति । तथासति विवक्षितावयवार्थेन जिज्ञासापदेन स्वरसतः प्रतीतस्य फलभूतज्ञानस्य न त्यागः ; तस्य लक्षितविचारे फलत्वोपगमात् । साधनभूतज्ञानविधौ तु प्रतीतत्यागः स्यादिति भावः ॥

### विचारलक्षणाक्षेपपरिहारौ

अथ कथमेवं सति विचारो लक्ष्येत? इष्यमाणापरोक्षज्ञानेन तदिच्छया वा जिज्ञासापदमुख्यार्थेन विचारस्य साधनतया साध्यतया वा संबन्धानधिगमात्। विचार्यतत्त्वापरोक्षहेतुभावस्य क्वचिदपि धर्मविचारादावभावात्। अत एव तद्विषयेच्छासाध्यताया अप्यभावात्, इष्यमाणसाधनतया हीच्छया किंचित्साध्येत, नान्यथा, न खलु शैत्येच्छया वह्निः साध्यते, न चाज्ञातमुख्यसंबन्धो लक्षणा; अतिप्रसङ्गात्, तस्मादश्लिष्टा विचारलक्षणेति।

### रत्नतूलिका

ननु जिज्ञासापदस्य विचारे लक्षणा न युक्ता; मुख्यार्थसंबन्धज्ञानाभावात्, तथा हि—जिज्ञासापदस्यार्थप्राधान्येन इष्यमाणापरोक्षज्ञानं मुख्योऽर्थः, तेन सह विचारस्य साधनत्वं संबन्धः, शाब्दप्राधान्येन अपरोक्षज्ञानेच्छा, तया सह साध्यत्वम्, तदुभयमपि ग्रहीतुमशक्यम्; स्थलाभावात्, तद्ग्रहणं विना च लक्षणा न संभवतीत्याक्षिपति—अथ कथमिति। एवं सति। इष्यमाणापरोक्षज्ञानद्वारा विचारलक्षणाङ्गीकारे सतीत्यर्थः। साधनतया संबन्धानधिगमे हेतुमाह—विचार्यतत्त्वेति। साध्यतया तदनाधिगमे तमाह—अत एवेति। यतो ज्ञानं प्रति साधनत्वग्रहाभावः अत इत्यर्थः। अपरोक्षज्ञानस्य विचारसाध्यत्वे विचारस्यापि तदिच्छासाध्यत्वं नेत्येतदुपपादयति—इष्यमाणसाधनतया हीति।

विचारविधेः पूर्वं विचारस्येष्यमाणापरोक्षज्ञानेन सहापरोक्षत्वधर्मेण संबन्धानवगमेऽपि धर्मविचारधर्मज्ञानसाधारण्येन विचार्यतत्त्वनिर्णयत्वेन संबन्धज्ञानं संभवति, तावन्मात्रेण लक्षणाप्युपपद्यते,

उच्यते—यद्यपि प्रागतो न्यायादन्तरेण विधिं विचारस्येष्यमाणब्रह्मसाक्षात्कार[1]फलत्वमशक्यमधिगन्तुं, तथापि तत्साक्षात्कारेऽपि निर्णयांशेनाधिगतसंबन्धो विचारो लक्षयिष्यते; धर्मविचारादौ तस्य विचार्यतत्त्वनिर्णयफलत्वावगमात्। तच्च न साक्षादेव; विचारस्य तर्कमयत्वात्। अनुग्राह्ये च प्रमाणेऽपरोक्षफले तादर्थ्येनेह विचारविधानं युक्तम्। यद्वा

रत्नतूलिका

प्रथमसूत्रेणापेक्षितन्याये सूचिते विचारविधिः प्रवर्तते, विधेयस्य विचारस्य तर्कमयस्य साक्षान्निर्णयजनकत्वं न संभवति, किं त्वनुग्राह्यप्रमाणद्वारा, तच्चापरोक्षज्ञानफलं चेत्तर्केणापरोक्षरूपो निर्णयः, परोक्षज्ञानफलं चेत्तद्रूपो निर्णय इति स्थितिः, अत्र जिज्ञासापदेनेष्यमाणत्वावगमादपरोक्षस्यैव तथात्वात् वेदान्तरूपप्रमाणस्य चापरोक्षज्ञानफलत्वाद्विचार्यतत्त्वनिर्णयाय विधीयमानो विचारोऽपरोक्षायेति पर्यवस्यति, धर्मविचारे तु नैवम्; प्रमाणस्यातथात्वात्, धर्मनिर्णयमात्रस्यैव धर्मतयानुष्ठानोपयोगितया वेष्यमाणत्वोपपत्तेश्चेत्यभिप्रेत्य सिद्धान्तयति–उच्यते—यद्यपीति। निर्णयांशेनेति। तेन रूपेणेत्यर्थः। अपरोक्षफल इति। तत्त्वं चोत्तरत्र वक्ष्यत इति भावः। इष्यमाणापरोक्षेण मुख्यार्थेनाऽऽकारान्तरेण संबन्धज्ञानेऽपि लक्षणोपपद्यत इत्युक्तम्। इदानीं तद्रूपेणापि संबन्धाधिगमोऽस्तीत्याह—यद्वेति। श्रोतव्य इति विहितस्य फलापेक्षायां द्रष्टव्य इति दर्शनं फलत्वेन विधिः स्वीकरोतीति विधिना विचारस्य साधनत्वाधिगम इत्यर्थः। साधनतया साध्यतया वेत्युक्तिर्लाक्षणिकपदेन मुख्यार्थसंबन्धित्वेन लक्ष्यस्योपस्थितिरित्यभिप्रेत्य। यद्वा साधनतया साध्यतया

[1] फलत्वं शक्य–कुं.

"द्रष्टव्यः श्रोतव्यः" इत्यापाताधिगतवैधसाधनतासंबन्धस्य विचारस्य जिज्ञासापदेनेष्यमाणज्ञानसाधनतया ज्ञानेच्छा[1]साध्यतया वोपस्थितिरुपपन्नेति न किंचिदश्लिष्टम्।

जिज्ञासाशब्दश्चाखिलो विशिष्टमर्थमिष्यमाणज्ञानं ज्ञानेच्छां वा प्रतिपाद्य विचारं लक्षयति द्विरेफादिसमासवत्। न हि द्विपदेन रेफपदेन वा भ्रमरो लक्ष्यते, किं तु समासेन विशिष्टमर्थं प्रतिपाद्येति।

केचित्तु—सना विचारोऽजहल्लक्षणयोपस्थाप्यते, ज्ञानपदेन च साध्यावस्थं ज्ञानमिति वदन्ति, तच्चिन्त्यम्; प्रत्यय-

## रत्नतूलिका

वेति शक्यार्थसंबन्धाभिधानम्। अत्र पूर्वोपात्तसाधनतासंबन्धस्य पुनरनुकीर्तनमार्थिकस्य साध्यतासंबन्धस्य विकल्पप्रतिपादनायेति बोध्यम्।

प्रत्ययमात्रे लक्षणेति विवरणमतं प्रतिक्षेप्तुं स्वमतमाह— **जिज्ञासाशब्दश्चेति।** **इष्यमाणज्ञानं ज्ञानेच्छां वेति।** प्रकृतिप्रत्ययाभ्यां ज्ञानेच्छयोरुपस्थितौ विशेषणविशेष्यभावस्य कामचारत्वादन्वयबोधदशायामार्थप्राधान्यविवक्षयेष्यमाणज्ञानस्यापि प्रकृतिप्रत्ययसमभिव्याहारेणोपस्थितिरविरुद्धेति भावः। **न हीति।** द्वित्वमात्रेण रेफमात्रेण वा भ्रमरपदस्याविनाभावादिति भावः।

**ज्ञानपदेन चेति।** ज्ञानवाचकेन प्रकृतिपदेनेत्यर्थः। **साध्यावस्थमिति।** उपस्थाप्यत इत्यनुषङ्गः। सन्प्रत्ययसमभिव्याहारमहिम्ना इष्यमाणत्वावगमे ज्ञानस्य [2]साध्यावस्थत्वं लभ्यत इति

[1] साधनतया—कुं. [2] असाध्या—घ.

मात्रार्थेन ज्ञानानन्वयिनेच्छामात्रेण विचारस्य [1]संबन्धनियमाभावात्। अभिधेयाविनाभूते च प्रवृत्तिर्लक्षणोच्यते। न चैवमविनाभावादेवाक्षेपसिद्धेः शब्दवृत्तिवैयर्थ्यमिति वाच्यम्।

समभिव्याहृतपदानां संभूयकारित्वोपपादनार्थत्वात्, शब्दशक्तिमूलाक्षेपस्यैव वा लक्षणापर्यायत्वोपगमाच्च। न च निश्चितप्रमाणभावेनाऽपाताधिगते निर्णयेच्छा विचारं व्यभिचरति, येन सन्प्रत्ययमात्रेणेव जिज्ञासापदेनापि स न लक्ष्येत।

यद्युच्येत--जिज्ञासापदस्य न विचारे लक्षणा युक्ता; तस्य क्वचिदप्यशक्तेः। शक्तस्यैव शक्याविनाभूते लाक्षणि-

रत्नतूलिका

भावः। प्रत्ययमात्रार्थेनेत्यस्य विवरणं—ज्ञानानन्वयिनेति। यदि लक्षणायामविनाभावोऽपेक्षितस्तर्हि सा व्यर्थेत्याशङ्क्य निषेधति—न चैवमिति।

अर्थोपस्थितेरन्यतः संभवेऽपि प्रयोजनान्तरेण लक्षणास्वीकार इत्याह—समभिव्याहृतेति। एवं विधाक्षेपस्यैव लक्षणाशब्दार्थत्वमिति पक्षान्तरमाह—शब्दशक्तिमूलेति। इच्छामात्रेण विचारस्य व्यभिचारेऽपि ज्ञानेच्छया न व्यभिचार इत्याह—न च निश्चितेति। निश्चितप्रमाणभावेन वेदान्तवाक्येनापाताधिगते ब्रह्मणीति शेषः। निर्णयस्य विचारं विना अनिष्पत्तेर्निर्णयेच्छायां सत्यामवश्यं विचारे पुरुषः प्रवर्तत इति तस्यास्तदव्यभिचार इति भावः।

प्रत्ययमात्र इव प्रकृतिप्रत्ययसमुदायेऽपि लक्षणा नोपपद्यत इति शङ्कामनुवदति—यद्युच्येतेति। पूर्वोक्तं दृष्टान्तं विघटयति—

[1] संबन्धानियमात्.

कत्वात् । द्विरेफ इति च समभिव्याहृतान्वितस्वार्थवृत्ते रेफपदस्यैव भ्रमरलक्षणा, न समासस्येति । तर्हीहापि समभिव्याहृतान्वितस्वार्थवृत्तेः प्रकृतेः प्रत्ययस्य वा विचारे लक्षणास्तु, न तु पर्युदस्तप्रकृत्यर्थस्य प्रत्ययमात्रस्य ; उक्तदोषात् ॥

### सन्नन्तनिर्देशफलम्

अथापि स्यात्—जिज्ञासापदस्य विचारे नाजहल्लक्षणा ; काकेभ्यो दधि रक्ष्यताम्, छत्रिणो यान्तीत्यादाविव लक्ष्यतावच्छेदकानुगतोपाधेरेकान्वयस्य चाभावात्, जहल्लक्षणायां च नेष्यमाणज्ञानफलविचारकर्तव्यत्वावगमः, येन लाक्षणिकपदोपादानं सौत्रमर्थवत्स्यादिति ।

### रत्नतूलिका

द्विरेफ इति चेति । एवमपि समभिव्याहारमनपेक्ष्य प्रत्ययमात्रे लक्षणा सिद्ध्यतीति न तवेष्टसिद्धिरिति दूषयति —तर्हीहापीति ॥

जिज्ञासापदस्य विचारे किमजहल्लक्षणा, उत जहल्लक्षणेति विकल्प्य उभयथापि दोष इत्यभिप्रेत्य शङ्कते—अथापि स्यादिति । अनुगतोपाधेरिति । काकेभ्य इत्यत्र काकश्वादिषु दध्युपघातकत्वं, छत्रिणो यान्तीत्यत्रैकसार्थपतितत्वं मुख्यामुख्येष्वनुगत उपाधिः । न चेष्यमाणज्ञानविचारयोस्तदिच्छाविचारयोर्वा अनुगत उपाधिरस्ति, येन लक्षणा स्यादित्यर्थः । एकान्वयस्य चेति । यथा काकानामकाकानां चैकस्यां रक्षणक्रियायामपादानत्वेनान्वयः, छत्रिणामच्छत्रिणां चैकस्मिन्याने कर्तृत्वेन, न चेह तथैकान्वयः ; ज्ञानेच्छयोर्विध्यन्वयायोग्यत्वादित्यर्थः । जहल्लक्षणायां चेति । स्वार्थस्य त्यागे अथातो ब्रह्मविचार इत्युक्तं स्यात् । तथा सतीष्यमाणज्ञानस्य फलत्वासिद्ध्या तादर्थ्येन सूत्रे लाक्षणिकोपादानमनुपपन्नं स्यादित्यर्थः ।

न ; इष्यमाणज्ञानसाधनतालक्षितविचारस्य [1] विहितस्य फलापेक्षायां तस्यैव सन्निहितस्येष्यमाणज्ञानस्यार्थादेव फलत्वप्रत्ययोपपत्तेः। गङ्गापदलक्ष्यतीरमात्रस्य प्रतिसंबन्ध्यपेक्षायां सन्निहितगङ्गाया एव तथात्वावगमात्। यदि ह्यत्र ब्रह्मविचार इत्येव सूत्रं प्राणेष्यत् विचेतव्यफलो विचारविधिः प्रासङ्क्ष्यत, अधिकारगृहीतस्यापि मोक्षस्य दविष्ठतयानिर्ज्ञातद्वारतया च द्रागिति तत्संबन्धेनाशक्यप्रत्ययत्वात्। जिज्ञासेति तु सूत्रिते

## रत्नतूलिका

जिज्ञासापदस्य जहल्लक्षणा, तथापि न पूर्वोक्तदोष इत्यभिप्रेत्य परिहरति—नेति। जहल्लक्षणायामपि जिज्ञासापदेनेष्यमाणज्ञानं स्वार्थं प्रतीत्य, तत्साधनत्वेनोपस्थितो विचारो लक्षणीय इति, तस्य बुद्धिविपरिवृत्तिलक्षणं सन्निहितत्वमस्तीति तदेव फलत्वेन कल्प्यत इति भावः। लाक्षणिकपदोपादानप्रयोजनमन्वयव्यतिरेकाभ्यां दृढयति—यदि ह्यत्रेति। ननु न विचेयफलत्वं विचारविधेः ; अथशब्दसूचितमुमुक्षुलक्षणाधिकारिविशेषणतया मोक्षस्य बुद्धिस्थत्वादित्यत आह—अधिकारगृहीतस्यापीति। दविष्ठतयेति। दूरवर्तितया व्यवहिततयेति यावत्। अथशब्देनानन्तर्यं प्रतीत्य तत्प्रतियोग्याकाङ्क्षायां तत्तद्विचारविधिप्रकरणपर्यालोचनया मुमुक्षा ज्ञातव्येति पदान्तरकल्प्योपस्थितिकत्वात् व्यवधानमित्यर्थः। अथ वा—साक्षात्तदसाध्यत्वं दविष्ठत्वम्। ननु साक्षात्साध्यत्वाभावेऽपि ज्ञानद्वारा तत्साध्यत्वात्फलत्वमस्त्वित्यत आह—अनिर्ज्ञातेति। ब्रह्मविचार इति सूत्रप्रणयने ज्ञानरूपद्वारविशेषस्यानुपस्थितेरित्यर्थः। तत्संबन्धेनेति। विचार-

---

[1] आहितस्य—ग.

विज्ञानेन तन्नान्तरीयकेण मोक्षेण च निर्दिष्टफल एव विचार-विधिः स्यात्। सन्नन्तनिर्देशोऽपि तदर्थ एव। अन्यथा साध्यतयानाधिगतं विज्ञानं न साधनविचारं लक्षयित्वा शक्नोति तस्य फलत्वेन संबन्धुमिति।

यत्तु 'सन्नन्तनिर्देशो विचारस्य रागप्राप्तत्वज्ञापनार्थः' इति तदसारम्; 'ब्रह्मविचारः कर्तव्यः', 'ब्रह्माधिगमः कर्तव्यः', 'इष्यमाणं ज्ञानं विधेयम्', 'इच्छाविषयभूतं विचारात्मकं ज्ञानमेव तात्पर्यतो विधीयते', इत्यादिस्ववचनविरोधात्। अज्ञातज्ञापनमत्र विधिरिष्ट इति चेत्, किमिहाज्ञातं जिज्ञाप-

## रत्नतूलिका

साध्यत्वेनेत्यर्थः। विज्ञानमात्रस्यापुरुषार्थत्वादाह—**तन्नान्तरीयकेणेति**। तद्विज्ञानं नान्तरीयकमवान्तरव्यापारो यस्मिन्मोक्ष इत्यर्थः। ननु यदि फलीभूतज्ञानोपस्थितये लाक्षणिकपदोपादानं तर्हि अथातो ब्रह्मज्ञानमित्येव सूत्रप्रणयनं स्यात्, तावतैव ज्ञानस्वरूपस्योपस्थितत्वादित्यत आह—**सन्नन्तनिर्देशोऽपीति**। तदर्थ एव फलनिर्देशार्थ एव। **अन्यथेति**। सन्नन्तनिर्देशाभाव इत्यर्थः। साध्यतया प्रतीतस्य हि ज्ञानस्य साधनविचारलक्षकत्वम्। अन्यथा साधनतारूपसंबन्धाप्रतीतेरिति भावः।

सन्नन्तनिर्देशस्य परोक्तं प्रयोजनं दूषयितुमनुवदति—**यत्त्विति**। ननु स्ववचनेषु सर्वत्राज्ञातज्ञापनमेव विधिर्न त्वप्रवृत्तप्रवर्तनम्; तस्य रागप्राप्तत्वात्, अतो न तद्विरोध इति शङ्कते—**अज्ञातज्ञापनमिति**। **अत्र** ब्रह्मविचारः कर्तव्य इत्यादिवाक्येषु। किं [1] विचार्यप्रमितिहेतुत्वं

[1] विचारस्य प्रमिति—**कुं.**

यिषितमायुष्मतः। ज्ञातमेव तावद्विचारे विचार्यप्रमितिहेतुत्वम्, [1]शक्यत्वे हितसाधनत्वे चावगते विचारस्य रागत एव प्राप्तिरिष्टा।

कार्यव्युत्पत्तिविमर्शविरुद्धावगमं विचारस्य कर्तव्यस्य शक्यत्वं ज्ञाप्यत इति चेन्न; वेदान्तेषु ब्रह्मज्ञानानन्तस्थिरफलापातानधिगमेन मुमुक्षोरधिकारिणोऽभावे शास्त्रानारम्भप्रसङ्गात्। तेषु तदधिगमे च स्वानुभवविरोधेन कार्यव्युत्पत्तिविमर्शस्यैव विरोधात्। अस्मादेव न्यायात्तेषु तदधिगमोपगमे

रत्नतूलिका

जिज्ञापयिषितम्, किं वाशक्यत्वमिति विकल्प्य नाद्य इत्याह—ज्ञातमेव तावदिति। यद्येवं सिद्धान्तेऽपि विचारो न विधेयः स्यादित्याशङ्क्य विचारकर्तव्यता रागप्राप्तेति वदता हितसाधनत्वं ज्ञातमिति वाच्यम्, अन्यथा तदसंभवादिति वदन्नेव द्वितीयं पक्षं निराकरोति—शक्यत्व इति।

शक्यत्वमादाय शङ्कते—कार्यव्युत्पत्तीति। कार्यान्विते पदनां शक्तिग्रहेण सिद्धार्थे ब्रह्मणि शक्तिग्रहाभावात् ब्रह्मैव न सिद्ध्यति। अतो निर्विषयविचारः कर्तुमशक्य इति विमर्शेन शक्यत्वावगमो विरुध्यत इति तज्ज्ञापनं कर्तव्यमित्यर्थः। यं प्रति शक्यत्वं ज्ञाप्यते तस्य वेदान्तेषु ब्रह्मज्ञानादनन्तं स्थिरं च फलमस्तीत्यापातज्ञानमस्ति उत नेति विकल्प्य द्वितीय आह—न वेदान्तेष्विति। अस्ति ब्रह्म, तज्ज्ञानाच्चास्ति फलम्, तच्चानन्तं स्थिरं चेत्यापातज्ञानाभावे मुमुक्षाया एवानुदयादधिकार्यभावाच्छास्त्रानारम्भप्रसङ्ग इत्यर्थः। आद्येऽपि किमुपायान्तरात्तदधिगमः, उतास्मादेव न्यायादिति विकल्प्याद्य आह—तेषु तदधिगमे चेति। द्वितीयं दूषयति—अस्मादेवेति। ननु [2]रागप्राप्ते

[1] शक्यत्वे हि तत्साधनत्वे—ख.  [2] रागप्रयुक्ते—च. कुं.

च प्रवृत्तस्य तदधिगमः, तदधिगमे च मुमुक्षोः प्रवृत्तिरित्यन्योन्याश्रयापत्तेः। अथ हितसाधनत्वमज्ञातं ज्ञाप्येत, तर्हि तन्मुखेन विधित एव विचारकर्तव्यतावगम इति न जिज्ञासेति तस्य रागप्राप्तत्वं युक्तं सूचयितुम्। सूत्रस्य विषयस्वभावविपरिवृत्तिप्रसङ्गात्। रागतः प्रवृत्तिश्च विचारे निषेधिष्यते।

अत्र केचित्—ब्रह्म जिज्ञासितव्यमिति यदि नियमः, यदि वा परिसङ्ख्या, उभयथापि कपिलसुगताद्यभिमतप्रधानादितत्त्वाजिज्ञासाव्यावृत्तिरिह विवक्षितेति व्याचक्षते। अत्राह—ब्रह्मणो जिज्ञास्यत्वमात्रे सिद्धे हि तस्यैव जिज्ञास्यत्वसिद्धिः,

रत्नतूलिका

विचारानुष्ठाने हितसाधनत्वज्ञानमपेक्षणीयमिति त्वयैवोक्तम्। तज्ज्ञानं च वाक्येनाधीयत इति मन्दः शङ्कते—अथेति। तन्मुखेनेति। हितसाधनत्वज्ञापनमुखेनेत्यर्थः। विधित एव। न तु रागतः। इयदेव हि विधेरप्रवृत्तप्रवर्तकत्वम्, यदिष्टसाधनत्वबोधनम्। अन्यथा ज्योतिष्टोमादावपि विधिः प्रवर्तको न स्यात्। तत्रापि रागप्रयुक्ते [1]इष्टसाधनत्वमात्रं विधिना बोध्यत इति वक्तुं शक्यत्वादिति भावः। विषयस्वभावेति। विषयस्य विचारस्य विधिबोधितकर्तव्यताकत्वं स्वभावः, तस्य विपरिवृत्तिर्व्यत्यासः, विध्यधीनकर्तव्यताकस्य जिज्ञासापदेन रागप्राप्तत्वसूचने सूत्रकृता विषयस्वभावव्यत्यासकरणप्रसङ्गादित्यर्थः।

इयता प्रबन्धेनेष्यमाणापरोक्षफलको विचारविधिरपूर्वविधिरिति स्वमतमुपक्षिप्तम्। पूर्वाचार्यैस्तु नियमः परिसङ्ख्या वेति व्याख्यातम्। तत्र परोक्तदूषणोद्धाराय तन्मतं दर्शयति—अत्र केचिदिति।

---

[1] हितसाधन—च.

न चोभयं जिज्ञामासूत्रप्रतिपाद्यं ब्रह्म जिज्ञास्यं ब्रह्मैव जिज्ञास्यमिति च ; वाक्यभेदप्रसङ्गात् । अपि चाधीतक्रमेण पूर्वभागविचारानन्तरमुत्तरभागविचारस्य न प्रधानादिनिरासापेक्षा ; तदानीं तदप्रसक्तेः । वेदान्तार्थश्रद्धादार्ढ्ये तु ईक्षत्यादौ वेदान्तानामतत्परत्वोपपादनेन "विप्रतिषेधाच्चासमञ्जसम्" इत्यादौ तदागमाप्रामाण्यतत्प्रमेयदौस्थ्योपपादनेन च तन्निरसनमग्रे भविष्यतीति व्यर्थं कृतकरणमिति--तन्न ; "ब्रह्मविदा-

## रत्नतूलिका

नियमपक्षे ब्रह्माणि जिज्ञास्यत्वस्य पक्षतः प्राप्तिर्वाच्या, परिसङ्ख्यापक्षे च तत्रान्यत्र च प्राप्तिर्वाच्या, सा च न रागतः ; परमतप्रवेशापत्तेः, अतोऽनेनैव सूत्रेण तत्प्राप्तिर्वाच्या, ततश्च वाक्यभेद इत्याह—न चोभयमिति । अप्रसक्तप्रधानादिविचारनिरासार्थत्वे सूत्रस्य वैयर्थ्यं स्यादित्याह—अपि चेति । तदानीमिति । विचारप्रवृत्तिदशायामित्यर्थः । तर्हि "ईक्षतेर्नाशब्दम्" इति सूत्रेण प्रधाननिरासः, "विप्रतिषेधाच्चासमञ्जसम्" इति सूत्रेण परस्परविरोधादसमञ्जसं तन्मतमिति तदागमप्रामाण्यनिरासश्च न स्यादित्यत आह—वेदान्तेति । प्रसक्तनिरासाय नेक्षतेरित्यादिसूत्राणि, किं त्वन्यनिरासे वेदान्तार्थे श्रद्धा दृढा भवतीति तन्निरास इति भावः । अन्यार्थतयाप्युत्तरत्र करिष्यमाणत्वान्नात्र तत्करणमर्थवदित्याह—व्यर्थमिति । ब्रह्मज्ञानान्मुक्तिरित्युपश्रुत्य ब्रह्मनिश्चयेच्छावतो विचार्यतत्त्वनिर्णयाय विचारस्य रागत एव प्राप्तत्वान्न तत्प्राप्तौ सूत्रव्यापारः, अपि तु नियमादौ, अतो न वाक्यभेद इति दूषयति—तन्नेति । निरसनीयप्रधानादिप्रसक्तिश्चानन्तरमेव वक्ष्यत इति भावः ।

म्रोति परम्" इत्युपश्रुत्य ब्रह्म निश्चिचीषतो विचार्यतत्त्वनिर्णयफलतया विचारस्य प्राप्तत्वेन विचारविधेर्विषयनियमार्थत्वोपपत्तेः।

अपि चानन्वितपदानतिरेके सत्यर्थभेदेन सूत्रमावर्त्यमानमपि न वाक्यभेददोषमावहति। चोदनासूत्रं हि धर्मस्वरूपपरं तत्प्रमाणपरं च व्याख्यातं शबरस्वामिना।

## रत्नतूलिका

अस्तूभयपरत्वम्, तथापि सूत्रेषु नैतादृशो वाक्यभेदो दोषायेत्याह—अपि चेति। अनन्वितपदातिरेके तु वाक्यभेदो दोषाय, यथा प्राप्ते कर्मण्यनेकविधाने तत्रैकस्मिन्विधेये तद्वाक्यानन्वितं पदान्तरमतिरिक्तमवतिष्ठत इति सहश्रुतपदानां संभूयकारित्वपरित्यागेन कतिपयपदान्वयेन वाक्यार्थद्वयबुद्धिपर्यवसानात्तत्र दोषाय, अर्थवशात्कृत्स्नसूत्रावृत्तौ तु तल्लक्षणो वाक्यभेदो न दोषायेत्यर्थः। व्याख्यातं शबरस्वामिनेति। "ननु न शक्तमिदं सूत्रमिमावर्थावभिवदितुम्, चोदनालक्षणो धर्मो नेन्द्रियादिलक्षणः, अर्थश्च धर्मो नानर्थ इति। एकं हीदं वाक्यं तदेवं सति भिद्येत" इत्युभयपरत्वमाक्षिप्य, [1] "तच्च वैदिकेषु न पुनः सूत्रेषु, अन्यतोऽवगतेऽर्थे सूत्रमेवमर्थमित्यवगम्यते" इत्यनेन सूत्रे आवृत्तिर्न दोषायेति परिहृतम्। वार्तिककृता च

"शिष्यान्प्रत्यविशिष्टत्वात्सूत्रवैदिकवाक्ययोः।
अशक्तश्चोभयोः साम्यान्न सूत्रेष्वित्यनुत्तरम्॥"

इति तद्भाष्यमाक्षिप्य,

---

[1] तत्तु वैदिकेषु न सूत्रेषु, अन्यतोऽवगतेऽर्थे सूत्रमेवमर्थमिदमित्यवगम्यते। इति मुद्रितभाष्यपाठः।

अलङ्कारो हि सूत्रस्य विश्वतोमुखत्वमनेकार्थत्वम्। अन्यथा तत्र तत्र विवक्षितार्थवर्णकभेदोपन्यासो न सङ्गच्छेत। न च प्रधानाद्यप्राप्त्या तन्नियमानुपपत्तिः; तापत्रयातुरस्य तन्निवृत्त्युपायान्वेषिणो व्यक्ताव्यक्तज्ञविज्ञानाद्युपायान्तरस्य यदृच्छोपदेशादिनापि प्राप्तिसंभवात्। अन्यथा सर्वथैवाप्रसङ्गादग्रेऽप्यानिषेध्य-

## रत्नतूलिका

" प्रागुक्तपरिसङ्ख्यायाः फलमेतत्प्रकाश्यते।
सूत्रेषु ह्यनया युक्त्या गतिरेषापि युज्यते।
तस्मादावर्तते सूत्रं तन्त्रं वा शक्तिभेदतः॥ "

सति संभवे वाक्यदोषाणां वर्जनं नासतीति अत इत्यर्थ इति। योऽर्थो धर्मः स चोदनालक्षण इति प्रमाणपरं सूत्रम्। यश्चोदनालक्षणोऽर्थः स धर्म इति स्वरूपपरम्। पूर्वसूत्रे अर्थपदमुत्तरसूत्रसिद्धानुवादः। उत्तरसूत्रे चोदनालक्षणपदं पूर्वसूत्रसिद्धानुवाद इति तात्पर्येण व्याख्यातमित्यर्थः। अलङ्कारो हीति।

" अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् "

इति सूत्रलक्षणे विश्वतोमुखत्वमनेकार्थत्वमुक्तमिति तस्यालङ्कारत्वमित्यर्थः। व्यक्ताव्यक्तज्ञविज्ञानेति। व्यक्तं कार्यं, अव्यक्तं प्रधानं, ज्ञः पुरुषः, तेषां विज्ञानादीत्यर्थः। आदिपदात् षोडशपदार्थतत्त्वज्ञानादि गृह्यते। अनिषेध्यत्वापातादिति। लेशेनापि प्रसक्तौ सत्यां वेदान्तार्थे श्रद्धाशैथिल्यं भवेत्। अतः श्रद्धादार्ढ्याय तन्निरसनमर्थवत्स्यात्। अन्यथा स्वयमेव तत्प्रसक्तिं संपाद्य तन्निरसनमयुक्तम्। "प्रक्षालनाद्धि पङ्कस्य" इति न्यायादिति भावः। यदुक्तं

त्वापातात्। नापि कृतकरत्वम्; [1]अत्र प्रतिज्ञामात्रोक्तस्य परतः प्रपञ्चनोपपत्तेः। चोदनासूत्रोक्तधर्मप्रमाणस्य "तस्य निमित्तपरीष्टिः" इत्यादिना प्रपञ्चनसम्प्रतिपत्तेः।

"इष्टं हि विदुषामेतत्समासव्यासधारणम्"

इति। तस्माद्यदि प्रधानादीनामपि कथमपि जिज्ञास्यत्वप्राप्तिः शङ्क्येत, तन्नियमोऽपि सूत्रेणानेन क्रियमाणो न दुष्यतीति। तस्मान्न्यायनिर्व्यूढसद्भावविवेकादेरनन्तरं निश्रेयसफला ब्रह्ममीमांसा प्रतिपद्यते। इति सूत्रार्थसङ्ग्रहः॥

रत्नतूलिका

कृतकरणानर्थक्यमिति तद्दूषयति—नापीति। "तस्य निमित्तपरीष्टिः" इति द्वितीयसूत्रम्। तस्य धर्मस्य निमित्तं प्रमाणं तस्य परीष्टिः परीक्षा। किं चोदनैव प्रमाणमुतान्यदपीति तदर्थः। तदादिना प्रपञ्चनसम्प्रतिपत्तेरित्यर्थः। सङ्ग्रहविस्तराभ्यां धारणमिति समासव्यासधारणमिति भारतवचनस्यार्थः। प्राचीनमतमुपसंहरति—तस्माद्यदीति। तन्नियमः तन्निरसनमित्यर्थः। प्राप्तिशङ्काभावे तूत्तरत्रापि तन्न निरस्येतेत्युक्तमिति भावः। [2]सूत्रार्थमुपसंहरति—तस्मादिति। न्यायेन निर्व्यूढः सन् भावो यस्य विवेकादेस्तदनन्तरमित्यर्थः। इति सूत्रार्थसङ्ग्रहः॥

इति श्री हारीतगोत्रतिलक कुरवशेरिकुलप्रदीप श्रौतस्मार्तस्वतन्त्र श्री वेंकटपतियज्वनस्तनूजस्य नाचमम्बागर्भसंभूतस्य श्रीविजयराघवशास्त्रिगुरुवरकटाक्षलब्धान्वीक्षक्यादिकतिपयविद्यस्य श्री कृष्णानन्दसरस्वतीगुरुचरणारविन्दपरिचरणलब्धसवलब्धावैशद्यस्य सर्वतोमुखयाजिनो भास्करदीक्षितस्य कृतौ सिद्धान्तसिद्धाञ्जनव्याख्यायां रत्नतूलिकाख्यायां सूत्रार्थसङ्ग्रहविवरणं समाप्तम्।

---

[1] एकत्र—ङ.   [2] उत्तरग्रन्थावतारसौकर्याय सूत्रार्थमुप—च. कुं.

## धर्मब्रह्मविचारयोरैकशास्त्र्यचोद्यम्

अत्राह—धर्मब्रह्मविचारौ तावदेकं शास्त्रम् । यथाह वृत्तिकारः—"संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेन" इति शास्त्रैकत्वसिद्धिरिति । युक्तं चैतत्, "अर्थैकत्वादेकं वाक्यम्" इति प्रधानप्रतिपाद्यैक्यादेकप्रबन्धत्वं व्याख्येयवेदस्य तावदवसीयते । प्रतिपाद्यैक्यं च वेदस्य पुरुषार्थपरत्वाद्ब्रह्मपरत्वाद्वा । ब्रह्मपरत्वं च "सर्वे वेदा यत्पदमामनन्ति", "वेदैश्च सर्वैरहमेव वेद्यः" इत्यादिश्रुतिस्मृतिभ्यः ।

### रत्नतूलिका

एवं संक्षेपेण दर्शितं सूत्रार्थं विस्तरेण प्रतिपादयितुमैकशास्त्र्यालम्बनेन कर्मविचारानन्तर्यमथशब्दार्थ इति पूर्वपक्षमुत्थापयति—**अत्राहेति । संहितमिति ।** नियतपौर्वापर्यैकव्याख्येयव्याख्यान[1]रूपतया सङ्गतिविशेषेण विशिष्टक्रममित्यर्थः । षोडशलक्षणत्वं च जैमिनीयस्य सङ्कर्षणकाण्डगतैश्चतुर्भिरध्यायैः सहेति बोध्यम् । व्याख्यानस्यैकत्वं वक्तुं प्रथमं व्याख्येयवेदस्य प्रतिपाद्यैक्यादेकग्रन्थत्वमाह —**अर्थैकत्वादिति ।** अवान्तरप्रतिपाद्यभेदेन हेतोरसिद्धिमा भूदिति—**प्रधानेति** विशेषणम् । अनन्तरं व्याख्याने तदवगम इति तावच्छब्दप्रयोगः । **पुरुषार्थपरत्वादिति ।** पुरुषार्थत्वं चालौकिकश्रेयःसाधनत्वम् । तच्च ब्रह्मणोऽप्यस्तीति भावः । ननु कर्मकाण्डस्य ब्रह्मपरतायां किं मानमित्यत आह —**ब्रह्मपरत्वं चेति । यत्पदमिति** समानाधिकरणे । तथा च कर्मभागस्यापि ब्रह्मपरत्वे प्रामाणिके कर्मणां ब्रह्माराधनरूपत्वात् ब्रह्मज्ञानार्थत्वाच्च तत्प्रतिपादकवेदभागस्यापि तत्परत्वमित्युपपत्तिरिति भावः ।

---

[1] रूपसंगति—कुं.

ततश्चैकग्रन्थव्याख्यानत्वाद्धर्मब्रह्मजिज्ञासे एकं शास्त्रं सम्प्रतिपन्नवत् । न च वक्तृभेदः शास्त्रभेदप्रयोजकः ; जयादित्यवामनवृत्त्यादौ व्यभिचारात् । नापि प्रतिज्ञाभेदोपक्रमः ; "अथातो धर्मजिज्ञासा", "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" इति प्रतिज्ञाभेदेऽपि शास्त्रैक्यात् । साधारणप्रतिज्ञावैधुर्ये सति स शास्त्रभेदक इति चेदस्तु, प्रस्तुते तदसिद्धिः । भागद्वयासाधारणार्थप्रतिज्ञाद्वये कृते साधारणप्रतिज्ञानस्यार्थसिद्ध्युपपत्तेः ।

## रत्नतूलिका

तर्कितेऽर्थेऽनुमानमाह—ततश्चेति । सम्प्रतिपन्नवदिति । कर्मकाण्डव्याख्यानवदित्यर्थः । सत्प्रतिपक्षमाशङ्क्य निषेधति—न चेति । किं भिन्नवक्तृकत्वं हेतुः, अथवा प्रतिज्ञाभेदेनोपक्रान्तत्वम्, आहोस्वित्साधारणप्रतिज्ञाविधुरत्वे सति तत्त्वम्, यद्वा भिन्नजिज्ञास्यत्वम्, अथवा भिन्नफलत्वम्, विरुद्धार्थकत्वं वेति षोढा विकल्प्याद्यं दूषयति—जयादित्येति । व्याकरणे चतुर्णामध्यायानां जयादित्यकृता वृत्तिः, चतुर्णां वामनकृता, तयोश्चैकव्याकरणव्याख्यानरूपयोरेकग्रन्थत्वमिति तत्र व्यभिचार इत्यर्थः । आदिपदाद्भूतस्वामिकपर्दिभाष्यादेर्ग्रहणम् । तयोरापस्तम्बसूत्रव्याख्यानत्वेनैकत्वादिति । द्वितीयमपि व्यभिचारेण दूषयति—नापीति । तृतीयं शङ्कते—साधारणेति । सत्यां साधारणप्रतिज्ञायां "अथातः शेषलक्षणम्", "अथातः क्रत्वर्थपुरुषार्थयोः" [1] इत्यादिवत् प्रतिज्ञान्तरस्यावान्तरार्थभेदप्रतिज्ञात्वसंभवेन शास्त्रभेदकत्वम् । न चात्र सेति भावः । सः प्रतिज्ञाभेदेनोपक्रमः । असिद्ध्या दूषयति—अस्तु, प्रस्तुत इति । साधारणप्रतिज्ञाया अर्थ-

---

[1] रितिवद्—छ्रं

साधर्म्यवैधर्म्यसमजात्योरुद्देशे तदुभयानुगतप्रतिधर्मोद्देशवदिहापि वेदार्थजिज्ञासेत्यनुगतरूपोपपत्तेः। अर्थविशेषप्रतिज्ञा तु मुखतः क्रियते; प्रतिपादनौपयिकतयावश्यकत्वात्. न साधारणी।

अस्तु वा "अथातो ब्रह्मजिज्ञासा" इति साधारणप्रतिज्ञा। धर्मविचारस्तु ब्रह्ममीमांसातृतीयलक्षणतुरीयपादसङ्गतोऽपि पृथ-

रत्नतूलिका

सिद्धौ दृष्टान्तमाह—**साधर्म्यवैधर्म्येति**। न्यायशास्त्रे जातिनिरूपणावसरे "साधर्म्यवैधर्म्योत्कर्षापकर्ष" इत्यादिसूत्रे साधर्म्यसमो वैधर्म्यसमश्चेति जातिद्वयमुद्दिष्टम्, तौ च प्रतिधर्मसमावान्तरभेदौ। तस्य चोद्देशः सूत्रकारेण न कृतः, अथाप्यसाधारणार्थद्वयोद्देशेन यथा साधारणार्थस्योद्देशः सिद्ध्यति, तथा असाधारणार्थप्रतिज्ञाद्वयेन साधारणार्थप्रतिज्ञापि सिद्ध्यतीत्यर्थः। यथा चैतत्तथा सिद्धान्ते स्पष्टीभविष्यति। ननु साधारणप्रतिज्ञैव मुखतः क्रियताम्, असाधारणप्रतिज्ञाया एव तत्तदसाधारणार्थप्रतिपादनेनाऽर्थसिद्ध्युपपत्तेरित्यत आह—**अर्थविशेषेति**। योऽर्थः प्रतिपाद्यते तस्य मुखतः प्रतिज्ञानाभावे बुद्धिव्यामोहः स्यादिति तस्यावश्यकतेति भावः।

साधारणप्रतिज्ञामर्थसिद्धामङ्गीकृत्यासिद्धिः परिहृता। इदानीं ब्रह्म[1]जिज्ञासामेव साधारणीं कृत्वा तां परिहरति—**अस्तु वेति**। ससाधनब्रह्मविचारे प्रतिज्ञाते साधनानि कर्माण्यपि प्रतिज्ञातानीति तस्याः साधारण्यमिति भावः। ननु तर्हि ब्रह्मविचारान्तर्गतस्य धर्मविचारस्य पृथक्करणं न स्यादित्यत आह—**धर्मविचारस्त्विवति**। **तुरीयपादेति**।

---

[1] जिज्ञासाप्रतिज्ञामेव—कं.

क्रियते विस्तीर्णत्वात् । तन्त्रान्तरे यथाह्निकभेदेन निग्रहान्तर्भूतच्छलजाती तदन्तर्भूतहेत्वाभासाश्चाध्यायभेदेन हिरुङ्निरूप्यन्ते तद्वत् । प्रतिपत्तिसौकर्यलक्षणक्रमोक्तकर्मविचारस्य पूर्वभावः । अस्तु वा "अथातो धर्मजिज्ञासा" इत्येव साधारणप्रतिज्ञा । अलौकिकश्रेयस्साधनं हि धर्मः ।

"श्रेयस्साधनता ह्येषां नित्यं वेदात्प्रतीयते ।
ताद्रूप्येण च धर्मत्वं ................ ॥"

इति भट्टोक्तेः । ब्रह्मणश्च श्रेयस्साधनतया धर्मत्वात् । भारते च–

रत्नतूलिका

तत्रापि "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्यत्र सङ्गत इत्यर्थः । हिरुक् पृथगित्यर्थः । एवं प्रमेयान्तर्गतत्वेऽपि प्रमाणस्य पृथङ्निरूपणं बोध्यम् । नन्वेवमपि धर्मविचारप्राथम्ये को हेतुस्तत्राह—प्रतिपत्तीति । ब्रह्मविचारोपयोगिन्यायानां धर्ममीमांसायां प्रतिपादनेनोपजीव्यत्वात्तस्य प्राथम्ये प्रतिपत्तिसौकर्यमिति भावः । ननु ब्रह्मणः कथं धर्मशब्दवाच्यत्वम्? "यत्त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मः" इत्यापस्तम्बेनानुष्ठेये यागादौ धर्मशब्दप्रयोगात्, "धर्मं जैमिनिरत एव" इति सूत्रे ब्रह्मप्रतिद्वन्द्वितया धर्मशब्दप्रयोगाच्चेत्यत आह—अलौकिकश्रेयस्साधनं हीति । धर्मो द्विविधः, सिद्धः साध्यश्चेति । तत्र साध्यधर्मः पूर्वतन्त्रे प्रतिपाद्यः, उत्तरतन्त्रे च सिद्धधर्मः । धर्मशब्दश्चालौकिकश्रेय[1]स्साधनतावाची साधारण इति भावः । ताद्रूप्येण श्रेयस्साधनतारूपेण । "तस्मान्नेन्द्रियगोचरः" इति श्लोकशेषः । आपस्तम्बस्य च प्रायेण साध्यधर्मप्रतिपादकत्वात्तत्रैव लोके [2]प्रचुरप्रयोगाच्च क्रियमाणं धर्म

[1] साधनवा—घ. [2] प्रचुरतर—च.

"ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥"

इति सिद्धेऽपि ब्रह्मणि धर्मशब्दप्रयोगाच्च ।

तत्र—

"द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते ॥"

इत्यभियुक्तोक्तेः, सिद्धरूपधर्मस्य पूर्वभागे, उत्तरभागे च "आत्मेत्येवोपासीत" इत्युपासनादिसाध्यधर्मस्य च साङ्कर्येऽपि कर्मात्मा साध्यधर्मः ब्रह्मात्मा सिद्धधर्मश्च प्रधानप्रतिपाद्यो व्यवतिष्ठते ।

### रत्नतूलिका

इत्युक्तिः, न तु क्रियमाणत्वस्यापि धर्मशब्दार्थत्वाभिप्रायेण । "धर्मं जैमिनिः" इति सूत्रमपि साध्यधर्मपरम् । सिद्धधर्मप्रतिद्वन्द्वितयोपात्तस्य सामान्यशब्दस्य विशेषपरत्वावश्यंभावात् । अन्यथा भारतवचनविरोधः स्यादित्यभिप्रेत्य तदुदाहरति—भारते चेति ।

नन्वेवं भागद्वयव्यवस्था न स्यात्, न च सिद्धसाध्यरूपप्रतिपाद्यव्यवस्थया पूर्वोत्तरभागद्वयव्यवस्थेति वाच्यम्; उभयोरुभयत्राव्यवस्थया प्रतिपादनादित्याशङ्क्य प्रधानप्रतिपाद्यव्यवस्थया भागद्वयव्यवस्थेत्याह—तत्र द्रव्यक्रियेति । प्रधानेति । पूर्वभागे साध्यधर्मः प्रधानम्, द्रव्यादिकं तु तदर्थम् । उत्तरभागे तु सिद्धं ब्रह्म प्रधानम्, तस्योपेयत्वात्, उपायभूतमुपासनं तु तदर्थम् । तथा च प्रधानव्यवस्थैव कारणम् । अन्यथा पूर्वषट्केऽतिदिष्टार्थविचारस्य उत्तरषट्के उपदिष्टार्थविचारस्य च साङ्कर्यात् षट्कद्वयव्यवस्थापि न स्यादिति भावः । ननु तर्हि साध्यधर्मस्य पृथगसाधारणप्रतिज्ञा कर्तव्या स्यात्, अन्यथा तत्प-

तथा च सत्यां साधारणप्रतिज्ञायां [1](धर्मशब्दस्य साध्यधर्मे प्रसिद्धिप्राचुर्येण बुद्धिस्थत्वाद्वा धर्मजिज्ञासापदतन्त्रतया वा अर्थतो वा विशेषप्रतिज्ञासिद्धिरिति चोदनासूत्रे धर्मलक्षणं कृत्वा तस्मिन्निरवशेषे विचारिते बहुग्रन्थव्यवधानात्) धर्मशब्दस्य ब्रह्मणि प्रसिद्धिप्राचुर्याभावेनाशब्दार्थत्वशङ्का च मा भूदिति पुनः "अथातो ब्रह्मजिज्ञासा" इति प्रतिज्ञाय तस्य लक्षणमुक्तं जन्मादिसूत्र इति न वैयर्थ्यम् ।

रत्नतूलिका

तिपादनायोग इत्याशङ्क्य त्रेधा परिहारमाह--तथा चेत्यादि । बुद्धिस्थत्वादिति । पृथक्प्रतिज्ञापि प्रतिपादनाय बुद्ध्युपारोहणार्था । तच्च साधारणप्रतिज्ञावाक्यस्थधर्मपदप्रसिद्धिप्राचुर्येणान्यथासिद्धमिति न पृथक्प्रतिज्ञया प्रयोजनमिति भावः । अस्मिन्पक्षे विशेषप्रतिज्ञासिद्धिरिति तत्कार्यसिद्ध्यभिप्रायम् । यद्वा अलौकिकश्रेयस्साधनाभिप्रायेण सूत्रकृता धर्मपदे प्रयुक्ते तत्प्रसिद्धिप्राचुर्येण श्रोतुस्तदानीमेव साध्यधर्मजिज्ञासेत्येवं रूपं प्रतिज्ञावाक्यं सिद्ध्यतीति भावः । तन्त्रतया वेति । अर्थद्वय-प्रतीत्यर्थं द्विरुच्चारयितव्यस्य सकृदुच्चरिततयेत्यर्थः । अर्थतो वेति । उत्तरत्र साध्यधर्मप्रतिपादनसामर्थ्येन तद्विषयप्रतिज्ञा कल्प्यत इत्यर्थः । ननु "अथातो धर्मजिज्ञासा" इति प्रतिज्ञयैवालम्, किं ब्रह्मजिज्ञासेति प्रतिज्ञया । न च प्रतिपादनोपायतया सापि कर्तव्या; तस्या अपि साध्यधर्मविचारप्रतिज्ञावज्जिज्ञासापदतन्त्रतादिनापि सिद्ध्युपपत्तेरित्यत आह--बहुग्रन्थेति ।

---

[1] अयं कुण्डलान्तर्गतः पाठः खपुस्तके नास्ति ।

ननु कर्मणामपि परमपुरुषाराधनरूपतया आम्नायस्योदाहृतश्रुतिस्मृतिभ्यामाराध्यब्रह्मैकार्थ्यावगमान्नोक्तव्यवस्था युक्ता, न; परदेवताराधनरूपतामनपेक्ष्यैव स्वप्राधान्येन कर्मणामाद्यतन्त्रे विचार्यत्वात्। अत एव विनापि ज्ञानमनुष्ठितकर्मणामन्तवत्फलमुच्यते "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति" इति।

"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते॥"

रत्नतूलिका

ननु पूर्वभागेऽपि सिद्धरूपस्य ब्रह्मणः कर्माराध्यतया प्रधानप्रतिपाद्यत्वस्य श्रुतिस्मृतिभ्यामवगमान्नोक्तविधया भागद्वयव्यवस्था युक्तेति सिंहावलोकनेन शङ्कते—**ननु कर्मणामपीति**। उदाहृतेति। "सर्वे वेदा यत्पदमामनन्ति" इति श्रुतिः, "वेदैश्च सर्वैरहमेव वेद्यः" इति स्मृतिः, ताभ्यामित्यर्थः; सत्यं परमपुरुषाराधनता कर्मणामिति, तथापि तामनपेक्ष्य स्वातन्त्र्येण फलजनकतया स्वप्राधान्यमप्यस्तीति तदादाय पूर्वभागे विचार्यत्वाद्व्यवस्थासिद्धिरित्याह—**नेति**। ननु भगवदाराधनरूपस्य कर्मणः स्वप्राधान्यमसिद्धम्, अतः कथं तदादाय विचार्यता स्यादित्यत आह—**अत एवेति**। यतः परमपुरुषाराधनतामनपेक्ष्य स्वप्राधान्यमत इत्यर्थः। **एतदक्षरं** परमात्मानम्। **अविदित्वा बहूनि वर्षसहस्राणि जुहोति यजते तपस्तप्यते** इत्यन्वयः। **मां तत्त्वेन** भोक्तृत्वादिना **नाभिजानन्ति अतश्च्यवन्ति** अनन्तं फलं न प्राप्नुवन्तीति स्मृत्यर्थः। ततश्च विनापि परमपुरुषज्ञानमनुष्ठितस्य कर्मणः फलवत्त्वावगमात्स्वप्राधान्यमिति भावः। ननु पूर्वभागस्य स्वप्राधान्येन कर्मप्रति-

इति च। उत्तरतन्त्रे चाराधनीयपरमपुरुषविचारमपेक्ष्य तदाराधनरूपता पश्चादवगम्यते।

एतेन जिज्ञास्यभेदान्न शास्त्रैक्यमिति प्रत्युक्तम्; षट्कद्वयार्थभेदवदध्यायार्थभेदवच्चान्तरालिकार्थभेदस्य शास्त्रैक्याविरोधित्वात्। फलभेदोऽप्यत एव निरस्तः। षट्कद्वयचिन्तितप्रकृतिविकृतिप्रयोजनभेदवदस्याशास्त्रभेदकत्वात्। अलौकिकश्रेयोलक्षणैकरूपफलेऽभ्युदयनिःश्रेयसरूपावान्तरभेदस्याप्रयोजकत्वात्।

रत्नतूलिका

पादकत्वे कथमुत्तरभागैकवाक्यता, इत्यत आह—उत्तरतन्त्रे चेति। **पश्चादवगम्यत इति।** ततश्च पूर्वभागावसेयस्य स्वप्राधान्यस्य उत्तरभागावसेयपरमपुरुषाराधनत्वस्य चाविरोधादेकवाक्यतोपपत्तिरिति भावः।

साधारणप्रतिज्ञावैधुर्ये सति प्रतिज्ञाभेदलक्षणं तृतीयं निरस्य तुरीयं निरस्यति—**एतेनेति।** साधारणप्रतिज्ञोपपादनद्वारा एकार्थपरत्वप्रतिपादनेनेत्यर्थः। **शास्त्रैक्याविरोधित्वादिति।** तथा च भिन्नजिज्ञास्यत्वादिति हेतोर्व्यभिचार इति भावः। षट्कद्वयार्थभेदः प्रकृतिविकृतिरूपार्थभेदः। **अध्यायार्थभेदवदिति** प्रमाणभेदशेषशेषित्वप्रयुक्तिक्रमाधिकारातिदेशविशेषातिदेशोहबाधतन्त्रप्रसङ्गलक्षणार्थभेदवदित्यर्थः। पञ्चमं निरस्यति—**फलभेद इति।** अभ्युदयनिःश्रेयसलक्षणफलभेदोऽपीत्यर्थः। **प्रकृतिविकृतीति।** उपदेशातिदेशरूपप्रयोजनभेदवदित्यर्थः। अतश्शब्दार्थं सूचयति—**अलौकिकेति।**

**नाप्यर्थविरोधादशास्त्रैक्यम्; असिद्धेः। अक्रियार्थानामानर्थक्यमाशङ्क्य विध्येकवाक्यतया प्रामाण्यसमर्थनस्य जैमिनीयस्य सामान्यविषयस्य स्वातन्त्र्येण स्वयं पुरुषार्थपर्यवसायितया वेदान्तानां ब्रह्मणि प्रामाण्यसमर्थनेन विशेषविषयेण वैयासिकेन केवलमपवादात्। उत्सर्गापवादभावे च "आहवनीये जुहोति", "पदे जुहोति", "कर्मण्यण्", "आतोऽनुपसर्गे कः" इत्यादाविव शास्त्रैकत्वाविरोधात्।**

## रत्नतूलिका

षष्ठं निषेधति—**नापीति**। ननु कथमसिद्धिः "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यत इति सूत्रेणाम्नायस्य वेदस्य प्रयोजनपर्यवसानाय क्रियार्थत्वावश्यंभावादक्रियार्थानामानर्थक्यं निष्प्रयोजनत्वम्, तस्मादक्रियार्थवाक्यजातमप्रमाणमुच्यत इत्यर्थकेनाक्रियार्थानामप्रामाण्यमाशङ्क्य "विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः" इति सिद्धान्तसूत्रेण तेषां विधि[1]वाक्यैकवाक्यत्वाद्विधीनां स्तुति[2]रूपत्वेन सप्रयोजनाः स्युः इत्यर्थकेन विध्येकवाक्यतया प्रामाण्यमङ्गीकृतं जैमिनिना। वेदान्तानां स्वतः पुरुषार्थपर्यवसायितया प्रामाण्यस्य वैयासिकस्य तेन विरोधादित्याशङ्क्य परिहरति—**अक्रियार्थानामिति**। **उत्सर्गापवादभावे चेति**। यथा "आहवनीये जुहोति" इति होममात्रे आहवनीयविधायकं किंचिदनारभ्य प्रवृत्तं "सप्तमे पदे जुहोति" इति ज्योतिष्टोमप्रकरणगतेन होमविशेषे पदविधायकेन बाध्यते। न चैतावता तयोरेकशास्त्रत्वहानिः। यथा वा "कर्मण्यण्" इति कर्मण्युपपदे धातुमात्रादण्प्रत्ययविधायकशास्त्रं "आतोऽनुपसर्गे कः" इत्यनुपसर्गे कर्मण्युपपदे आकारान्ताद्धातोः कप्रत्ययविधायकेन शास्त्रेण बाध्यते।

---

[1] वाक्येनैक–क. च.  [2] रूपार्थेन–कुं.

न च कर्मसु सन्निधानानुपपत्त्यादिना देवतानिराकरणे तात्पर्यं जैमिनेः, येन देवताभ्युपगमवादेन वैयासिकेन विरुद्ध्येत। अश्रुतवेदान्तानामश्रद्धा कर्मणि मा भूदिति न हि निन्दान्यायेन कर्मप्राधान्यपरत्वात् तस्यान्वारुह्यवादत्वाद्वाऽनित्यसंयोगनिरासेन

## रत्नतूलिका

अथ चैकवाक्यता न हीयते । तथा अत्राप्यक्रियार्थमात्रविषयस्य शास्त्रस्य स्वतः पुरुषार्थपर्यवसाय्यक्रियार्थविशेषविषयकेन शास्त्रेण बाधेऽपि न शास्त्रैक्यहानिरित्यर्थः ।

ननु देवताङ्गीकारे तस्याः कर्मसु सन्निधानं वाच्यम्, तच्चानुपपन्नम्; एकस्मिन्काले अनेकासु यागभूमिष्वेकस्या इन्द्रादिरूपायाः सन्निधानानुपपत्तेः, किंचानित्यदेवतासंयोगे वेदस्याप्यनित्यत्वं स्यादित्याद्यनुपपत्त्या "गुणत्वेन देवताश्रुतिः" इत्यादिषु देवताया निरासो वैयासिकेन देवताभ्युपगमेन विरुद्ध इत्याशङ्क्य निषेधति—न च कर्मस्विति । अश्रुतवेदान्तानामिति । यदि देवतानिरासपूर्वकं कर्मप्राधान्यं नोच्येत, तदा कर्माराध्याग्न्यादीनां विनाशसंभवेन फलालाभशङ्कया कर्मण्यश्रद्धा स्यात् । श्रुतवेदान्तानां तु तत्तद्देवतान्तर्यामी सकलकर्माराध्यो निखिलकल्पानुयायी फलदातेत्याश्वासोपपत्तिरिति भावः। न हीति । "न हि निन्दा निन्द्यान्निन्दितुं प्रवृत्ता, अपि तु स्तुत्यं स्तोतुम्" इति न्यायाद्देवतानिरासः कर्मस्तुत्यर्थ इत्यर्थः । अन्वारुह्येति । अनु पश्चादारुह्य देवता नास्तीति तदीयमतमारुह्य तदङ्गीकृत्येति यावत् । किमर्थं तथा वाद इत्यत आह—अनित्यसंयोगेति । अनित्यदेवताया वेदे वाच्यतया संयोगोऽप्रामाण्यनिदानम्, कर्मणि त्वाराध्यतया संयोगोऽनावश्यकतानिदानमिति विवेकः । ननु जैमिनेर्देवतायामपि

वेदप्रामाण्ये कर्मावश्यकतायां च तात्पर्यातिशयात्। तथा च यथा—

"अभीष्टार्थव्ययेनापि जयति क्षेत्रहारिणम्।
लब्धक्षेत्रैर्न दुष्प्रापः स्यादर्थ इति निश्चयात्" ॥ इति ॥

तद्वदिह सिद्धे प्रामाण्ये पुनरभिमतसिद्धिः प्रत्यापत्स्यत इति। कथमन्वारुह्य वादत्वम्; "सम्पत्तेरिति जैमिनिः,"

## रत्नतूलिका

तात्पर्ये कथं तन्निरासेन वेदप्रामाण्यसमर्थनमित्यत आह—तात्पर्यातिशयादिति। यत्समर्थनेनेतरस्यार्थसिद्धिस्तत्र तात्पर्यातिशय इति भावः।

ननु तन्निरासाङ्गीकारेण प्रामाण्यसमर्थने कथं पश्चात्तल्लाभ इत्यतो लोकनिदर्शनेन तल्लाभप्रकारमाह—तथा चेति। प्रत्यापत्स्यत इति। यथा बहुद्रव्यव्ययेन क्षेत्रलाभे तेन पुनर्द्रव्यप्राप्तिस्तथा देवतां परित्यज्य वेदप्रामाण्याङ्गीकारे तेनैव रात्रिसत्रन्यायेन आर्थवादिकदेवतालाभः स्यादित्यर्थः।

सम्पत्तेरितीति। वैश्वानरविद्याङ्गभूताया उपासकैरहरहः-क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसम्पादनाय "उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः" इत्यादिना उपासकशरीरावयवानां गार्हपत्यत्वादिपरिकल्पनम्। तथा हि दर्शयति श्रुतिः प्राणाहुतिं विधाय "अथ य एवं विद्वानग्निहोत्रं जुहोति" इति जैमिनिराचार्यो मन्यत इति "सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति" इति वैश्वानराधिकरणसूत्रार्थः। अनेन ब्रह्मोपासनाभ्युपगमो दर्शितः।

"अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके" इति सूत्रस्यायमर्थः। जीवसंकीर्तनमन्यार्थं जीवातिरिक्तब्रह्मसद्भावप्रति-

"अन्यार्थं तु जैमिनिः," "परं जैमिनिः" "ब्राह्मेण जैमिनिः," इत्यादौ ब्रह्मस्वरूपगुणोपासनफलाभ्युपगमदर्शनात् ।

## रत्नतूलिका

बोधनार्थमिति प्रश्नप्रतिवचनाभ्यामवगम्यते । प्रश्नस्तावत् जीवप्रतिपादनानन्तरं "क्वैष एतद्बालाके पुरुषोऽशयिष्ट" इत्यादिकः सुप्त[1]जीवाश्रयपरमात्मविषयः, प्रतिवचनमपि "अथास्मिन्प्राण एवैकधा भवति" इत्यादिकं परमात्मविषयमेव । सुप्तपुरुषाश्रयतया प्राणशब्दनिर्दिष्टः परमात्मैव । अपि चैवमेके वाजसनेयिनः इदमेव बालाक्यजातशत्रुसंवादगतं प्रश्नप्रतिवचनरूपं वाक्यं परमात्मविषयं स्पष्टमधीयते "क्वैष एतत्" इत्यादि "य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते" इत्येतदन्तमिति । अनेन ब्रह्मस्वरूपाभ्युपगमः ।

"परं जैमिनिर्मुख्यत्वात्" इति सूत्रस्यायमर्थः—परमेव ब्रह्मोपासकान्नयत्यातिवाहिकगणः ; "स एनान्ब्रह्म गमयति" इति ब्रह्मशब्दस्य तत्रैव मुख्यत्वादिति । अनेन फलाभ्युपगमः ।

"ब्राह्मेण जैमिनिरुपन्यासादिभ्यः" इति सूत्रस्यायमर्थः—ब्राह्मेणापहतपाप्मत्वादिनास्य [2]स्वरूपाविर्भावः । अपहतपाप्मत्वादयो दहरवाक्ये ब्रह्मगुणाः श्रुताः । उपन्यासादिभ्यः तेषां ब्रह्मगुणानां प्रत्यगात्मन्यपि "य आत्मा अपहतपाप्मा" इत्यादिनोपन्यासात् । आदिपदात् "जक्षत्क्रीडन् रममाणः" इत्यादिभ्योऽपि सत्यसङ्कल्पत्वावगमादिति । अनेन गुणाभ्युपगमः । तथा चैतेषु सूत्रेषु जैमिनिना ब्रह्मस्वरूपाद्यवगमाद्देवतानिरासोऽन्वारुह्यवाद इति भावः ।

---

[1] जीवात्मकपर-कुं. [2] स्वस्वरूपा-च. कुं.

अथापि स्यात्—"विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात्" इत्याष्टमिकाधिकरणे ऐन्द्रे पुरोडाशे द्रव्यसामान्यादाग्नेयविध्यन्तः प्राप्नोति, न देवतासामान्यात्सान्नाय्यविध्यन्तः, शब्दोद्देश्यमात्ररूपतया "गुणत्वेन देवताश्रुतिः" इति देवताप्राधान्यनिरसनं यागदेशसन्निधानेन हविर्भोक्तृतया देवताप्राधान्याभ्युपगमेन वैयासिकेन विरुद्ध्यत इति, न; तत्र गुणत्वस्याभ्युच्चयमात्रत्वात्, द्रव्यस्यापि यागे गुणत्वात्। सूत्रशेषोक्ता तु "कर्मणस्तदुपाख्यत्वात्" इति मूलयुक्तिर्यद्यपि द्रव्यदैवतं यागस्य रूपमित्युभयोपाख्यं कर्म, तथापि कर्मरूपसमवायिनो द्रव्यस्य हविष्ट्वेन शास्त्रगम्यत्वेऽपि स्वरूपेण

## रत्नतूलिका

देवताप्राधान्यनिरासाङ्गीकाराभ्यां विरोध इत्याशङ्कते—**अथापि स्यादिति।** **विप्रतिपत्तौ** ऐन्द्रपुरोडाशे किमाग्नेयविध्यन्तः, उत सान्नाय्यविध्यन्त इति संशये **हविषा नियम्येत** तत्सामान्यादाग्नेयविध्यन्तः प्राप्नोति, न देवतासामान्यात्सान्नाय्यविध्यन्तः; कुतः, **कर्मणस्तदुपाख्यत्वात्** तन्निरूपणीयत्वादिति सूत्रार्थः। तत्र युक्तिमाह—**द्रव्यस्यापीति।** ननु यथा यागज्ञाने द्रव्यज्ञानमपेक्षितं, एवं देवताज्ञानमपीति निरूपकत्वाविशेषात्तदुपाख्यत्वादित्यपि न मूलयुक्तिरित्याशङ्कते—**यद्यपीति।** यदविलम्बेन प्रतीयते तद्रूपावच्छिन्नतया कर्म शीघ्रं प्रतीयते। अतः कर्मान्तरेऽपि तन्निरूपितसादृश्यमेव झटित्युपस्थितं भवतीति तेनैव विध्यन्तनियम इति परिहरति—**तथापीति।** **कर्मरूपेति।** कर्मस्वरूपेण तदात्म्यसंबन्धवत इत्यर्थः। अनेन द्रव्यस्य देवतापेक्षया प्राबल्ये अन्तरङ्गत्वं हेत्वन्तरं सूचितम्। प्राधान्यं

पुरोडाशादेरविलम्बप्रत्ययतया प्राधान्येन प्रबलतया कर्मणस्त-दुपाख्यत्वमुच्यते। देवता तु स्वरूपेणापि विलम्बितशास्त्र-गम्येत्यप्राधान्येन दौर्बल्यान्न तया विध्यन्तनियम इत्ययमर्थो विवक्षितो जैमिनेः। श्रुतिलिङ्गादौ प्रत्यक्षानुमानादौ च प्रबलदुर्बलभावस्य विलम्बाविलम्बहेतुकत्वान्न देवतानिरासे तात्पर्यम्। "चोदना पुनरारम्भः" इति च क्षणिकस्य कर्मणः कालान्तरभाविफलसिद्धिद्वारमात्रं समर्थ्यते, न तु

## रत्नतूलिका

धर्मातिदेशे पुरस्कार्यत्वम्। प्राबल्यं झटिति धर्मप्रापकत्वम्। अवि-लम्बेति। तस्य प्रत्यक्षयोग्यतया शास्त्रैकसमधिगम्यदेवतापेक्षया अवि-लम्बप्रत्ययत्वमिति भावः। प्रतीतिविलम्बाविलम्बयोः प्राबल्यदौर्बल्यप्रयो-जकत्वं दृष्टान्तेन दर्शयति— श्रुतिलिङ्गादाविति। यथा प्रथमप्रवृत्त-श्रुत्या प्रत्यक्षेण च विनियोगलक्षणस्य [1]वह्न्यादिज्ञानलक्षणस्य च कार्यस्य सिद्धेराकाङ्क्षोच्छेदाल्लिङ्गानुमानयोरप्रवृत्तिरिति दौर्बल्यमेव-मत्रापि प्रथमप्रतीतद्रव्यसामान्येनातिदेशसिद्धेर्न देवतासामान्यमपेक्षित-मिति दौर्बल्यमित्यर्थः। देवतानिरास इति। प्राधान्येन देवतानिरास इत्यर्थः। ननु "चोदना पुनरारम्भः" इत्यधिकरणे जैमिनिना क्षणि-कस्य यागस्य कालान्तरभाविफलजनकत्वमनुपपन्नमित्यपूर्वं द्वारमङ्गी-कृतम्, बादरायणेन तु "फलमतः" इत्यधिकरणे सेवितस्येव राज्ञः कर्माराधितस्येश्वरस्य फलदत्वोक्त्या[2]ऽर्थात्तत्प्रीतिर्द्वारमित्युक्तम्। तथा चार्थविरोध इत्यत आह—चोदना पुनरारम्भ इति चेति। चोदना अपूर्वं पुनरस्ति, यत आरम्भः श्लिष्यते "स्वर्गकामो यजेत" इति।

[1] वाक्यादि—च. [2] अर्थात्तत्प्रतीति—च.

कर्मफलदातेश्वरो वार्यते। तच्च द्वारमपूर्वसंज्ञितमीश्वरप्रसाद एवास्तु। न कश्चिद्विरोधः।

नन्वेवं जैमिनेरपि सर्वसम्प्रतिपत्तौ "धर्मं जैमिनिरत एव", "स्वर्गकामो यजेत" इति श्रुतेः, अपूर्वद्वारा कालान्तरभाविफलजननोपपत्तेश्च धर्म एव फलदातेति जैमिनिमतमनूद्य "पूर्वं तु बादरायणो हेतुव्यपदेशात्" "फलमत उपपत्तेः" इति निर्दिष्टः पूर्वः परमेश्वर एव फलदाता। तस्य धर्माराधितस्य

रत्नतूलिका

इतरथा विधानमनर्थकं स्यात्। भङ्गुरत्वाद्यागस्येति सूत्रार्थः। अपूर्वसंज्ञितमिति। मानान्तरागम्यत्वमपूर्वत्वम्। तच्चेश्वरप्रसादेऽपि वेदातिरिक्तप्रत्यक्षादिमानान्तरागम्येऽप्यविकलमिति भावः।

ननु कर्मण एव फलदातृत्वं जैमिनिमतम्, तन्निराकरणेनेश्वरस्य फलदातृत्वं वैयासिकं मतम्, वेदान्तोदितात्मविद्यायाः कर्मशेषत्वं जैमिनिमतम्, स्वतः पुरुषार्थत्वं बादरायणमतम्, तथा सन्न्यासो नास्तीति जैमिनिमतम्, अस्तीति बादरायणमतम्, ततश्चार्थविरोध इति शङ्कते—नन्वेवमिति। "फलमत उपपत्तेः" इति पूर्वतरसूत्रश्रुतोपपत्तिः "श्रुतत्वाच्च" इति पूर्वसूत्रोपात्तं श्रुतत्वं चास्मिन्सूत्रे अतःशब्दार्थ इत्यभिप्रेत्य सूत्रं व्याचष्टे—स्वर्गकामो यजेतेति। निर्देशकृतं पूर्वत्वं परमेश्वरस्येत्यभिप्रेत्य व्याचष्टे—फलमत उपपत्तेरितीति। "फलमत उपपत्तेः" "श्रुतत्वाच्च" इति सूत्रद्वयोपात्तोपपत्तिश्रुतत्वप्रतिपादनपूर्वकं परमेश्वरे तुशब्दोपात्तं धर्मवैलक्षण्यं वदन् सूत्रं व्याचष्टे—तस्य धर्माराधितस्येत्यादिना। [1]सूत्रोपात्तं विद्यायाः कर्मशेषत्व-

[1] सूत्रोक्त—कुं.

सेवितस्यैव राज्ञः फलदत्वोपपत्तेः, अचेतनस्य धर्मस्य चेतनानधिष्ठितस्य तदनुपपत्तेश्च । "अन्नादो वसुदानः" इत्यादिश्रुतेः,

"लभते च ततः कामान् मयैव विहितान् हितान् ।"

इत्यादिस्मृतेश्च । "एष ह्येव साधुकर्म कारयति" इति हेतुव्यपदेशाच्चेति दूषणम् । तथा "शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः" कर्तुरात्मनः कर्मार्थितया तद्विज्ञानं विषयद्वारा कर्माङ्गं प्रोक्षणादिवत् ।

"ब्रह्मविदाप्नोति परम्" इति फलश्रुतिरर्थवादः, यथान्येषु प्रयाजादिषु "वर्म वा एतद्यज्ञस्य क्रियते" इत्यादिरिति तन्मतमनूद्य "अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्" कर्तृव्यतिरिक्तस्यापहतपाप्मत्वादिगुणकस्य परमात्मनो वेद्यत्वेनोप-

रत्नतूलिका

मुपपादयति—**कर्तुरात्मन इति । प्रोक्षणादिवदिति** । यथा प्रोक्षणावघातादेः कर्मभूतव्रीह्यादिद्वारा क्रत्वङ्गत्वं तथाऽऽत्मज्ञानस्यापीत्यर्थः ।

ननु पृथक्फलश्रवणान्न कर्माङ्गत्वमित्याशङ्कानिवृत्तये "पुरुषार्थवादः" इति सूत्रांशं व्याचष्टे—**ब्रह्मविदाप्नोतीति** । यथा "समिधो यजति" इत्यादिना विहितानां प्रयाजादीनां फलाकाङ्क्षा उपकारमपेक्षमाणाभ्यां दर्शपूर्णमासाभ्यामेकवाक्यताकल्पनेन निवर्त्यते, न तु पृथक्फलं कल्प्यते ; गौरवादिति तत्र फलश्रुतिरर्थवादमात्रम् , तथेहापि विद्याया अनारभ्याधीताया अपि अव्यभिचरितक्रतुसंबन्धिजुहूद्वारा पर्णताया इवाव्यभिचरितक्रतुसंबन्धिदेहाद्यतिरिक्तात्मद्वारा क्रत्वङ्गत्वे तत्र फलश्रुतिरर्थवादमात्रमित्यर्थः । सूत्रोक्ते आधिक्ये अवधिं निर्दिशति—**कर्तृव्यतिरिक्तस्येति** । सूत्रे तद्दर्शनादित्यस्य प्रदेशं निर्दिशति—

देशात् "एष आत्मा अपहतपाप्मा इत्यादिषु तद्दर्शनाद्विद्या पुरुषार्थसाधनमिति दूषणम् । तथा "परामर्शं जैमिनिरचोदना चापवदति हि" "त्रयो धर्मस्कन्धाः" इत्यादौ ऊर्ध्वरेतसामाश्रमस्य परामर्शमात्रं, न त्वनुष्ठेयत्वं, चोदनाभावात्, "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्याद्यपवादाच्चेत्यनूद्य "अनुष्ठेयं बादरायणः साम्यश्रुतेः" अनुष्ठेयमाश्रमान्तरं गार्हस्थ्यवत् तेन सह परामर्शसाम्यादित्यादिदूषणम् । इत्येवंजातीयकमनुपपन्नमिति चेत्, उच्यते—विपक्षनिरासार्थत्वेन सर्वोऽयमन्वारुह्यवादो जैमिनेरुपन्यस्य निरस्यते । कथमन्वारुह्यवादत्वम्, ब्रह्मतदुपासनतत्फलाभ्युपगमस्यात्रैव दर्शितत्वात् । "तद्भूतस्य तु नातद्भावो

## रत्नतूलिका

एष आत्मेति । सूत्रे परामर्शमित्यमुमंशं प्रदेशकर्मणोः समर्पणेन व्याचष्टे—त्रयो धर्मस्कन्धा इत्यादाविति । "ब्रह्मसंस्थोऽमृतत्वमेति" इत्यनेनेति भावः । जैमिनिमतव्यावर्त्यं दर्शयति—न त्विति । परामर्शसाम्यादिति । अग्रयप्रायपाठेनाग्रयत्ववदनुष्ठेयगार्हस्थ्यादिना प्रायपाठेनानुष्ठेयत्वमिति भावः । शङ्कामुपसंहरति—इत्येवंजातीयकमिति । विपक्षनिरासेति । कर्मानावश्यकतानिरासार्थत्वेनेत्यर्थः । ईश्वरस्य फलदत्वे विद्यायाः स्वतः पुरुषार्थत्वे सन्न्यासाभ्युपमे च कर्मानावश्यकता स्यादिति, तन्निरासाय जैमिनेरन्वारुह्यवाद इति भावः । ब्रह्मतदुपासनेति । "सम्पत्तेरिति जैमिनिः", "परं जैमिनिः", "ब्राह्मेण जैमिनिः" इत्यादावित्यर्थः । अत्रैवेति । वैयासिकशास्त्र एवेत्यर्थः । नैष्ठिकाद्याश्रमान्तरनिरासो जैमिनेरभिप्रेत इत्यत्रापि विरोधमुद्घाटयति—तद्भूतस्य त्विति । तद्भूतस्य नैष्ठिकादिभूतस्य अतद्भावोऽतथाभावो न भवति, कुतः, तद्रूपाभावेभ्यः नैष्ठिकादिधर्माभावेभ्यः । तदभावाश्च "ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्" इति नैष्ठिकस्य, "अरण्यमियात्ततो न पुनरेयात्" इति वैखानसस्य,

जैमिनेरपि" इति नैष्ठिकाद्याश्रमभ्रंशस्य जैमिनेरनभिमतत्वोपन्यासेनाश्रमान्तरानुष्ठानाभ्युपगमसूचनाच्च । अन्यथा कस्य भ्रंशोऽनभिमतः स्यात् ।

अपि च ब्रह्मण आश्रमान्तरस्य वा निरसनीयत्व तस्य द्वादशलक्षण्यामसूत्रयिष्यत, तत्रासूत्रितम् । अपि तु धर्मसिद्धौ यतमानस्याभ्युच्चितमजानन्तस्तदेव तत्त्वं मा भौत्सुरित्यौडुलोम्यादिमतवदुपन्यस्य निरस्यत इत्यदोषः ।

## रत्नतूलिका

"सन्न्यस्याग्निं न पुनरावर्तयेत्" इति परिव्राजकस्य च तत्र तत्र नियमादिति परमते सूत्रार्थः ।

जैमिनिमतत्वेन तस्य तस्योपन्यस्यनिरासोऽन्यार्थ इति न तावता विरोधः शङ्कनीय इति सर्वसाधारण्येनाह—अपि चेति । तस्येति । निरसनस्येत्यर्थः । प्रतिपाद्यत्वं षष्ठ्यर्थ इति भावः । तदिति पाठः सुगमः । अथ वा तस्येति पूर्वेण संबध्यते, जैमिनेरित्यर्थः । तथा चासूत्रितत्वा[1]न्न तन्निरसने तात्पर्यमिति भावः । [2]तर्हि तन्मतत्वेनोपन्यस्य निरासो व्यर्थ इत्यत आह—तत्रासूत्रितमिति । ब्रह्मसन्न्यासनिरसनामिति शेषः । अभ्युच्चितमिति । ब्रह्मसन्न्यासौ द्वादशलक्षण्यामसूत्रयित्वा देवतानिरासपूर्वकं कर्म स्वप्रधानं समर्थयतो जैमिनेस्तन्निरासे अभिप्रायोन्नयनेऽपि तस्याभ्युच्चितत्वमेव, न तात्पर्यविषयत्वम्, धर्मसिद्धौ तन्निरसनेन प्रयोजनाभावात् । तदेतदजानन्तो मन्दाः ब्रह्मनिरसनं सन्न्यासनिरसनं च तात्पर्यविषयं जानीयुरिति तदुपन्यस्य निरस्यत इति भावः । अनुबन्धकृतमात्मनेपदमनित्यम्, चक्षिङो ङित्करणाज्ज्ञापकादिति मा भौत्सुरिति बुद्ध्यतेर्लुङि परस्मैपदप्रयोगः । औडुलोम्यादिमतवदिति । "उत्क्रमिष्यत एवं भावादित्यौडुलोमिः" इत्यादावन्यत्र[3] सूत्रितमप्यौडुलोम्यादिमतं यथोपन्यस्य निरस्यते तथात्रापीति भावः ।

[1] नातन्निरसने. [2] तर्हि निरसनं तन्मत—कुं. [3] त्रासूत्रित—कुं.

"भावं जैमिनिः" इति मुक्तस्य देहेन्द्रियादिभावोपगमो जैमिनेर्बादरायणस्यापीति नात्र विरोधः। तस्मात् "अथातो धर्मजिज्ञासा" इत्यादि "अनावृत्तिः शब्दात्" इत्येवमन्तमेकं शास्त्रम्। तच्च व्याख्येयपाठक्रमदिना सङ्गतिविशेषेण च विशिष्टक्रममिति धर्मजिज्ञासानन्तरमेव ब्रह्मजिज्ञासारब्धव्येति ॥

## रत्नतूलिका

ननु "भावं जैमिनिः" इति मुक्तस्य देहादिभावो जैमिनिनाङ्गीकृतः, "द्वादशाहवदुभयविधं बादरायणोऽतः" इति बादरायणेन देहादितदभावाविति विरोध इत्यत आह—**भावं जैमिनिरिति**। भावांशे न विरोधः, अभावांशोऽपि बादरायणस्येव जैमिने[1]रप्यविरुद्ध इति भावः। [2]साधकसत्त्वाद्विरोधादिबाधकाभावाच्चैकशास्त्र्यमित्युपसंहरति—**तस्मादिति**। **व्याख्येयपाठक्रमादिनेति**। आदिपदेन चेतनानां त्रिवर्गे प्रथमप्रावण्यसंभवरूपोऽर्थस्वभावः, औपनिषदेष्वङ्गाङ्गिभावप्रतिपादकवाक्येषु यज्ञादिकर्मणः पदार्थत्वेन संबन्धः, कासुचिद्विद्यासु यज्ञतदुपकरणादीनां दृष्टिविशेषणत्वोक्त्या कर्मब्रह्मविद्ययोर्दृष्टान्तदार्ष्टान्तिकभावाद्विद्याकर्मणोरुत्पाद्योत्पादकभावात्तच्छेषभूतविचारयोस्तत्क्रमभावोपपत्तिः, उत्तरभागस्य पूर्वभागोक्तन्यायसापेक्षत्वं, चेत्येवमादिपौर्वापर्यनियामकसङ्गतिविशेषाणां ग्रहणम्। एवं पाठक्रमादिरूपसङ्गतिविशेषेण क्रमवदित्यर्थः।

---

[1] प्यदेहत्वनिरासाभावादविरुद्ध इति भावः—च. कुं.        [2] बाधकसत्त्वात्—च.

धर्मब्रह्मजिज्ञासयोर्भिन्नशास्त्रत्वम्

**अत्राभिधीयते—यत्तावत्साधकमुक्तं वेदरूपैकग्रन्थव्याख्यानत्वादेकं शास्त्रं धर्मब्रह्मजिज्ञासे इति। तत्र न तावदेकप्रतिपाद्यत्वं साध्यम्; बाधात्; "अथातो धर्मजिज्ञासा," "अथातो ब्रह्मजिज्ञासा" इति व्याख्येयवेदप्रतिपाद्यार्थभेदोपक्षेपेण प्रतिज्ञाभेदात्। यत्तु शास्त्रयोरेकदेशालम्बनत्वमुक्तं प्राचीनैः, कार्यनिष्ठ एव वेदभागो विचार्यतया प्रकान्तो विचारितश्च न वस्तुतत्त्वनिष्ठः, वस्तुतत्त्वनिष्ठं वेदभागं विचारयितुमिदमारभ्यत इत्यादि, न तदितरेतरत्रेतरेतरस्याविचार्यत्वाभिप्रायम्; अक्रियार्थाविशेषप्रवृत्तार्थवादनयाविरोधात्, सर्वापेक्षा-**

रत्नतूलिका

धर्मब्रह्मविचारयोरैक्यं किं प्रतिपाद्यैक्यकृतं विवक्षितम्, किं वा प्रयोजनैक्यकृतम्, अथवानुष्ठातृपुरुषैक्यकृतमिति विकल्प्याद्यं दूषयति—**तत्र न तावदिति। व्याख्येयवेदेति।** वेदव्याख्यानाय प्रवृत्तो जैमिनिः कृत्स्नस्य वेदस्य धर्म एव प्रतिपाद्य इत्यभिप्रेत्य "अथातो धर्मजिज्ञासा" इति प्रतिजानीते, तथा बादरायणोऽपि ब्रह्म प्रतिपाद्यमभिप्रेत्य "ब्रह्मजिज्ञासा" इति, इति न तयोः प्रतिपाद्यैक्यमित्यर्थः। तन्त्रद्वयेऽपि कृत्स्नस्य वेदस्य विचार्यत्वमुक्तं टीकावचनविरुद्धमित्याशङ्क्य तत्तात्पर्यं दर्शयति—**यत्त्विति। इतरेतरत्रेति।** पूर्वतन्त्रे उत्तरभागस्य उत्तरतन्त्रे च पूर्वभागस्य विचार्यत्वाभावाभिप्रायं न भवतीत्यर्थः। **अक्रियार्थाविशेषेति।** अर्थवादाधिकरणे अक्रियार्थानामप्रामाण्यमाशङ्क्य विध्येकवाक्यतया प्रामाण्यं समर्थितम्। तच्चाक्रियार्थत्वं वेदान्तभागस्याप्यविशिष्टमिति पूर्वतन्त्रे तस्याविचार्यत्वे तद्विरोधः स्यादित्यर्थः। **सर्वापेक्षेति।** "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति सूत्रे "तमेतं

सूत्रविरोधाच्च । प्रतिपाद्यार्थप्रतिपादनप्रवृत्तिमुखभेदेनोभयत्र सकलवेदविचारेऽपि भागशब्दोपादानाविरोधाच्च ।

यदपि वेदस्यार्थविवक्षामुक्त्वा धर्मग्रहणं कुर्वतो जैमिने-रभिप्रायवर्णनं धर्मातिरिक्तोऽपि सिद्धरूपो वेदार्थेऽस्ति,

रत्नतूलिका

वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इत्यादिश्रुतेर्विद्याया उत्पत्तौ सर्वेषामाश्रमकर्मणामपेक्षा, न तूत्पन्नाया विद्यायाः फलसाधनत्वे ; तत्र तेषामयोग्यत्वात्, यथा अश्वो योग्यतया रथचर्यायामेव नियुज्यते, न लाङ्गलाकर्षण इत्यर्थके यज्ञादेर्विविदिषायां विनियोगः कृतः । अतस्तेषामप्युत्तरतन्त्रे विचार्यता वाच्या । अन्यथा विरोधः स्यादित्यर्थः । तर्हि टीकायां विचारद्वयस्य तत्तद्भागनिष्ठत्ववचनस्य का गतिरित्यत आह—**प्रतिपाद्यार्थेति** । जैमिनेः प्रतिपाद्योऽर्थो धर्मः, बादरायणस्य तु ब्रह्म, तत्प्रतिपादनाय प्रवृत्तौ जैमिनेः पूर्वभागो मुखम्, बादरायणस्य तूत्तरभाग इति मुखभेद इत्यर्थः । तथा च पूर्वमीमांसा कर्मकाण्डं मुखं कृत्वा उपनिषदमप्यर्थवादन्यायेन विधिशेषतया तत्रैवान्तर्भावयन्ती कृत्स्नवेदविषया प्रवृत्ता, उत्तरमीमांसापि उपनिषदं मुखं कृत्वा कर्मणामपि विविदिषाद्वारा विद्यायामुपयोगप्रतिपादनमुखेन कर्मकाण्डमपि तत्रान्तर्भावयन्ती कृत्स्नवेदविषया प्रवृत्तेति तत्तद्भागप्राधान्येन प्रवृत्तत्वात्तत्तन्निष्ठतोक्तिरविरुद्धेति भावः ।

स्थलान्तरे टीकाविरोधं परिहर्तुमनुवदति—**यदपीति** । **उक्त्वा धर्मग्रहणमिति** । जिज्ञासासूत्रे अथ वेदाध्ययनानन्तरं अतः वेदस्य विवक्षितार्थत्वादिति कर्मब्रह्मकाण्डसाधारण्येन वेदस्यार्थविवक्षामुक्त्वा धर्मजिज्ञासेत्येकांशस्यार्थे धर्मे परिगृहीते इतरांशस्याप्यर्थोऽभिमतोऽस्तीत्युन्नीयत इत्यर्थः । तर्हि किमिति तेन तद्विचारो न कृत इत्यत

स च पर्युदस्तो जैमिनिना, न्यायान्तरविषयत्वादिति गम्यत इति, तदपि परप्रत्ययनेयमत्युपच्छन्दनमात्रम्, अन्यथा समन्वयाधिकरणविरोधात्। जैमिनेरपि सिद्धरूपवेदार्थाभ्युपगमे [1]तन्मते "आम्नायस्य क्रियार्थत्वात्" इति वेदस्य [2]कर्मार्थतया ब्रह्मप्रमाणत्वाभावेन तत्पूर्वपक्षानुपपत्तेः।

ननु "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति," "सर्वे वेदा यत्पदमामनन्ति,"

"विष्णुनामा स वेदेषु वेदान्तेषु च गीयते"

इत्यादौ कर्मणामन्यार्थत्वं ब्रह्मणः स्वप्राधान्येन सर्ववेदप्रतिपाद्यत्वं चावगम्यत इति चेत्, सत्यमवगम्यते बादरायणस्य, न तु जैमिनेः। अक्रियार्थानामन्तरेण विधिशेषत्वं प्रामाण्यानभ्युपगमात्। "एतेन कर्त्रादिप्रतिपादनद्वारोपनिषदां नैराकाङ्क्ष्यं व्याख्यातम्" इति तन्त्रवार्तिककृता अर्थवादन्यायातिदेशात्।

रत्नतूलिका

आह—स चेति। परेति। परप्रत्ययनेयमतेः पुरुषस्योपच्छन्दनमनुसरणं तुष्यत्विति न्यायेन तद्वञ्चनमिति यावत्। ब्रह्मप्रमाणत्वाभावेनेति। प्रमाणत्वं नास्तीति यः पूर्वपक्षस्तस्यानुपपत्तेरित्यर्थः।

ननु तमेतमित्यादिवाक्यैः कर्मणां ब्रह्मार्थत्वप्रतीतेर्वेदस्य ब्रह्मणि महातात्पर्यमुन्नीयत इत्यतः प्रतिपाद्यभेदाभावान्न बाध इत्याशङ्कते—नन्विति। कुत इत्यत आह—अक्रियार्थानामिति। तथा च तेषां देवतादिस्तुतिद्वारा विधिशेषतयैव प्रामाण्यं न स्वातन्त्र्येणेति भावः। कथमिदमवगम्यत इत्याकाङ्क्षायां तदीयाभियुक्तवचनादित्यह—एतेनेति अर्थवादानां विधिशेषत्वेन प्रामाण्यप्रतिपादनेनेत्यर्थः। उपनिषदां विधिशेषत्वे द्वारमाह—कर्त्रादीति। नैराकाङ्क्ष्यं प्रामाण्यम्।

---

[1] तन्मतेन—ग. [2] कार्यार्थतया—ङ.

एतेन प्रतिज्ञाभेदो भागद्वयासाधारणार्थविषय इति प्रत्युक्तम्। साधारणार्थप्रतिज्ञाभावे तदासिद्धेश्च। प्रतिज्ञाभेदस्य व्यवस्थि[1]तैकदेशार्थविषयत्वाज्ञाने [2] तादर्थिकत्वानुपपत्तेश्च। साधर्म्यवैधर्म्यसमोद्देशे च युक्तं तदनुगतप्रतिधर्मसमोद्देश आक्षिप्यत इति। यदि हि "साधर्म्यवैधर्म्योत्कर्षापकर्ष" इत्यादिना जातिभेदा[3]नुद्दिश्य "साधर्म्यवैधर्म्याभ्यां साध्योपसंहारे तद्विपर्य-

रत्नतूलिका

**एतेन प्रतिज्ञेति।** समन्वयाधिकरणपूर्वपक्षानुपपत्तिप्रतिपादनेनेत्यर्थः। साधारणार्थप्रतिज्ञा किमर्थसिद्धा, किं वा कण्ठतः कृता। द्वितीयेऽपि किं ब्रह्मविषया सा, अथवा धर्मविषयेति विकल्प्याद्यं पक्षं दूषयति—**प्रतिज्ञाभेदस्येति।** तथा चानयोर्व्यवस्थितैकदेशार्थविषयत्वे ज्ञाते साधारणप्रतिज्ञासिद्धिः, तस्यां च सिद्धायां तयोर्विषयव्यवस्थासिद्धिरित्यन्योन्याश्रय इति भावः। प्रकृते वैषम्यं वक्तुं दृष्टान्ते परोक्तमङ्गीकरोति—**साधर्म्यवैधर्म्येति।** उपपादयति—**यदि हीत्यादिना।** **उत्कर्षापकर्षेत्यादि**नेत्यादिशब्देन "वर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः" इति जातीनां विभागोद्देशसूत्रशेषो गृह्यते। अत्र द्वन्द्वात्परं श्रूयमाणस्य समशब्दस्य सर्वैः साधर्म्यादिभिः संबन्धः। **जातिभेदान्** जातिविशेषान्। साधर्म्यवैधर्म्यसमोद्देशे प्रतिधर्मसमोद्देश आक्षिप्यत इत्येतत्स्पष्टयितुं तयोर्लक्षणसूत्रमाह—**साधर्म्यवैधर्म्याभ्यामिति।** सूत्रे तदिति साध्यपरामर्शः, उपपत्तेरिति तादर्थ्ये षष्ठी, साधर्म्यवैधर्म्याभ्यामित्यावर्तनीयम्, "साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः" इति सामान्यलक्षणसूत्रात् प्रत्यवस्थानपदमनुवर्तनीयम्।

---

[1] तैकार्थ—ख.  [2] तदार्थिक—ख.  [3] नुपदिश्य—ङ.

योपपत्तेः साधर्म्यवैधर्म्यसमौ" इति लक्षितौ प्रतिधर्मावान्तरभेदौ न स्यातां, तर्हि शब्दोऽनित्यः कृतकत्वात् घटवत्, व्यतिरेकेण व्योमवदिति वा साध्योपसंहारे कृते घटवैधर्म्येणाऽऽकाशसाधर्म्येण वामूर्तत्वेन नित्यः स किं न स्यादिति प्रतिवादिनः साध्यविपर्ययार्थं युक्तव्याप्त्याद्यङ्गमनुपेत्य प्रत्यवस्थानमिव तत्रैव प्रत्यक्षादिना तथा प्रत्यवस्थानं जातिर्न स्यात्, तच्चायुक्तम्; "जातिर्नाम स्थापनाहेतौ प्रयुक्ते प्रतिषेधासमर्थो हेतुः," "असदुत्तरं जातिः" इत्याद्यभियुक्तोक्तसामान्यलक्षणकोडी-

रत्नतूलिका

तदयमर्थः—साधर्म्येण वैधर्म्येण द्वाभ्यां वा साध्योपसंहारे वादिना कृते, साध्यविपर्ययसिद्ध्यर्थमनङ्गीकृतयुक्ताङ्गेन [1]साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः। तथोपसंहारे तथाविधेन वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसम इति। शब्दोऽनित्य इत्यादि मूलोक्तमेवोदाहरणम्।

"अनभ्युपेतयुक्ताङ्गप्रमाणात्प्रतिरोधतः।
प्रत्यवस्थानमाचख्युः प्रतिधर्मसमं बुधाः॥"

इत्यभियुक्तोक्तप्रतिधर्मसमजातिसामान्यलक्षणस्य प्रत्यक्षादाव[2]प्यसङ्गतिं दर्शयितुं तद्दर्शयति—युक्तव्याप्त्याद्यङ्गमिति। युक्तं यद्व्याप्त्याद्यङ्गं तदनुपेत्य तत्संभवाभिमानमपि त्यक्त्वेत्यर्थः। तेन सदुत्तरप्रकरणसमव्यवच्छेदः। तत्र युक्तव्याप्त्याद्यङ्गाभावेऽपि तत्सत्त्वाभिमानादिति भावः। प्रत्यवस्थानमिवेति व्यतिरेकदृष्टान्तः। प्रत्यक्षादिनेति। यथा अनित्यः शब्दः कृतकत्वादिति प्रयोगे स एवायं गकार इति प्रत्यभिज्ञानप्रत्यक्षेण नित्यः किं न स्यात्प्रमाणत्वाविशेषादिति प्रत्यवस्थानमित्यर्थः। आदिपदेन शब्दोपमानयोः परिग्रहः। जातित्वानङ्गीकारे दूषणमाह—तच्चायुक्तमिति। अभियुक्तोक्तेति।

[1] साध्यधर्मेण–कुं. [2] प्यनुगतिं–च. कुं.

कारात्। जात्यन्तरानन्तर्भावाच्च प्रतिधर्मसमायामनभ्युपेतयुक्ताङ्ग-साधनेन प्रत्यवस्थानमिति लक्षितायां तत्सङ्गृह्येत।

सूत्रे च विभागोपादानस्य सर्वजातीनामवान्तरभेदसद्भाव-प्रदर्शनफलत्वात्। न चैवमिह साधारणप्रतिज्ञाक्षेपकारणमस्ति, प्रस्थानभेदेनापि प्रतिज्ञाभेदोपपत्तेः। न च ब्रह्मजिज्ञासेति साधारणप्रतिज्ञा जैमिनेरिष्टा; कृत्स्नाम्नायस्यापि धर्मैकार्थ्योपग-

रत्नतूलिका

स्थापनाहेतोरित्यादि वार्तिककारोक्तलक्षणम्। असदुत्तरमिति टीका-कारोक्तम्। आदिपदेन "[1]स्वव्याघातकमुत्तरं जातिः" इत्याचार्योक्त-लक्षणसंग्रहः। ततश्च तस्याजातित्वे तत्र लक्षणानामतिव्याप्तिरिति भावः। तत्सङ्गृह्येतेति। तथा च प्रत्यक्षेण प्रत्यवस्थानस्य जात्यन्त-र्भावान्यथानुपपत्त्या प्रतिधर्मसमोद्देश आक्षिप्यते, न तु तयोरवान्तर-भेदत्वज्ञानेनेति न तत्रान्योन्याश्रय इति भावः।

किमर्थं तर्हि मुख्यमेव प्रतिधर्मसममुपेक्ष्य सूत्रकारस्यावान्तरभेदो-पादानमित्यत आह—सूत्रे चेति। सर्वास्वपि जातिषु बहवोऽवान्तर-भेदाः सन्ति, यथा तावत्प्रतिधर्मसमायां साधर्म्यवैधर्म्यसमौ। ते च स्वयमेवोहनीया इति प्रदर्शनार्थमित्यर्थः। दार्ष्टान्तिके तद्वैषम्यमुपपाद-यति—न चैवमिहेति। एवं यथा प्रतिधर्मसमोद्देशाक्षेपे प्रत्यक्षेण प्रत्यवस्थानसङ्ग्रहः। नन्वत्रापि तच्छ्लागासाधारणार्थप्रतिज्ञात्वं कारण-मस्तीत्याशङ्क्य तदेवासिद्धमित्याह—प्रस्थानभेदेनापीति। द्वितीये प्रथमपक्षं निरस्यति—न च ब्रह्मजिज्ञासेतीति। किमियं बादरायण-कृता कृत्स्नाम्नायार्थप्रतिज्ञा जैमिनेरपीष्टा, उत तन्मात्रस्येति विकल्प्याद्यं दूषयति—[2] न च जैमिनेरिति। तत्र हेतुः—कृत्स्नाम्नायस्यापीति।

[1] स्वव्याघातकृदुत्तरं—क. [2] एवं प्रतीकग्रहणं मूले न च जैमिनेरित्यन्वयमभिप्रेत्य.

मात्। तथा च शबरस्वामी—"दृष्टो हि तस्यार्थः कर्मावबोधनं नाम" इति। न च बादरायणस्य तदैकशास्त्र्यमुपगन्तुं युक्तम्, अतदर्थतया क्लृप्तमपि योग्यमपेक्षितं तादर्थ्यमर्हति, ग्रामे कल्प्ये पूर्वं तटागवदिति न्यायादिति वाच्यम्; विरोधात्। जैमिनीयधर्मविचारे प्रवृत्तस्योपनिषदामपि कर्मैकपरत्वावबोधनेन तत्रैव निरूढाभिनिवेशस्य ब्रह्मविचाराप्रवृत्तेः, वरघाताय कन्योद्वहनन्यायापातात्। एतेनात्रैव सङ्गतोऽपि धर्मविचारः पृथक् क्रियते बाहुल्यादिति प्रत्युक्तम्; [1]जैमिनीयविचारस्य विरोधेनानपेक्ष्यत्वात्।

## रत्नतूलिका

**तस्य वेदस्य अर्थः** प्रयोजनं **कर्मावबोधन**मिति भाष्यार्थः। द्वितीयं दूषयितुमनुवदति—**न च बादरायणस्ये**ति। ननु जैमिनिना पूर्वतन्त्रस्य ब्रह्मैदम्पर्येणाकृतत्वात् कथं [2]बादरायणस्य वा तदैकशास्त्र्याङ्गीकार इत्यतो लोकनिदर्शनेनोपपादयति—**अतदर्थतये**ति। अतदर्थतयापि पूर्वं क्लृप्तस्य तटागस्य योग्यत्वादपेक्षितत्वाच्च यथा कल्प्यग्रामान्तर्भावस्तथा अतदर्थस्यापि पूर्वतन्त्रस्य योग्यत्वादाकाङ्क्षितत्वाच्चोत्तरतन्त्रैकवाक्यत्वमित्यर्थः। **उपनिषदामपी**ति। तासामर्थवादनयेनेयत्वप्रतिपादनादिति भावः। तथा च ग्रामाविरुद्धस्य तटागस्य तदन्तर्भावेऽपि स्वप्रवृत्तिप्रतिबन्धकतया विरुद्धस्य पूर्वतन्त्रस्य न तदेकवाक्यत्वमिति दृष्टान्तो विषम इति भावः। **एतेने**ति। विरोधोपपादनेनेत्यर्थः। साधनकोटिनिवेशात्कर्मणां प्रकृते [3]विचारसङ्गतिमङ्गीकृत्यापि विरोधान्न जैमिनीयविचारस्यैकवाक्यतेति दूषयति—**जैमिनीयविचारस्ये**ति।

---

[1] जैमिनीयस्य वि—ङ. [2] बादरायणतन्त्रस्य—कुं. [3] तद्विचार—च.

" उपजीव्योऽपि विटपी विरोधी वास्तुकर्मणि ।
अनपेक्ष्यो यथा तद्वदुद्देश्यपरिपन्थि यत् " ॥

इति न्यायात् ।

न चेह सङ्गतिरपि धर्मविचारस्य ? प्राचीनकर्मभिरेव विशुद्धसत्त्वस्य प्रव्रजितस्य ब्रह्मविचारप्रवृत्तस्य तद्विचारप्रयोजनाभावात् । न च " सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् " इति तार्तीयन्यायस्य विद्यामनुतिष्ठता कर्माणि शमादिवदनुष्ठेयानीति विवक्षितोऽर्थः, येन तद्विचार इह समगंस्यत । अग्रे विद्याकर्म-

## रत्नतूलिका

तत्रानुरूपन्यायमाह—**उपजीव्योऽपीति** । यथा फलादिना सर्वोपजीव्योऽपि वृक्षो वास्तुकर्मणि प्रतिकूलो न ग्रामेऽन्तर्भवति, तथा जैमिनीयविचारः कृत्स्नस्याम्नायस्य धर्मैदम्पर्याभिनिवेशसम्पादनेन ब्रह्मविचारप्रवृत्तिप्रतिबन्धकतया विरुद्धो न तदैकशास्त्र्यमर्हतीत्यर्थः ।

सङ्गतिं परित्यजति—**न चेह सङ्गतिरपीति** । **प्राचीनकर्मभिरिति** । तथा च यस्मिन्कस्मिंश्चिज्जन्मनि विचार्य धर्ममनुष्ठितैः कर्मभिः सम्पादितया चित्तशुद्ध्या इह जन्मनि विविदिषोत्पादनेन ब्रह्मविचारप्रवृत्त्युपपत्तेर्नेदानीं तद्विचारः प्रयोजनवानित्यर्थः । इदानीं तदनुष्ठानायोग्यतामपि दर्शयति—**प्रव्रजितस्येति** । सन्न्यासस्य श्रवणाङ्गत्वादिति भावः । ननु सर्वापेक्षाधिकरणे कर्मसापेक्षैव विद्या फलसाधनमिति प्रतिपादनात् प्रव्रजितस्यापि तदाश्रमविहितकर्मानुष्ठानोपपत्तेस्तज्ज्ञानाय धर्मविचार इह सङ्गत इत्याशङ्क्य निषेधति—**न च सर्वापेक्षेति** । ननु कर्मणां शमादिवत्समुच्चित्यानुष्ठेयत्वाभावे इह तदपेक्षाकथनं व्यर्थं स्यादित्याशङ्क्य ब्रह्मणः सर्वशास्त्रप्रमाणकत्वोपपादनाय कर्मकाण्डस्यापि तत्र समन्वयं वक्तुं तदित्यभिप्रेत्य शास्त्रयोनित्वाधिकरणे

समुच्चयस्य निरसिष्यमाणत्वात्। "शास्त्रयोनित्वात्" इत्यविशेषादशेषशास्त्रप्रमाणकत्वे ब्रह्मणो निरूपिते, सर्वस्य शास्त्रस्य क्रियानिष्ठत्वन्यायेन तदाक्षिप्य सिद्धेऽपि ब्रह्मणि प्रामाण्यमात्रमुपपादितं समन्वयाधिकरणे न कृत्स्नस्येति कर्मणां[1] तादर्थ्योपादानेन क्रियाभागस्यापि ब्रह्मपरत्वप्रतिपादनाभिप्रायत्वोपपत्तेश्च। किं तु तत्रैव सङ्गतावपीहाभिधीयते कर्मणां साधनांशनिवेशादिति। यत्तु "अथातो धर्मजिज्ञासा" इत्येवालौकिकश्रेयस्साधनतारूपेण साधारणविचारप्रतिज्ञेति, तन्न; जैमिनेः प्रतिज्ञातब्रह्मविचाराकरणायोगात्। न च तस्य विघ्नो विस्मरणं

रत्नतूलिका

समन्वयाधिकरणे च स्थितमर्थं दर्शयति—**शास्त्रयोनित्वादिति**। शास्त्रं योनिः प्रमाणमस्येति शास्त्रप्रमाणकत्वमित्यर्थः। निरूपित इत्यन्तेन ग्रन्थेन प्रथमाधिकरणार्थप्रदर्शनम्, सर्वस्येत्यादि समन्वयाधिकरणार्थप्रदर्शनम्। **न कृत्स्नस्येतीति**। आहत्य सिद्धब्रह्मप्रतिपादकवेदान्तभागस्य तत्प्रमाणत्वं ज्ञातं न कर्मकाण्डस्य, तत्प्रकाराज्ञानादिति भावः। ननु तर्हि समन्वयाध्याय एव सङ्गतिः स्यान्नात्रेत्यत आह—**किं त्विति**। समन्वयांशेन तत्र सङ्गतावपि विविदिषाद्वारा विद्योत्पत्तिसाधनकर्मविषयत्वेनात्रापि सङ्गतमिदं सूत्रमित्यर्थः। द्वितीये द्वितीयमाशङ्कते—**यत्त्विति**। धर्मब्रह्मसाधारण्यसिद्धये उभयानुगतरूपं दर्शयति—**अलौकिकेति**। जैमिनेः प्रतिज्ञातब्रह्मविचाराकरणे को हेतुः; किं विघ्नः विस्मरणं वा, अथ वा समानन्यायत्वप्रतिसन्धानं, न्यायभेदेऽपि वान्येन करिष्यमाणत्वप्रतिसन्धानमिति विकल्प्य प्रथमद्वितीयौ दूषयति—**न च तस्येति**। सङ्कर्षो नाम जैमिनिकर्तृको ग्रन्थविशेषः।

[1] तादर्थ्योपपादनेन—ग. ङ.

वा ; द्वादशलक्षणीलक्षितन्यायविषयमवशेषितं सङ्क्षेपे विचारयतो महर्षेस्तदयोगात् । न च तुल्यन्यायतया[1] तदकरणम् ; बादरायणस्यापि तदनारम्भप्रसङ्गात् कृतकरणानर्थक्यात् । न चान्येन करिष्यत इत्युपेक्षा युक्ता ।

अपि च न धर्मशब्दः सिद्धसाध्यसाधारणालौकिकालौकिकश्रेयस्साधनतैकशक्तिकः ; "धर्मं जैमिनिरत एव" इति जैमिनिमतेन ब्रह्मप्रतिद्वन्द्वितया धर्मशब्दप्रयोगात् । आपस्तम्बस्य च "यत्त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मः" इति क्रियायामेवालौकिकश्रेयस्साधने धर्मशब्दप्रयोगात् । द्रव्यक्रियागुणादीनामपि क्रियारूपाविष्टानामेव धर्मशब्दाभिधेयत्वात् ।

रत्नतूलिका

तृतीयं दूषयति—न च तुल्यन्यायतयेति । कृतकरणानर्थक्यादिति । अन्यथा प्रत्यक्षादिनिरूपणमपि क्रियेतेति भावः । चतुर्थं निरस्यति—न चान्येनेति । करिष्यमाणस्य संभावितबहुविघ्नत्वेन स्वस्य प्रतिज्ञातार्थाविचारणदोषपरिहाराय ब्रह्मविचारोऽप्यवश्यं कर्तव्य इति भावः ।

जैमिनिमतेनेति । यन्मतेन ब्रह्मप्रतिद्वन्द्वितया धर्मशब्दः प्रयुज्यते स कथं ब्रह्मसाधारण्येन धर्मशब्दं प्रयुञ्जीतेति भावः । न केवलं जैमिनेरेव धर्मशब्दस्य सिद्धब्रह्मपरत्वानभिमतिरित्याह—आपस्तम्बस्य चेति । ननु

"द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते"

इति भट्टपादैः सिद्धे द्रव्यादावपि धर्मशब्दः प्रयुक्तः, अतः कथं ब्रह्मपरत्वाभाव इत्यत आह—द्रव्यक्रियागुणादीनामपीति । क्रिया-

[1] न्यायेनाकरणम्–ङ.

"श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः ।
चोदनालक्षणैः साध्या तस्मात्तेष्वेव धर्मता" ॥

इति श्रेयस्साधनत्वचोदनालक्षणत्वयोः सिद्धरूपेणानुपपत्तेः । "भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत" इति भावार्थस्यैव विधेयत्वोपगमात् । अविधेयस्य च धर्मत्वे "चोदनालक्षणोऽर्थो धर्मः" इति सूत्रविरोधात् ।

रत्नतूलिका

रूपाविष्टानामित्यस्य क्रियातिरिक्तेषु द्रव्यादिष्वन्वयो द्रष्टव्यः। नन्वस्मिन्भट्टवचने क्रियावशेन धर्मपदवाच्यतेत्येतन्न प्रतीयत इत्याशङ्कयोपपादयति—श्रेयस्साधनत्वेति । अनुपपत्तेरिति । अव्याप्रियमाणस्य साधनत्वायोगात्क्रियाननुप्रवेशे श्रेयस्साधनत्वानुपपत्तिः, तथा व्यापारावेशमन्तरेण सिद्धरूपे पुरुषस्य प्रवर्तयितुमशक्यत्वाच्चोदनाप्रमाणकत्वानुपपत्तिः । चुद प्रेरण इति धातुनिष्पन्नस्य चोदनाशब्दस्य प्रवर्तकवाचित्वादिति भावः । सूत्रगतिपर्यालोचनयापि सिद्धस्य न स्वरूपेण धर्मशब्दवाच्यतेत्याह—भावार्था इति । [1] ("एष ह्यर्थो विधीयते" इति सूत्रशेषः । सूत्रस्यायमर्थः—ये भावार्थाः कर्मशब्दाः न तु श्येनैकत्रिकादिशब्दवत् केवलकर्मशब्दाः न वा[2]भावभावनादिशब्दवत्केवलभावनाशब्दाः यजेतेत्येवमादयः, क्रिया फलस्य कारणं निष्पत्तिः प्रतीयेत । कुतः एष ह्यर्थो भावार्थ एव विधीयत इति ।) अस्तु भावार्थस्य विधेयता, द्रव्यादीनां धर्मत्वाभावे किमायातमित्यत आह—**अविधेयस्य चेति ।** अविधेयस्य सिद्धरूपस्यापि धर्मत्वाङ्गीकारे तत्र चोदनाप्रमाणकत्वश्रेयस्साधनत्वरूपस्य सूत्रोक्तधर्मलक्षणस्याभावादव्याप्ति-

---

[1] कुण्डलितः पाठः क पुस्तके न दृश्यते. [2] भावशब्द–च.

"साध्यत्वरहिते चेष्टा विधेये नित्यमर्थता"॥
इति भट्टवचनस्य च क्रियावत्स्वरूपेण [1]साध्यत्वाभावाभिप्रायत्वात्। विधेयतायां क्रियानुप्रवेशेन साध्यत्वस्यावर्जनीयत्वात्। "अन्यत्र धर्मात्" इति ब्रह्मणो धर्मशब्दार्थादन्यत्वश्रवणाच्च।

श्रेयस्साधनतयैव कर्तृकालादेरपि धर्मत्वप्रसङ्गाच्च अलौकिकश्रेयोऽसाधारणसाधनत्वस्य च [2]ब्रह्मण्यभावात्। "कृष्णं धर्मं सनातनम्" इति च धर्माराद्ध्यत्वात्तत्फलदानेन जगद्धारणयोगात् धर्मसंस्थापनाच्च श्रीकृष्णस्य धर्मतया स्तुत्युपपत्तेः। अपि च त्वन्मते सर्वशब्दवाच्यत्वाङ्गीकारेणोत्कर्षविशेषशालि-

रत्नतूलिका

रित्यर्थः। साध्यत्वरहिते सिद्धरूपे श्रेयस्साधनत्वरूपधर्मत्वप्रतिपादकभट्टवचनविरोधमाशङ्क्य तस्य तात्पर्यमाह—**साध्यत्वरहिते चेति**। अन्यथा स्वोक्तयोरेव साध्यत्वराहित्यविधेयत्वरूपविशेषणयोः परस्परविरोधः स्यादित्यभिप्रेत्याह—**विधेयतायामिति**। **अन्यत्रे**त्यन्यदित्यर्थे निपातः।

किं च किमलौकिकश्रेयस्साधनत्वं धर्मत्वम्, किं वा श्रेयोऽसाधारणसाधनत्वमिति विकल्प्याद्यमतिप्रसङ्गेन दूषयति—**श्रेयस्साधनतयैवेति**। द्वितीयं दूषयति—**अलौकिकेति**। तर्हि कृष्णे धर्मपदप्रयोगस्य का गतिरित्यत आह—**कृष्णं धर्ममिति**। **धारणयोगादिति**। तथा च धारणाद्धर्म इति यौगिकस्तत्रेति भावः। **स्तुत्युपपत्तेरिति**। तथा च तत्र लक्षणादिर्न दोष इति भावः। **उत्कर्षविशेषेति**। यथा "अश्वत्थः सर्ववृक्षाणाम्" इत्यादावुत्कर्षविशेष-

[1] साध्यत्वस्य चावर्जनीयत्वात्. [2] ब्रह्मण्यप्यसंभवात्—ङ

धर्मशब्दनिर्देश्यत्वोपपत्तेर्ब्रह्मणि धर्मशब्दवृत्तौ न क्रियाधर्मप्रसिद्धिविरोधेन यत्नान्तरमनुसरणीयम् ।

अपि चैवं—“अथातो धर्मजिज्ञासा” इत्येव सिद्धे पुनः “अथातो ब्रह्मजिज्ञासा” इति प्रतिज्ञावैयर्थ्यम् । अलौकिकश्रेयस्साधनतैकरूपप्रतिज्ञायामप्यर्थविशेषप्रतिज्ञाप्रतिपादनौपयिकीति चेन्न ; धर्मे तदभावेन वैरूप्यकल्पनापत्तेः । साध्यधर्मे धर्मशब्दप्रसिद्धिप्राचुर्यात् तस्य बुद्धिस्थत्वे च स एव मुख्योऽर्थोऽन्यो गौण इति न युगपदुभयग्रहणम् ; युगपद्वृत्तिद्वयविरोधात् । अन्यथा “अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः

रत्नतूलिका

शाल्यश्वत्थवाचकेन ब्रह्म निर्दिश्यते, त्वन्मते तस्य सर्वशब्दवाच्यत्वात्, अथापि वृक्षविशेषप्रसिद्धिविरोधेन यत्नान्तरं न क्रियते, तथात्रापि क्रियाप्रासीद्धिविरोधेन धर्मपदस्य यत्नान्तरं न कर्तव्यमित्यर्थः ।

**प्रतिपादनौपयिकीति ।** विशेषरूपेण प्रतिपाद्यत्वात्तद्रूपप्रतीतिहेतुतया विशेषप्रातिज्ञा प्रतिपादने उपाय इत्यर्थः । तदभावेन विशेषप्रतिज्ञाभावेन । तथा च तत्रापि विशेषप्रतिज्ञा क्रियेतेति भावः । ननु विनापि विशेषप्रतिज्ञां धर्मशब्दस्य साध्यधर्मे प्रसिद्धिप्राचुर्येण तस्य बुद्धिस्थता स्यादित्यत आह—**साध्यधर्म इति । वृत्तिद्वयविरोधादिति ।** प्रथमं मुख्यप्रतीत्यर्थं तत्र शब्दस्य पर्यवसानं वाच्यम्, ततो मुख्यद्वारा गौणार्थप्रतीतिरिति वाच्यम्, तथाच कथं गौणमुख्ययोः शब्दस्य युगपद्वृत्तिद्वयम् ; विरोधादित्यर्थः । गौणमुख्ययोर्युगपत्प्रतीतौ न्यायविरोधं बाधकमाह—**अन्यथेति ।** इत्थं तदधिकरणम्—“बर्हिर्देवसदनं दामि” इत्यादिमन्त्राणां किं मुख्येऽर्थे बर्हिष्येव विनियोगः, उत गौणे बर्हिस्सदृशे उलपादावपीति संशयः । तत्र पूर्वः पक्षः अविशेषा-

स्यात्" इति मन्त्राणां प्रथमप्रत्याय्यमुख्यार्थविनियोगन्याय-विरोधात्। मुख्यगौणयोरुभयोरपि तुल्योपस्थितिप्रसङ्गात्। उभयविशेषलक्षणायां चोक्तदोषानतिवृत्तेः।

एतेन तन्त्रतापि निरस्ता, अलौकिकश्रेयस्साधनतासामान्यशक्तस्य क्रियारूपविशेषे लक्षणावश्यंभावेन वृत्तिद्वयविरोधस्य तन्त्रतोक्तिमात्रेणापरिहरणीयत्वात्। अथावृत्तिः सूत्रस्य;

रत्नतूलिका

दुभयत्रापीति। सिद्धान्तस्तु प्रकरणाम्नातमन्त्रस्य प्रथमप्रतीतमुख्यार्थ-विनियोगेन नैराकाङ्क्ष्यान्न चरमप्रतीते गौणेऽपि विनियोग इति। सूत्रार्थस्तु मन्त्रेषु कर्म प्रति शेषभावोऽर्थाभिधानसंयोगाद्भवेत्। अतो मन्त्रस्यार्थेन मुख्यार्थेन उत्पत्त्या संबन्धः स्यात्, कुतः? तेन नित्य-संयोगात् पदपदार्थसंबन्धस्यौत्पत्तिकत्वादिति।

विरोधमुपपादयति—मुख्यगौणयोरिति। उपस्थितौ शैघ्रय-मान्द्यरूपवैलक्षण्याभावे उभयत्रापि विनियोगः स्यादिति तदधिकरणविरोध इति भावः। ननु न साध्यधर्मे प्रसिद्धिप्राचुर्यम्; येन तस्य मुख्यता स्यात्। किं त्वलौकिकश्रेयस्साधनसामान्ये शक्तिः, तद्विशेष सिद्धधर्मे साध्यधर्मे च लक्षणा, ततश्चोभयोः प्रतिज्ञातत्वात् साधारण्यं धर्मस्य विशेषरूपेणोपस्थितिश्चेत्येतद्दूषयति—उभयविधलक्षणायां चेति। उक्तदोषेति। ब्रह्मजिज्ञासाप्रतिज्ञावैयर्थ्यरूपदोषेत्यर्थः। [1](न चात्र वृत्ति-द्वयविरोधाद्विशेषानुपस्थितिरिति वाच्यम्; उभयतात्पर्ये तद्विरोधस्या-दोषत्वात्। प्रतिपादनौपयिकतया पुनः प्रतिज्ञाङ्गीकारे सूत्रस्य फल्गु-त्वापत्तेरिति भावः।)

तन्त्रतोक्तिमात्रेणेति। उभयोपस्थितये सकृदुच्चारणं हि तन्त्रम्, तत्रालौकिकश्रेयस्साधनसामान्यस्य शक्त्या, क्रियाया लक्षण-

[1] अयं कुण्डलितः पाठः काचित्कः.

तत्कल्पना तावदेको दोषः। अपि चावृत्तावपि स एवायं धर्मशब्द इति कथमर्थविशेषलाभः। लक्षणसूत्रसमाभिव्याहारादिति चेत्तर्हि प्रसिद्धिप्राचुर्याल्लक्षणसूत्रसमाभिव्याहाराच्च प्रथममेव क्रियाधर्मप्रतीतौ कुतः साधारणप्रतिज्ञा। सूत्रस्यान्यतः साधारणप्रतिज्ञार्थत्वासिद्धावावृत्त्यसिद्धेः, आवृत्तस्यैव लक्षणसूत्रसमभिव्याहार इति नियन्तुमशक्यत्वात्। तस्मान्नैकप्रतिपाद्यकत्वमैकशास्त्र्यं साध्यम्, स्वतन्त्रभिन्नार्थविषयप्रतिज्ञाभेदबाधात्।

रत्नतूलिका

योपस्थितिर्वाच्येति वृत्तिद्वयविरोधो दुष्परिहर इत्यर्थः। कल्पनायामपि नेष्टसिद्धिरित्याह—अपि चेति। लक्षणसूत्रेति। चोदनासूत्रोक्तं चोदनालक्षणत्वं सिद्धे ब्रह्मणि न संभवतीति साध्यधर्मलाभ इत्यर्थः। प्रथममेवेति। आवृत्तेः पूर्वमित्यर्थः। सूत्रस्य प्रतीतिदशायामेवावृत्तिसहितस्य प्रतीतेरेकं साधारणप्रतिज्ञारूपमन्यदसाधारणार्थप्रतिज्ञारूपमस्त्वित्यत आह—सूत्रस्येति। न ह्यत्रावृत्तिः श्रूयते, येन सूत्रस्य प्रतीतिदशायामेव सा प्रतीयेत, किं तु साधारणार्थप्रति[1]ज्ञात्वनिश्चयेन कल्प्या, तन्निश्चयश्चावृत्तौ सिद्धायामेकस्य लक्षणसमभिव्याहारेण साधारणप्रतिज्ञात्वसिद्धयेति चक्रकाश्रयः स्यादित्यर्थः। किं च द्वित्वेन ज्ञानं ह्यावृत्तिः, तथा ज्ञाने द्वयोरपि सूत्रयोर्लक्षणसूत्रसमभिव्याहारः समान इति साध्यधर्मपरत्वं स्यात्, अन्यथा कस्यापि न स्यादित्यभिप्रेत्याह—आवृत्तस्यैवेति। प्रथमपक्षदूषणमुपसंहरति—तस्मादिति।

---

[1] ज्ञार्थत्व–कुं.

नाप्येकप्रयोजनकत्वम् ; बाधादेव । बादरायणमते वेदस्य ब्रह्मैदम्पर्येण कर्मणामपि तादर्थ्यान्निःश्रेयसैकफलत्वेऽपि जैमिनेः स्वप्रधानानामेव कर्मणामभ्युदयफलत्वोपगमात् । अत एव नैकपुरुषानुष्ठेयत्वं साध्यम् ; राजसूयबृहस्पतिसवादिवदितरेतरासंभिन्नाधिकारिकर्तृकत्वात् । शेषशेषित्वेऽधिकृताधिकारे वा प्रमाणाभावाच्च । एकग्रन्थव्याख्यानत्वं चैकशास्त्र्येऽप्रयोजकम् ; बहुलमर्थविरोधात् । विध्येकवाक्यतया [1]क्रियार्थवादप्रामाण्यसमर्थनस्य वेदान्तसाधारणत्वात् ।

### रत्नतूलिका

द्वितीयं निषेधति—नाप्येकेति । तृतीयं दूषयति—अत एवेति । फलभेदादेवेत्यर्थः । तथा च युक्तं फलैक्ये आग्नेयाग्नीषोमीयादीनामिवैकपुरुषानुष्ठेयत्वम् । न चात्र तदस्तीति भावः । किं च शेषत्वमाधिकृताधिकारो वा एकपुरुषानुष्ठेयत्वे तन्त्रम्, यथा प्रयाजादीनामाग्नेयादीनां च, यथा वा दर्शपूर्णमासयोरधिकृतस्यैव गोदोहनानुष्ठाने, यथा वा इष्टदर्शपूर्णमासस्यैव ज्योतिष्टोमे इति न चात्र तयोरन्यतरदप्यस्तीत्याह—शेषशेषित्व इति । तत्र प्रयाजादीनां शेषत्वे अस्ति प्रकरणादिप्रमाणम्, गोदोहनस्य त्वाश्रयापेक्षा, दर्शपूर्णमासादावपि "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति क्रमबोधकं वाक्यम् । न चेह तथा प्रमाणमस्तीत्यर्थः । अधिकृताधिकार इति । धर्मविचारेऽधिकृतस्य ब्रह्मविचाराधिकारे इत्यर्थः । एवं साध्यमुखेनानुमानं दूषयित्वा हेतुमुखेनापि दूषयति—एकग्रन्थव्याख्यानत्वं चेति । अप्रयोजकमिति । एकस्यैव ग्रन्थस्य स्वस्वबुद्ध्यनुरोधेन विरुद्धतात्पर्योन्नयनेन व्याख्यानद्वयसंभवादिति भावः । परस्परवार्तानभिज्ञं व्याख्याद्वयमित्यत्र हेतुमाह—बहुलमिति । वेदान्तसाधारण्यादिति । अक्रियार्थत्वाविशेषादित्यर्थः ।

[1] अक्रियार्थ—ख.

ननु तदुत्सृष्टं जैमिनिना सिद्धे वेदान्तप्रामाण्य[1]समर्थनेन केवलमपोद्यते। तथा च टीकायां "अथातो धर्मजिज्ञासा" इति धर्मोपाधौ तदीयविचारप्रवृत्तिमादर्श्याक्रियार्थानामानर्थक्य-चोद्यसमाधाने कर्मकाण्डीयविषयतया व्यवस्थापिते। न चार्थवादादेरेव प्रामाण्याङ्गीकारानङ्गीकाराभ्यामर्थविरोधः; सिद्धे मानान्तरेण विरुद्धे वा सिद्धान्तिनोऽपि तदनङ्गीकारात्, अतादृशे च [2]बोधकतामात्रस्य परेणापि स्वीकारात्।

## रत्नतूलिका

नन्वर्थवादनयो न वेदान्तं स्पृशति, आहवनीयविधिरिव पद-होममित्याशङ्कते—**नन्विति**। तत् विध्येकवाक्यतया प्रामाण्यं **उत्सृष्टं** बाधकैकापोद्यं कृतम्। उत्सृष्टस्य बाधकमाह—**सिद्ध इति**। **धर्मोपाधाविति**। धर्मस्योपाधिर्धर्मोपाधिः धर्मत्वं, तत्पुरस्कारेण [3]जैमि-निनयप्रवृत्तिमादर्श्येत्यर्थः। तथा चाक्रियार्थत्वेनाप्रामाण्यचोद्यस्य विध्ये-कवाक्यतया प्रामाण्यसमर्थनस्य जैमिनीयस्योत्सृष्टस्य वैयासिकेन वेदा-न्तानां सिद्धे ब्रह्मणि प्रामाण्यसमर्थनेन बाधकेन वेदान्तातिरिक्तेषु व्यव-स्थापनात् उत्सर्गापवादयोश्चैकवाक्यतायाः अन्यत्र क्लृप्तत्वान्नार्थविरोध इति भावः। ननु जैमिनिना "तृप्त एवैनं" इत्येवंजातीयकार्थवादानां प्रतीयमानेऽर्थे प्रामाण्यं नाङ्गीकृतम्, सिद्धान्ते तदङ्गीकृतम्, ततश्चार्थ-विरोध इत्याशङ्क्य निषेधति—**न चार्थवादादेरिति**। किं तदर्थवा-दानां प्रामाण्यम्, यदङ्गीकारानङ्गीकाराभ्यामर्थविरोध आशङ्क्यते, किं बोधकतापर्यायमज्ञातज्ञापकत्वम्, किं वा प्रयोजनपर्यवसायित्वमिति विकल्प्याद्य आह—**सिद्धे मानान्तरेणेति**। तथा च यत्र परस्य तदनङ्गीकारो विरुद्धादौ तत्र सिद्धान्तिनोऽपि, यत्र सिद्धान्तिनोऽङ्गीका-रोऽविरुद्धादौ तत्र परस्यापीति न विरोध इति भावः।

---

[1] मण्डनेन—ङ. [2] साधकतामात्रस्य—ङ. [3] जैमिनीयनय—च. कुं.

अत एव "स प्रजापतिः" इत्यादौ मानान्त[1]राविरुद्धार्थोपपादनं "नित्यः कश्चिदर्थः प्रजापतिः स्यात् आकाशो वायुर्वा" इत्यादि शाबरं दृश्यते। अन्यथा यथातथापि स्तुतिनिन्दोपलक्षणसंभवेन तदानर्थक्यात्। प्रयोजनपर्यन्तता चार्थवादादेर्विधिशेषतयैवेति न विवादः। तस्मादुत्सर्गापवादो नैकशास्त्र्यविरोधीति।

## रत्नतूलिका

परस्यापि तदङ्गीकार इत्येतदुपपादयति—**अत एवेति**। यतो मानान्तराविरुद्धादौ बाधकताङ्गीकारः अत इत्यर्थः। **स प्रजापतिरित्यादाविति**। "स प्रजापतिरात्मनो वपामुदक्खिदत्, तामग्नौ प्रागृह्णात्, ततोऽजस्तूपरः समभवत्, तं स्वायै देवताया आलभत" इत्यर्थवादः "यः प्रजाकामः पशुकामः स्यात्, स एतं प्राजापत्यमजं तूपरमालभेत" इति विधेः शेषः तस्य स्तुत्यर्थ इत्युक्तम्। अनन्तरं च "कथं पुनरिदं निरालम्बनमन्वाख्यायते" इति स्वकीयवपाया उत्खननादिकं मानान्तरविरुद्धम्, अतः कथं वाक्यं तद्बोधकमित्याशङ्क्य वाक्यस्थपदानां गौणत्वमङ्गीकृत्यापि वाक्यस्य मानान्तराविरुद्धार्थकत्वमुपपादितं शाबरे "नित्यः कश्चिदर्थः प्रजापतिः स्यात् वायुराकाश आदित्यो वा, स आत्मनो वपामुदक्खिददिति, वृष्टिं वायुं रश्मिं वा तामग्नौ प्रागृह्णात्, वैद्युते आर्चीसे लौकिके वा, ततोऽज इत्यन्नं बीजं वीरुत्" इत्यादि "गौणाः शब्दाः" इत्यादिना। यदि बोधकत्वमनभिमतं स्यात् तदा यत्नेन तत्प्रतिपादनमनर्थकं स्यादित्यर्थः। द्वितीय आह—**प्रयोजनपर्यन्तता चेति**। वेदान्तानामुपासनाविधिशेषत्वादिति भावः।

---

[1] रविरुद्धार्थ–ख.

उच्यते—नात्रोत्सर्गापवादः ; तुल्यविषयाविरोधात् । "एतेनोपनिषदाम्" इत्यादिवार्तिकस्य, सूत्रतात्पर्यनिरूपणायां च जैमिनिमतं हीदं चोदनालक्षणोऽर्थ एव वेदप्रतिपाद्य इति, चोदनेति क्रियायाः प्रवर्तकं वचनम् , तमाशङ्क्य सिद्धवस्तु वेदप्रतिपाद्यमिति सूत्रकारैः साधयितुं युज्यत इति स्ववचनस्य च कर्मविधिशेषतयोपासनविधिशेषतया वा वेदान्तानामपि प्रामाण्यं न स्वत इति जैमिनेर्मतमित्येवमर्थकत्वे तेषामेव सिद्धान्तेऽनन्यशेषतया प्रामाण्याङ्गीकारात् ।

अक्रियार्थानर्थक्यचोद्यादेरर्थविशेषव्यवस्था च न जैमिनेरेषोऽभिप्राय इति, किं तर्हि यद्यक्रियार्थानामर्थवत्त्वाय विध्येकवाक्यता, न सा वेदान्तानाम् ; स्वार्थवृत्त्यैवार्थवत्त्वादिति जैमिनिसिद्धान्त[1] सकलाक्रियार्थाविध्येकवाक्यत्वभङ्गेनांशाभ्युपग-

रत्नतूलिका

तुल्यविषयेति । विधिशेषतया प्रामाण्याङ्गीकारस्य जैमिनीयस्य, अनन्यशेषतया प्रामाण्याङ्गीकारस्य वैयासिकस्य च वेदान्तरूपतुल्यविषयकत्वादित्यर्थः । तथा च पदाहवनीयशास्त्रयोस्तुल्यविषयाविरोधभ्रमेऽपि वस्तुतो न तुल्यविषयत्वमिति वैषम्यमिति भावः । नन्वत्रापि जैमिनीयविचारस्य न वेदान्तविषयत्वमित्याशङ्क्य तथा सति भट्टवचनविरोधस्तान्त्रिकस्य स्ववचनविरोधश्चेत्यभिप्रेत्याह —एतेनोपनिषदामित्यादीति । जैमिनिमतं हीत्यादि[2]स्ववचनम् । तेषामेव वेदान्तानामेव ।

ननु "आम्नायस्य क्रियार्थत्वात्" इति चोद्यं "विधिना त्वेकवाक्यत्वात्" इति समाधानं च कर्मकाण्डगतार्थवादविषयतया व्यवस्थापितं टीकायां "कार्यनिष्ठ एव वेदभागो विचार्यतया प्रक्रान्तः" इत्यादौ, तस्य का गतिरित्याशङ्क्य तस्य तात्पर्यं दर्शयति—अक्रियार्थानर्थक्येति । अंशाभ्युपगममात्रमिति । जैमिनिना उपनिषदामर्थ-

[1] सकलक्रियार्थ-ग. [2] त्यादि सूत्रतात्पर्येत्यादि-कुं.

समाम्नम् । अत्र साक्षितया तदीयधर्मजिज्ञासोपक्रमोपन्यासस्तु परप्रत्ययनेयमत्युपच्छन्दनमित्युक्तम् । "धर्मजिज्ञासा" इत्यारभ्य वेदान्तानां विधिशेषत्वाभिधाने विरोधोद्धाटनं वा । सकलाम्नायस्य धर्मैकार्थताया दूष्यत्वात् । वेदान्तानामुपासनाविधिनिष्ठत्वस्यापि निराकार्यत्वात् ।

रत्नतूलिका

वादानां चार्थवादनयाविषयत्वमङ्गीकृतम् । तन्मतभङ्गाय तदेकदेशस्यार्थवादविषयताङ्गीकारमात्रमित्यर्थः । अयं भावः—जैमिनिना अक्रियार्थानामविशेषेण पुरुषार्थपर्यवसानाभावादप्रामाण्यमाशङ्क्य विध्येकवाक्यतया प्रयोजनपर्यवसानात्प्रामाण्यमुक्तम् । तद्वेदान्तेषु स्वतः पुरुषार्थपर्यवसायिषु न संभवति; तदेकवाक्यतां विनापि पुरुषार्थपर्यवसानादित्यभिप्रेत्य जैमिनिविचारस्यैकदेशविषयत्वेऽभिहिते सर्वेषामक्रियार्थानां विध्येकवाक्यत्वमित्येतज्जैमिनिमतं [1]भिन्नं भवतीति । ननु यदि विचारस्य व्यवस्थितविषयत्वं टीकाकृताभिहितम्, न [2]जैमिनिमतत्वेन, किमर्थं तर्हि तत्र साक्षित्वेन सूत्रप्रदर्शनम्; अनभिमतेऽर्थे साक्षिप्रदर्शनानर्थक्यादित्यत आह—अत्र साक्षितयेति । उक्तमिति । सिद्धान्तस्यादाविति शेषः । अभिप्रायान्तरमाह—धर्मजिज्ञासेत्यारभ्येति । सूत्रकृता धर्मजिज्ञासेति धर्मविचारः प्रतिज्ञातः, ततश्चार्थवादानां धर्मैकार्थानां विधिशेषतया प्रामाण्यं वक्तुमुचितम्, न वेदान्तानाम्; अतदर्थत्वात्, तथा चान्यत्प्रतिज्ञातमन्यदुपपादितमिति विरोधोद्धाटनाय धर्मजिज्ञासोपक्रमोपन्यास इत्यर्थः। ननु कृत्स्नाम्नायस्य धर्मैदम्पर्याद्वेदान्तानामुपासनाविधिशेषत्वाद्वा न तदुक्तिविरोध इत्याशङ्क्य पक्षद्वयस्यापि दूष्यत्वान्नैवमित्याह—सकलाम्नायस्येत्यादि ।

---

[1] भग्नं–घ. छ. कुं.   [2] जैमिनीय–च.

न चाक्रियार्थानर्थक्याप्रामाण्यचोद्यसाधारण्येऽपि विधिशेषतया तत्समाधानमर्थवादादिमात्रविषयम्, वेदान्तानां स्वत एव पुरुषार्थतया प्रामाण्यप्रकारोपपादनं तु न कृतमभिसन्धिनिगूहनार्थमिति वाच्यम्, येन विध्यर्थवादमन्त्रनामधेयविभागस्य वेदस्य सर्वप्रकारं प्रामाण्यं व्युत्पाद्य स्मृत्याचारयोरपि व्युदपादि, स खल्वक्रियार्थानामविशेषेणानर्थक्यादप्रामाण्यचोद्यमुद्भाव्य क्वचिदेव समाधायान्यत्राभिसन्धिं निगूहत इत्यसारोत्प्रेक्षणस्यायुष्मतो मतिमान्द्यनिमित्तत्वात्। कुतश्च जैमिनेरुपनिषदप्रामाण्यचोद्यसमाधानाभिसन्धिनिगूहनमुत्प्रेक्ष्यते। तद्विषयसूत्राभावादिति चेत्, नन्वर्थवादविषयमेव सूत्रं "विधिना त्वेकवाक्यत्वात्" इति। [1]अविधिशेषतया प्रामाण्योपपादकं

## रत्नतूलिका

ननु जैमिनिना "आनर्थक्यमतदर्थानाम्" इति शङ्का वेदान्तसाधारण्येन कृता, "विधिना त्वेकवाक्यत्वात्" इति समाधानं त्वर्थवादमात्रे कृतम्, वेदान्तेषु स्वतः पुरुषार्थत्वमभिमतमपि नोद्घाटितम्, अतो न विरोध इति प्रकारान्तरेण विरोधपरिहारमाशङ्क्य निषेधति—**न चाक्रियार्थेति। मतिमान्द्यनिमित्तत्वादिति।** अन्यत्र निगूहनं दृष्ट्वा तन्न्यायेनात्रापि निगूहनमुत्प्रेक्षतापि तदेव तु नास्तीति भावः। आयुष्मत इति निन्दायां मतुप्। उत्प्रेक्षणं न संभवतीत्युक्त्वा तस्य हेतुमप्याक्षिपति—**कुतश्चेति।** तत्रहेतुं शङ्कते—**तद्विषयेति।** तत्राशयनिगूहनाभावे "विधिनात्वेकवाक्यत्वात्" इत्यर्थवादविषयकसूत्रमिव वेदान्तविषयं सूत्रमपि प्रणीयेत। न दृश्यते च सूत्रम्। अतस्तदुत्प्रेक्षेति भावः। गूढाभिसन्धिः शङ्कते—**नन्वर्थवादविषयमिति।** आशयमविद्वान्परिहरति—**अविधिशेषतयेति।** आशय-

[1] अविशेषतया—ख.

नास्तीति चेत्, तत एव विधिशेषतया तत्प्रामाण्यं जैमिन्युपज्ञमिति ब्रूमः। अविधिशेषतया सदपि प्रामाण्यं नोपपादयति; व्युत्पाद्यधर्मोपमर्दभयादिति चेत्, ननु कुतस्त्यमुपमर्दभयं तव कर्मसमुच्चयमिच्छतः।

अपि च पूर्णाहुत्या सर्वकामावाप्तिफलस्य गर्गत्रिरात्रब्राह्मणविद्यया मुखशोभाफलस्य च "अन्यानर्थक्यात्" "तथा फलाभावात्" इतीतरकर्मानर्थक्यमनुपलम्भबाधं च दोषमभि-

रत्नतूलिका

मुद्धाटयति—तत एवेति। तादृशसूत्राभावादेवेत्यर्थः। वेदान्तसाधारण्येन शङ्कामुद्धाट्य तन्मात्रविषयतया परिहारसूत्रमनुक्त्वा विध्येकवाक्यतया प्रामाण्यं वदतः सूत्रकारस्य वेदान्तानामपि तथैव प्रामाण्यमित्यभिप्राय उन्नीयत इति भावः। प्रयोजनाभावादपि निगूहनं नोत्प्रेक्षितुं शक्यत इति वक्तुं निगूहनस्य प्रयोजनं शङ्कते—अविधिशेषतयेति। धर्मोपमर्दभयादिति। वेदान्तानां स्वतः पुरुषार्थत्वे उक्ते ज्ञानमात्रसाध्ये परमपुरुषार्थ एव प्रवृत्तिः स्यात्। न त्वायाससाध्ये कर्मणीत्युपमर्दोऽननुष्ठानं स्यात्। अथवा ब्रह्मज्ञानेन तेषामश्लेषो विनाशो वा स्यादिति भयादित्यर्थः, उभयमपि तव मते न सम्भवतीत्याह—कुतस्त्यमिति।

सर्वकामावाप्तीति। "पूर्णाहुत्या सर्वान्कामानवाप्नोति" इति श्रुतस्येत्यर्थः। मुखशोभेति। गर्गत्रिरात्रब्राह्मणं प्रकृत्य श्रुतस्य "शोभतेऽस्य मुखम्, य एवं वेद" इत्यस्येत्यर्थः। ब्राह्मणविद्यया—ब्राह्मणज्ञानेन। "अन्यानर्थक्यात्" इति सूत्रं व्याचष्टे—इतरकर्मानर्थक्यमिति। "तथा फलाभावात्" इति सूत्रं व्याचष्टे—अनुपलम्भबाधं चेति। "अन्यानर्थक्यात्" इत्यस्य समाधानं—

धाय समादधे "सर्वत्वमाधिकारिकम्", "विद्याप्रशंसा" इति। तच्च समानं वेदान्तेषु। "सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्" इति प्रजापतिविद्ययैव सर्वलोककामावाप्तौ "तेषां सर्वेषु लोकेषु कामचारो भवति" इति तदूनफलदहराद्युपासनानर्थक्यात्।

यद्यपि सर्वकर्मापेक्षिताग्निसंस्कारतया पूर्णाहुतेरवश्यापेक्ष्यायाः सर्वकामावाप्तिफलत्वे स्यादन्यानर्थक्यम्, नेतरेतरनिरपेक्षासु विद्यासु, तथाप्यल्पगुणविषयत्वादल्पया प्रजापति-

## रत्नतूलिका

सर्वत्वमाधिकारिकमिति सूत्रम्। अस्यायमर्थः—"सप्त ते अग्ने" इति सप्तत्र्या "पूर्णाहुतिं जुहोति" इत्याधानशेषतया विहिताहुतिः "सर्वान्कामानवाप्नोति" इति फलसाधनत्वेन स्तूयते। पूर्णाहुत्यनन्तरमेवाग्निसाध्येषु फलवत्सु तत्तत्कर्मसु तस्य तस्याधिकारात्। ततश्च सर्वत्वं नासङ्कुचितम्, किं त्वाधिकारिकं तत्तदधिकारापेक्षमिति। "तथा फलभावात्" इत्यस्य समाधानसूत्रं—विद्याप्रशंसेति। गर्गत्रिरात्रब्राह्मणविद्याप्रशंसारूपोऽयमर्थवादो गर्गत्रिरात्रविधेः शेष इति तस्यार्थः। अर्थविरोधं वक्तुमुक्तन्यायं वेदान्तेष्वतिदिशति—तच्च समानमिति। वेदान्तेष्वन्यानर्थक्यन्यायविषयं दर्शयति—सर्वांश्च लोकानाप्नोतीति।

वैषम्यं शङ्कते—यद्यपीति। यदनुष्ठानमन्तरेणान्यानुष्ठानं न सम्भवति तस्य सर्वार्थत्वे स्यादन्यानर्थक्यम्। न चैवं विद्यासु; प्रजापतिविद्यामन्तरेणापि दहराद्यनुष्ठानसम्भवादित्यर्थः। अल्पोपायेन फलसम्भवेऽधिकोपायानर्थक्यमित्येव न्यायार्थः। अवश्यानुष्ठेयत्वं त्वार्थिकम्। स चाल्पाधिकभावो विद्यास्वपि समान इति परिहरति—तथापीति। अल्पगुणविषयत्वमल्पत्वे, अपहतपाप्मत्वादिबहुगुण-

विद्यया तावति फले तदेकदेशफलस्य बहुगुणविषयत्वात् महतो विद्यान्तरस्यानर्थक्यमेव। अग्निहोत्रेणाल्पेन स्वर्गावाप्तावग्निष्टोमाद्यानर्थक्यस्याप्यन्यानर्थक्यन्यायाविषयत्वात्। "फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात्" इति कृषिन्यायेन [1]कर्मतारतम्येन फलतारतम्यकल्पनया तस्यापि समाधानात्। तथा ज्योतिर्विद्यायां "तदेतद्दृष्टं च श्रुतं चेत्युपासीत, चक्षुष्यश्च श्रुतो भवति" इति वर्तमाननिर्दिष्टसुन्दरत्वयशस्वित्वफलानुपलम्भाच्च।

## रत्नतूलिका

विषयत्वं च बहुत्वे हेतुरिति द्रष्टव्यम्। इत्थं चावश्यं वाच्यम्, अन्यथा ज्योतिष्टोमाद्यानर्थक्यस्यैतन्न्यायविषयत्वं न स्यादित्यभिप्रेत्याह—**अग्निहोत्रेणेति**। इष्टापत्तिमाशङ्क्याह—**फलस्येति**। सूत्रं व्याचष्टे—**कृषीति**। फलस्य कर्मणा निष्पत्तेस्तेषां निष्पादककर्मणां लोकवत् कृष्यादिवत् परिमाणतस्तारतम्येन फलविशेषस्तारतम्यं स्यादिति सूत्रार्थः। अन्यथा सूत्रानर्थक्यं स्यादिति भावः। "तथा फलभावात्" इति न्यायविषयं दर्शयति—**तथा ज्योतिर्विद्यायामिति**। "तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव न दधुरिवाग्नेरिव ज्वलत उपगृह्णाति" इति पूर्ववाक्यप्रकृतो ध्वनिविशेषस्तदेतच्छब्दार्थः। चक्षुषोर्हितश्चक्षुष्यः, सुन्दरः, श्रुतः कीर्तिमानिति श्रुत्यर्थः।

नन्वन्यानर्थक्यचोद्यसमाधानं जैमिनेर्वेदान्तेषु नाभिमतम्, किंतु तदंशेऽभिसन्धिनिगूहनमिति निश्चीयते, कुत इति चेत्, बादरायणेन "विकल्पोऽविशिष्टफलत्वात्" इति सूत्रे फलविशेषाभावं हेतूकृत्य

---

[1] कर्मतारतम्ये—ङ.

तत्र तदन्यानर्थक्यसमाधानं यदि वेदान्तेषु नानुगम्येत; "विकल्पोऽविशिष्टफलत्वात्, इति न्यायात्, न तावता तत्राभिसन्धिनिगूहनं जैमिनेरयुक्तिकमाश्रयितव्यम्। सर्वथैवात्मविद्यायाः कर्माङ्गतोपगमादपापश्लोक[1]श्रवणवदविवक्षितार्थानि फलवचनानि प्रशंसामात्रमिति तदभिप्रायोपपत्तेः। तदिदं

## रत्नतूलिका

दहरप्रजापतिविद्यानां विकल्पाभिधानात्, अन्यथा फले तारतम्यापत्त्या विकल्पो न स्यादित्यभिप्रेत्य शङ्कते—**तत्र तदन्येति**। तत्र अन्यानर्थक्यफला[2]भावयोर्मध्य इत्यर्थः। **तावतेति**। बादरायणेन विकल्पाभिधानमात्रेणेत्यर्थः। न केवलमयुक्तिकत्वं, अपि तु विपरीता युक्तिरित्याह—**सर्वथैवेति**। कर्तृसंस्कारत्वेन देवतासंस्कारत्वेनेत्यादिप्रकारेणेत्यर्थः। **अपापश्लोकश्रवणवदिति**। चतुर्थे "द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्" इत्यधिकरणे "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इति श्रुतमपापश्लोकश्रवणं विहितस्य पर्णत्वस्य फलम्, अतः पर्णत्वं पुरुषार्थमिति पूर्वपक्षे, शृणोतीति वर्तमानतया निर्दिष्टस्य न फलत्वं युक्तम्, पर्णत्वस्य फलाकाङ्क्षा चाव्यभिचरितक्रतुसम्बन्धिजुहूद्वारा क्रतुफलेनैव शाम्यतीति पर्णत्वं न पुरुषार्थम्, किं तु क्रत्वर्थम्। अपापश्लोकश्रवणं त्वर्थवाद इत्युक्तम्। तद्वदेव विद्यासु कर्त्रादिसंस्काररूपासु फलश्रुतिरर्थवाद इत्यभिप्रायोन्नयनसम्भवादित्यर्थः। वेदान्तानां जैमिनीयविचारविषयत्व-

---

[1] श्रवणादिवदवि—कुं. [2] भावसमाधानयो—कुं.

रात्रिसत्रन्यायेन तत्फलविधिपरत्वाङ्गीकारप्रवृत्तवैयासिकदर्शनेन विरुद्धम् ।

न च देवतानिरासे जैमिनेरतात्पर्यादन्वारुह्यवादत्वाद्वा तदभ्युपगमेन न विरोध इति युक्तम् ; देवताधिकरणे देवतादिषु मन्त्रादिप्रामाण्यनिरासेन शब्दातिरिक्तदेवतानभ्युपगमे तात्पर्या-

रत्नतूलिका

मुपपाद्य बादरायणविचारस्य तद्विरोधमुपपादयति—तदिदमिति । वेदान्ताविषयमन्यानर्थक्यादिचोद्यसमाधानमित्यर्थः । रात्रिसत्रन्याये- नेति । चतुर्थे रात्रिसत्रं प्रकृत्य श्रूयते "प्रतितिष्ठन्ति ह वा एते, य एता रात्रीरुपयन्ति" इति । तत्र संशयः किं फलविधिरुतार्थवाद इति । "न स पापं श्लोकं शृणोति" इतिवद्वर्तमानापदेशान्न फलविधिः ; किं त्वर्थवाद इति प्राप्ते—युक्तं पर्णत्वस्यान्यतः फलाकाङ्क्षाशान्तेरपापश्लोकश्रवणमर्थवाद इति । इह तु रात्रिसत्राभि- धेयानां "ज्योतिर्गौरायुः" इत्यादिवाक्योत्पन्नयागानां फलाकाङ्क्षाया अन्यतोऽशान्तेः स्वर्गाध्याहारतो वरो विपरिणाम इति, ये प्रति- तिष्ठासन्ति त एता रात्रीरुपेयुरिति विपरिणामेन फलविधिपरत्वमिति । तद्वत "सर्वांश्च लोकानाप्नोति" इत्यादीनां फलविधिपरत्वमुक्तं वैयासिकदर्शने । तेन विरुद्धमित्यर्थः ।

यत्परिहृतं पूर्वपक्षे देवताङ्गीकारानङ्गीकाराभ्यां विरोधो नास्तीति, तन्निषेधति—न च देवतानिरास इति । तात्पर्याभावं दूषयति— देवताधिकरण इति । "देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्" इति नावमिकाधिकरण इत्यर्थः । तत्र कर्मापेक्षया सम्प्रदानभूताया इन्द्रादिदेवतायाः प्रधानत्वात् सैव फलदात्री, यागस्तु तदाराधनरूप इति । यागेनाराधिता देवता प्रसन्ना फलं ददाति ।

वगमात्। अहृदयवादफलाभावाच्च। देवतातत्प्राधान्याभ्युपगमेऽपि तदाराधनात्मसु कर्मसु श्रद्धाविच्छेदाप्रसङ्गात्,

## रत्नतूलिका

अत एव श्रुतिः "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" इत्यादिरिति प्राप्ते—समानपदश्रुत्या यागस्य साध्यस्य फलसाधनत्वं न सिद्धरूपाया देवतायाः। किंच विग्रहवत्त्वे अनित्यता स्यात्। तथा च नित्यवेदसंयोगविरोधः। अपि चाचेतनानामोषधिवनस्पत्यादीनां देवतात्वेन श्रवणान्न विग्रहवती देवता। यागसाधनद्वारा फलोपयोगित्वमात्रेण "तृप्त एवैनं" इत्याद्यर्थवादस्य "दधत्पोषं रयिं मयि" इत्यादिमन्त्राणां चोपपत्तिरित्यादि निरूपितम्। तथा च देवतानिरासतात्पर्याभावे तत्र प्रमाणनिरासो व्यर्थः स्यादिति भावः। एवं देवतादिप्रमाणनिराकरणात्तन्निरासे तात्पर्यमङ्गीकार्यमित्युक्तम्। इदानीं तत्र तात्पर्याभावे तन्निरासो व्यर्थः स्यात्, अतस्तत्र तात्पर्यं वाच्यमित्याभिप्रायेणाह—अहृदयवादेति। नन्वश्रुतवेदान्तानां कर्मण्यश्रद्धाभाव एव तत्प्रयोजनमित्युक्तम्, [1](इत्यत आह—देवतातत्प्राधान्येति।) देवतातत्प्राधान्याभ्युपगमे कर्मणि कथमश्रद्धा, किं तस्या एव फलदातृत्वात्कर्म व्यर्थमिति, किं वा तदाराधनमपि पुष्पोपहारादिना प्रकारान्तरेणापि संभवति किमग्निहोत्रादिनेति, अथ वा विग्रहवत्या देवताया ऋत्विजामिव सन्निधाय हविस्स्वीकरणाभावे कर्मणो लोपः स्यादिति, आहोस्विदनित्यदेवतार्थत्वं नित्यस्य कर्मणो नोपपद्यत इति यद्वा फलदानात्प्रागपि कर्मप्रीणितदेवतानाशसंभावनया फलालाभशङ्कयेति पञ्चधा विकल्प्याद्यं परिहरति—देवतातत्प्राधान्येति।

1 अयं कुण्डलान्तर्गतः पाठः अधिक इति भाति.

"वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ॥"

इति निषेधेन प्रकारान्तराप्रसक्तेः। ऐन्द्र आग्नेय इत्याद्याराध्याराधननिबन्धनाच्च। विग्रहवत्त्वे देवतानामृत्विजामिव सन्निधाय हविरस्वीकरणे कर्मलोपभिया तदनादरप्रसङ्गस्यापि तदन्तर्धानादिशक्तिकल्पनया केवलमुद्देश्यत्वेन सन्निधानानपेक्षया वा सुपरिहरत्वात् । स्थानाद्युपाधिकस्य कस्यापि नित्यार्थस्य संभवेन तादर्थ्ये सत्यनित्यसंयोगानवकाशाच्च।

एतेन कर्मणां देवताप्रीत्यर्थत्वे फलदानात्प्रागपि तत्प्रीणितदेवतानाशसंभावनया फलालाभशङ्कया कर्मण्यश्रद्धा स्यात्।

## रत्नतूलिका

द्वितीयं परिहरति—वर्णाश्रमाचारवतेति । वर्णाश्रमाचारवता विष्णुराराध्यत इत्युक्त्या वर्णाश्रमधर्माणामेव तदाराधनरूपत्वं गम्यते, नान्यस्य, इति तदितरनिषेधश्चेत्यर्थः। आराध्याराधनेति। ऐन्द्र इत्यादाविन्द्रादीनां देवतात्वं प्रतीयते। तच्च त्यक्तहविः प्रत्युद्देश्यत्वम् । तदुद्देश्यके त्यागे तस्याराध्यत्वं त्यागस्य चाराधनत्वमातिथिपूजादौ क्लृप्तमिति भावः। तृतीयं परिहरति—विग्रहवत्त्व इति । चतुर्थं परिहरति–स्थानाद्युपाधिकस्येति। यथा तत्तत्स्थानोपाधिना पुरोहितः अमात्य इत्यादयो नित्यार्था लोकवेदसिद्धास्तथा इन्द्रादयोऽपीत्यर्थः।

पञ्चमं परिहर्तुमनुवदति—एतेनेति। ननु यदि देवतानाशसंभावनाप्रयुक्तफलालाभशङ्कया [1]अश्रद्धा सा वेदान्तश्रवणेऽपि न [2]निवर्तेत, तत्र देवतायाः प्रधानभूताया नित्यत्वाप्रतीतेः, ततश्च श्रुत-

[1] अश्रद्धरसा ........... न निवर्तन्त इति बहुषु कोशेषु दृश्यते. [2] निवर्तेते—क.

श्रुतवेदान्तानां तु तत्तद्देवतान्तर्यामी सकलकर्माराध्यो निखिलकल्पानुयायी फलदातेत्याश्वासोप[1]पत्तिरिति प्रत्युक्तम्। देवतावादिवेदस्य कथमप्यनित्यसंयोगापरिहारात्। अश्रुतवेदान्तानामपि नरपत्युत्तमर्णन्यायेन फलसिद्ध्याश्वासोपपत्तेः। यथा तत्स्थानस्थोऽन्योऽपि ऋणं दायीति विस्रम्भान्नरपतेरुत्तमर्णो भवति, एवं कल्पान्तरेऽप्यद्यतनेन्द्रवाय्वादिस्थानाधिकृतेन्द्रवाय्वादिदेवता कर्मफलं दास्यति, तस्याः समस्ततत्कार्यकारित्वादिति विश्वासाच्छ्रद्दधानः कर्मणा तत्तद्देवतानामाराधको भविष्यतीति कुतः कर्मण्यश्रद्धासंभावनापि।

अथ वा कर्माराध्यां देवतां व्युत्पादयता जैमिनिना इयदिदमपि व्युत्पाद्यतां, सर्वदेवतान्तर्यामीश्वरो नित्यः फलदातेति। एवंकारमपि कर्मण्यश्रद्धा परिहारिष्यते, न त्वनाभिमतदेवतानिरासः। तथा च गीतासु—

### रत्नतूलिका

वेदान्तस्यापि कर्मण्यश्रद्धा तदवस्थेत्यत आह—श्रुतवेदान्तानां त्विति। देवतावादीति। न तु तदन्तर्यामिपर्यन्तत्वम्, तस्याग्रे निराकार्यत्वात्, तदेतदभिप्रेत्य कथमपीत्युक्तम्। ततश्च तत्परिहाराय स्थानाद्युपाधिना इन्द्रादिर्नित्य आस्थेयः, तस्यैव फलदातृत्वमपीति नाश्रुतवेदान्तानामप्यनाश्वास इत्याह— अश्रुतवेदान्तानामपीति।

कर्मण्यश्रद्धानिरासायेश्वर एव व्युत्पाद्यताम्, किमनाभिमतदेवतानिरासक्लेशेनेत्याह—अथ वेति। सर्वदेवताराधनेऽपि तस्य तस्यान्तर्यामीश्वर एव फलदातेत्यत्र गीतां प्रमाणयति—तथा चेति। तथा च

---

[1] पत्तेरिति—ङ.

"यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान्मयैव विहितान्हि तान् ॥"

इति । वस्तुतस्तु अतिथिप्रीत्यर्थे कर्मण्यातिथ्ये कथमश्रद्धा परिहरणीया जैमिनिना । "अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् तस्य प्रीतिविधानत्वात्" इति हि सूत्रम् । अथ तत्रातिथिप्रीत्यन्तमनुष्ठितं कर्मैव फलदमिति श्रद्धाप्येत, अन्यत्रापि देवताप्रीत्यन्तमनुष्ठितं तथेति श्रद्धाप्यताम्, मा भूदतिथिवद्देवता फलदेति । इयांस्तु विशेषः—एवं कृतेऽतिथिः प्रीयत इति प्रत्यक्षतोऽवगम्यते, शास्त्रेण तु देवतेत्यवगमनीयमिति ।

## रत्नतूलिका

जैमिनेः शास्त्रानुमतमीश्वरस्य फलदातृत्वव्युत्पादनमेव युक्तम्, न तु मन्त्रार्थवादेतिहासपुराणादिविरुद्धो देवतानिरास इति भावः । प्रथमद्वितीयपञ्चमपक्षाणां साधारणं परिहारमाह—**वस्तुतस्त्विति** । **कथमिति** । तत्र प्रधानस्यातिथेः फलप्रदानाशक्तेरिति भावः । तत्प्राधान्ये सूत्रं प्रमाणयति—**अतिथौ तत्प्रधानत्वमिति** । तत्र वस्तुपरिहारमाशङ्कते—**अथ तत्रेति** । नन्वेतावता द्रव्येणातिथिः प्रीयत इति प्रत्यक्षतोऽवगमात् भवत्वातिथ्यमतिथिप्रीत्यन्तं फलायेति, यागेन स्वल्पपुरोडाशादित्यागरूपेण कथं तादृशमहिमशालिन्या देवतायाः प्रीतिः स्यादिति कर्मण्यश्रद्धा स्यादित्यत आह—**इयांस्त्विति** । **शास्त्रेणेति** । "यावदेका," "तृप्त एवैनं" इत्यादिनेत्यर्थः ।

अपि च देवतानिरासाधीनायामाम्नायप्रामाण्यादिसिद्धौ पुनस्तत्सिद्ध्युपायाभावेन तदभ्युपगमबाधः। न चात्र क्षेत्रजयन्यायः; तत्रेष्टार्थव्ययविजितक्षेत्रद्वारार्थान्तरप्राप्तेरविरोधात्, प्रकृते च प्रामाण्यसिद्ध्यर्थमेव निरस्ताया देवतायाः पुनरङ्गीकारे तन्निरासैकजीविततत्सिद्धिविघातात्। आष्टमिकाधिकरणे च देवताराधनरूपत्वात्कर्मणां फलदात्री देवता प्रधानमिति, तत्सामान्यमेव विध्यन्तनियमे हविस्सामान्याद्बलीय इति प्राप्ते— "गुणत्वेन देवताश्रुतिः" इति नाभ्युच्चयमात्रं, गुणत्वस्य द्रव्यसाधारण्येऽपि शब्दोद्देश्य(त्व)मात्रेण रूपेण गुणत्वमिति विशेषविवक्षया गुणत्वमित्यनुक्त्वा "गुणत्वेन देवताश्रुतिः" इति सूत्रणात्। नावमिकाधिकरणे च देवताप्राधान्यनिरासात्

रत्नतूलिका

"अभीष्टार्थव्ययेन" इत्यादिन्यायो नात्र भवतीत्याह—न चात्रेति। ननु तत्रोक्तं "गुणत्वेन देवताश्रुतिः" इत्यभ्युच्चयमात्रम्, "कर्मणस्तदुपाख्यत्वात्" इत्येव मूलयुक्तिरिति तन्निराकरोति—गुणत्वेनेति। शब्दोद्देश्य(त्व)मात्रेणेति। अत्र द्रव्यसाधारणं अप्राधान्यलक्षणं गुणत्वं न विवक्षितम्, किं तु शब्दोद्देश्यत्वमात्रत्वमित्यर्थः। अस्मिन्नर्थे सौत्रं लिङ्गं दर्शयति–विशेषविवक्षयेति। गुणत्वं देवताया इत्यनुक्त्वा "गुणत्वेन देवताश्रुतिः" इति वदतः सूत्रकारस्य पूर्वोक्तमेव गुणत्वमभिमतमित्यर्थः। "विप्रतिपत्तौ हविषा" इत्याष्टमिकाधिकरणेऽपि जैमिनेर्देवताप्राधान्यनिरास एव तात्पर्यमित्यत्रा[1]भ्यासलिङ्गमाह— नावमिकाधिकरणे चेति। देवता वा प्रयोजयेद्धर्मान्, कुतः भोजनस्य तदर्थत्वात्; भोजनं हीदं देवताया यागो नाम; तस्य देवता-

[1] भ्यासं लिङ्ग—च.

"देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्" इति देवताप्राधान्यं पूर्वपक्षयित्वा "अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद्गुणत्वेन देवताश्रुतिः" इति कर्मप्राधान्यं सिद्धान्तमभिधाय "अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्तस्य प्रीतिविधानत्वात्" इत्यतिथिप्रीतिपर्यन्ततयाऽऽतिथ्यविधिवत् देवताप्रीत्यर्थतया [1]कर्मविधानाभावान्न देवताप्राधान्यमित्यभिधानात्, अभ्यासे च तात्पर्यावगमात्। अत एव विग्रहवच्चेतनेदवतानिरासो जैमिनेरार्थिको विवक्षितः, शब्दमात्रोद्देश्यमात्रतया देवतायाः प्राधान्यनिरासाभिप्रायत्वात्।

## रत्नतूलिका

र्थत्वात् देवतायाः प्राधान्यम्। तत्र दृष्टान्तः अतिथिवदिति सूत्रार्थः। अपि वेत्यादिसिद्धान्तसूत्रस्यायमर्थः—अपि वेति पूर्वपक्षव्यावृत्तिः, नैतदस्ति; देवता प्रयोजिका प्रधानामिति, यज्ञकर्म प्रधानं स्यात्, कुतः शब्दपूर्वकत्वात् "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादौ तस्य शब्देन फलकरणतया बोध्यमानत्वात्। न देवता; तस्याः कर्मणि गुणत्वेन श्रुतेरिति सूत्रं तात्पर्यतो व्याचष्टे—अतिथिप्रीतिपर्यन्ततयेति। अतिथौ तत्प्रधानत्वं भोजनापेक्षया प्रधानत्वं तस्य भोजनस्यातिथिप्रीत्यर्थतया विधानात्। कर्मणि तु देवतायाः प्राधान्याभावः; तस्य तत्प्रीत्यर्थतया विधानाभावादित्यर्थ इति भावः। प्राधान्याङ्गीकारानङ्गीकाराभ्यामिव विग्रहवत्त्वचेतनत्वाङ्गीकारानङ्गीकाराभ्यामपि विरोध इत्यभिप्रेत्याह—अत एवेति। आर्थिकत्वमुपपादयति—शब्दमात्रोद्देश्येति। प्राधान्यनिरासेऽभिप्रायो यस्य तत्त्वादित्यर्थः।

---

[1] कर्मण्यधिकाराभावान्न—ङ.

यत्त्वत्र यज्ञकर्मप्राधान्यमङ्गग्राहकतयोच्यते फलसाधनतया च; सिद्धान्तेऽपि देवताप्राधान्ये कर्मणो वैधफलसाधनताहानापत्तेः, "तस्य प्रीतिविधानत्वात्" इत्यपि न यागस्य देवताप्रीत्यर्थत्वाभावादातिथ्यवैषम्यमुच्यते; किं तर्हि येन यावता द्रव्येणातिथिः प्रीयते तेन तावता स पूजनीय इत्यातिथ्यस्य प्रीतिविधानत्वम्, नैवं यागस्य; आज्यचरुपुरोडाशादिभिरेव चतुर्गृहीतद्विरवत्तपरिमितैरेव विधितो देवताप्रीतेरिष्ट-

रत्नतूलिका

अत्र केनचिद्विरोधपरिहाराय जैमिनेरभिप्रायवर्णनं कृतं तद्दूषयितुमनुवदति—**यत्त्वत्रेति**। उच्यत इति। "यज्ञकर्म प्रधानं स्यात्" इति सूत्र इति शेषः। न तु देवतापेक्षयापि प्राधान्यं, येन तन्निरासे तात्पर्यमुन्नीयेतेति भावः। कर्मण एतादृशं प्राधान्यं सिद्धान्तेऽप्यङ्गीकार्यमित्याह—**सिद्धान्तेऽपीति**। **प्राधान्य इति**। तस्याः फलदातृत्व इत्यर्थः। **हानापत्तेरिति**। ततश्चेष्टसाधनत्वस्य [1]विध्यर्थत्वे तस्य कर्मण्यभावेन तस्य विधेयत्वं न स्यादिति भावः। ननु यदि देवता न फलदात्री, किं तु तदाराधनरूपं कर्मैव तत्तत्प्रीत्यन्तं[2]सत्फलदात्रीति जैमिन्यभिमतं स्यात्तर्हि आतिथ्यतुल्यमेव कर्मेति "अतिथौ तत्प्रधानत्वम्" इति सूत्रे तद्वैषम्यप्रतिपादनमसङ्गतं स्यादित्याशङ्क्य तस्य तात्पर्यमाह—**तस्य प्रीतिविधानत्वादित्यपीति**। आतिथ्यस्यातिथिप्रीत्यर्थत्वं यथा लोकप्रमाणगम्यं न तथा यागस्य देवताप्रीत्यर्थत्वम्, किं तु विध्येकगम्यमिति वैषम्यं सूत्रेणोच्यत इति घट्टार्थः। विरोध-

[1] विध्यर्थस्य कर्म-**च. कुं.** [2] तत्तत्फल-**क. च.**

त्वात्, तस्मान्न देवतानिरासाभिप्रायो जैमिनेरिति, तन्न; देवताप्रीत्यर्थत्वे यागस्य तदुद्देश्यत्वाम्नानावगतेऽङ्गवैकल्ये तदसिद्ध्योद्देश्यसिद्ध्यर्थस्य तत्प्रयुक्तत्वात्, देवताया अपि तत्प्रयोजकत्वलक्षणाङ्गग्राहकत्वावश्यंभावात्।

कर्मणि वैधफलसाधनताप्रतिपत्त्यनुबन्धित्वेऽपि फलवद्देवतायाः कर्माराध्यतया प्राधान्योपगमात्। अन्यथा "फलमत उपपत्तेः" इति न्यायविरोधात्। राजानमुपास्वेतिवदमुं यजामुं

रत्नतूलिका

परिहारमुपसंहरति—**तस्मादिति।** **अङ्गवैकल्य इति।** प्रयाजादिरूपाङ्गवैकल्य इत्यर्थः। **तदसिद्ध्येति।** देवताप्रीत्यर्थत्वासिद्ध्येत्यर्थः। तथा च यदि [1]देवताङ्गीक्रियते तदा तस्याः प्रीयमाणत्वेन कर्मभिरुद्देश्यायाः सिद्ध्यर्थमङ्गानुष्ठानमिति देवतैवाङ्गप्रयोजिका स्यान्न कर्मेति भावः।

[2]यदुक्तं देवताप्राधान्ये कर्मणीष्टसाधनताहानिः स्यादिति, तत्रोत्तरमाह—**कर्मणीति।** एतद्देवताकं कर्मेष्टसाधनमिति कर्मणि विधिनेष्टसाधनत्वप्रतीतिदशायां देवताया गुणत्वेऽपि कर्मभिराराधनीयाया आर्थं प्राधान्यं न विहन्यते, यथा अंशत्रयविशिष्टभावनाप्रतीतौ एतद्भाव्यका क्रियेति भाव्यस्याप्राधान्येऽप्यार्थं प्राधान्यं न विहन्यते तद्वत्। ततश्च यागे इष्टसाधनत्वप्रतीतिस्तत्प्रीणितदेवताद्वारेति पर्यवस्यतीति[3] देवता फलदात्रीति भावः। लौकिकदृष्टान्तेनापि कर्माराधितदेवतायाः फलदत्वमिति विधेरभिप्राय इत्याह—**राजानमिति।** अमुं यजामुं

---

[1] देवता नाङ्गीक्रियते—कुं. [2] ननु कर्मणि गुणित्वेनावगताया देवतायाः कथं प्राधान्यम्? प्राधान्ये वा कर्मणीष्टसाधनताहानिः स्यादित्यत आह—कर्मणीति।—क.
[3] यागः फलसाधनं, देवता—क.

यजेति विधेरिष्टदेवता कर्मणैव फलसाधनीत्याभिप्रायावगमाच्च। प्रीतिविधानत्वमपि यागस्य सिद्धान्ते न निवार्यम्; यागस्य देवपूजात्मकत्वात्। "आहुत्यैव देवता हुतादः प्रीणाति" इत्यर्थवादाच्च। इयांस्तु विशेषः—अतिथिप्रीत्यर्थं द्रव्यं लोकतोऽवगम्यते, देवताप्रीत्यर्थं तु विधित इति, न चैतावता प्राधान्यं हीयत इति। अत एवापूर्वाधिकरणविरोधसमाधानमपि निरस्तम्।

### रत्नतूलिका

यजेति यागविधिवाक्यानां पर्यवसितार्थकथनम्। यदुक्तं यागस्य देवताप्रीत्यर्थत्वाभावादातिथ्यवैषम्यं [1]नोच्यत इति तदङ्गीकरोति—प्रीतिविधानत्वमपीति। यदुक्तं प्रीतिविधानत्वस्य लोकावगतत्वानवगतत्वाभ्यां यागातिथ्ययोर्वैषम्यमिति, तदप्रयोजकमित्यभिप्रेत्याह—इयांस्त्विति। ततश्च देवताङ्गीकारे तत्प्रीतिविधानत्वं यागस्यावश्यं वाच्यमित्यातिथ्यतुल्यता स्यात्। अतस्तन्निरास एव तद्वैषम्यं वदतस्तात्पर्यमिति भावः। ननु जैमिनिमतसिद्धान्तयोः सर्वसम्प्रतिपत्तौ विरोधाभावादैक्यं स्यादित्यत आह—न चैतावतेति। कर्माराधितदेवताफलदत्वतदाराधनरूपकर्मफलसाधनत्वाभ्यां विरोध इति भावः। अत एवेति। देवतानिरासतात्पर्योन्नयनादेवेत्यर्थः। देवताया अभावे अपूर्वसंज्ञितमीश्वरप्रसाद एव तत्र द्वारं व्युत्पादितमिति वक्तुमशक्यत्वादिति भावः।

"मध्वादिष्वसंभवादनधिकारं जैमिनिः" इति सूत्रस्य परमते अयमर्थः—मध्वादिषु "असौ वा आदित्यो देव मधु" इत्यादिषु देवानामनधिकारं अधिकाराभावं जैमिनिराचार्यो मन्यते, कुतः? असंभ-

---

[1] नोच्यत इत्यादि तदुपपत्तिमपि वदन्नङ्गीकरोति—प्रीतिविधानत्वमपीति।—क.

यत्तु "मध्वादिष्वसंभवादनधिकारं जैमिनिः" इत्यधिकारनिरासाद्देवतायाः सद्भावो जैमिनेः सूच्यत इति, तत् "ज्योतिषि भावाच्च" इत्युत्तरसूत्रपर्यालोचनाविधुरस्य प्रलापः।

यत्तु ज्योतिषि ब्रह्मण्यधिकारस्य भावान्मध्वादिष्वधिकारो देवानाम्, देवमनुष्यादिसाधारणे ब्रह्मोपासने "तं देवा

रत्नतूलिका

वात्, अन्ये तु मनुष्या आदित्यं मध्वाद्यध्यासेनोपासीरन्; देवादिषूपासकेष्वभ्युपगम्यमानेष्वादित्यः कमन्यमादित्यमुपासीतेत्यादिबाधकैरिति। ततश्च विग्रहवच्चेतनदेवतानभ्युपगमे कस्याधिकारो निरस्येत। अतस्तदभ्युपगमः सूच्यत इत्यर्थः। दूषयति—तज्ज्योतिषीति। उत्तरसूत्रे हि ज्योतिषि द्युस्थाने अचेतने ज्योतिर्मण्डले आदित्यादिशब्दानां भावात्प्रयोगात्। ततश्चादित्यादीनामचेतनत्वान्न ब्रह्मविद्याधिकार इत्युच्यते। ततश्चोभयोर्विरोधपरिहाराय मध्वादिसूत्रे देवतासद्भावमङ्गीकृत्याप्यधिकारनिरासः कृत इति वक्तव्यमिति भावः।

आदित्यादीनां [1]देवतानामचेतनत्वोपहारमुखेन ब्रह्मविद्यायामधिकाराभावपरतया स्वेन सूत्रं व्याख्यातम्, परेण तु सिद्धस्य देवानां ब्रह्मविद्यायामधिकारस्य पुनः कीर्तनाद्विद्यान्तरेषु मध्वादिष्वनधिकार इत्येवं व्याख्यातम्, तद्दूषयितुमनुवदति—यत्तु ज्योतिषीति। ननु ब्रह्मविद्यायामाधिकारमात्रेण कथमन्यत्रानाधिकार इत्यतस्तात्पर्यं दर्शयति—देवमनुष्यादीति। ज्योतिषामपि प्रकाशकं जगज्जीवनसाधनं मुक्तिरूपं तं परमात्मानं देवा उपासत [2]इत्यर्थके वाक्ये अर्थित्वादिना सिद्धस्य देवानां ब्रह्मविद्यायामधिकारस्य पुनः कीर्तनं तेषां विद्यान्तरे अधिकार-

[1] देवाना—क. [2] इत्यादिके—कुं.

ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ” इति देवानामुपासकत्व-वचनस्यान्योपासनानिवृत्तिपरत्वादिति, तन्न ; ज्योतिष्येव भावादिति हि तदा सूत्र्येत । अन्यथा तादर्थ्यानभिव्यक्तेः । अपि च नेदं देवानां ब्रह्मोपासनाधिकारविधिपरम् ; अफलत्वात्, अर्थित्वादेरपर्युदासाच्च स्वत एव भावात् । बृहस्पतिसवादाव-ब्राह्मणादेरिवादेवस्यानधिकारपरत्वायोगाच्च । ब्रह्मप्रतिपादनपरं

रत्नतूलिका

व्यावृत्त्यर्थमिति भावः । “ तं देवा ज्योतिषां ज्योतिः ” इति सूत्र-मूलभूतश्रुतेः किं देवानां मध्वादिष्वनधिकारपरत्वं, अथ वा देवानां ब्रह्मोपासनाधिकारविधिपरत्वं, अथ वा देवातिरिक्तानां ब्रह्मविद्यायामधि-[1]काराभावपरत्वं वेति विकल्प्य नाद्य इत्याह—तन्न ज्योतिष्येवेति । सूत्रेण न्याये सूचिते श्रुतेस्तदर्थकत्वप्रतिपत्तिः, तत्सूचनं च ज्योतिष्ये-वेति [2]सूत्रणे स्यान्नान्यथेति भावः । तादर्थ्यानभिव्यक्तेरिति । श्रुते-रितिशेषः । द्वितीय आह—अपि च नेदमिति । फलाभावमुपपाद-यति—अर्थित्वादेरिति । अर्थित्वादेरिति पञ्चमी । आदिपदेन सामर्थ्यविद्ययोर्ग्रहणम् । एवमधिकारे साधकं भावरूपं विशेषणत्रयमुक्त्वा बाधकाभावरूपं तदाह—अपर्युदासाच्चेति । अत एव पृथगुक्तिरिति बोध्यम् । तृतीय आह—बृहस्पतिसवादाविति । अन्यथा “तदुप-र्यपि बादरायणः संभवात्” इति सूत्रे तदुपरीति ग्रहणं “तद्यो यो देवानां प्रत्यबुद्ध्यत” इत्यादिश्रुतौ मनुष्यग्रहणं च विरुद्ध्येतेति भावः । अत्राद्यः पक्ष एव परेणोक्तः, इतरौ तु संभवमात्रेण निराकरणे दृष्टान्त-तयेति ध्येयम् । स्वाभिमतं श्रुत्यर्थमाह—ब्रह्मप्रतिपादनेति । इदं

[1] कारपरत्वं—कुं. [2] सूत्रेण—क. कुं.

तु "इदं तद्ब्रह्म, यद्देवा उपासत इति मनुष्या उपासीरन्" इति। तत्र निर्निबन्धननियमानुबन्धेनान्योपासनानिवृत्तिपरत्वकल्पनममूलम्। अन्यथा "ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते" इति दर्शनान्मनुष्याणामप्यन्योपासनानिवृत्तिप्रसङ्गात्।

अपि च वाक्यादस्मादेव देवानां ब्रह्मोपासनाधिकारे प्रतिपत्तव्ये तदन्योपासनाधिकाराभावे च [1]वाक्यावृत्तिगौरव-

रत्नतूलिका

तद्ब्रह्मेत्यादिप्रकारेण ब्रह्मणः प्रशंसेति भावः। एवं प्रशंसायाः फलमाह—इति मनुष्या इति। बाधकान्तरं वक्तुमाद्यतृतीयपक्षावनुस्मरति—तत्रेति। उक्तार्थपरे तस्मिन्वाक्य इत्यर्थः। निर्निबन्धनो निर्हेतुकः। अत्रान्यस्या उपासनायाः देवानां निवृत्तिपरत्वकल्पनमिति व्याख्यानेनाद्यपक्षः, अन्येषां देवानां ब्रह्मोपासनानिवृत्तिपरत्वकल्पनमिति व्याख्यानेन तृतीयपक्षश्च संग्रहीत इति ध्येयम्। न केवलं निर्हेतुकल्पनमात्रम्, अपि त्वातिप्रसङ्गोऽपीत्याह—निवृत्तिप्रसङ्गादिति। इदमुपलक्षणम्—अमनुष्यस्य ब्रह्मोपासनानिवृत्तिप्रसङ्गादित्यपि बोध्यम्।

वचनस्यान्योपासनानिवृत्तिपरत्वमङ्गीकृत्यापि दूषणमुक्तम्। इदानीमङ्गीकारं परित्यजति—अपि च वाक्यादस्मादिति। देवास्तमुपासत इत्यधिकारपरतयैकं वाक्यं, तमेवोपासत इति वा, देवा एवोपासत इति वा इतरोपासनाधिकारनिवृत्तिपरतया तदेवावर्तनीयमित्यावृत्तिलक्षणवाक्यभेदगौरवमित्यर्थः। तदन्योपासनाधिकाराभावे चेत्यत्रापि

---

[1] वाक्यापवृत्ति–ग.

मापद्येत। न चार्थित्वसामर्थ्यादिन्यायादेव तदधिकारसिद्धिः ; देवानामर्थित्वादिसिद्धे[1]रेवमादिवादमूलत्वात् । अपि च यत्तदवस्थब्रह्मोपासनं शास्त्रे विहितं, तत्र सर्वत्रैव देवानामधिकारे "तदुपर्यपि बादरायणः संभवात्" इत्येव सिद्धे किं "मध्वादिष्वसंभवादनधिकारं जैमिनिः" इत्यधिकरणारम्भेण। यत्तद्विधासम्भवचोद्यस्य सर्वस्यैवाविशेषोपात्तसंभवन्यायापनेयत्वात् ।

## रत्नतूलिका

पूर्ववद्व्याख्याद्वयेन पक्षद्वयसंग्रहो बोध्यः । न्यायादेवेति । न तु वाक्यादिति नावृत्तिस्तस्येति भावः । वादमूलत्वादिति । तथा च न्यायोत्थापनाय तस्य तत्प्रतिपादकत्वं वाच्यम् । तथा चोक्तदोषस्तदवस्थ इति भावः । यत्तदवस्थेति । कार्यावस्थब्रह्मोपासनं स्वावस्थब्रह्मोपासनं चेत्यर्थः । कार्यकारणोभयावस्थब्रह्मोपासनस्यैतदधिकरणे परेण विधेयत्वाङ्गीकारादिति भावः । ननु देवानां ब्रह्मविद्यायामधिकार इति पूर्वाधिकरणे स्थितेऽपि वस्वादिव्यामिश्रासूपासनासु वस्वादीनामधिकारो न संभवति ; एकस्यैवोपास्योपासकभावानुपपत्तेरिव वस्वादित्वं प्राप्तस्य तत्प्राप्तिलक्षणफलानुपपत्तेश्चेत्यसंभवशङ्कानिरासायेदमधिकरणमित्यत आह—यत्तद्विधेति । स्वावस्थब्रह्मोपासने असंभवशङ्का तत्र निरस्ता । अत्र तु कार्यावस्थब्रह्मोपासने सा निरस्यत इति शङ्कानिवृत्तये—अविशेषोपात्तेति ।

---

[1] रवैवमादि—ग.

न चात्र मधुवाक्यस्य ब्रह्मोपासनपरत्वं प्रतिपाद्यते, "य एतामेवं ब्रह्मोपनिषदं वेद" इत्युपसंहारदर्शनात्, यथाह वृत्तिकारः—"अस्ति हि मध्वादिषु संभवो ब्रह्मण एव सर्वत्र निचाय्यत्वात्" इतीति वाच्यम्; अधिकाराचिन्ताऽसङ्गतिप्रसङ्गात्। न चेह ब्रह्मोपासनपरत्वे कश्चिन्न्यायः सूत्रकृता सूच्यते। ब्रह्मोपनिषदमित्युपसंहारस्य "तद्धैतद्ब्रह्मा प्रजापतय उवाच" इति ब्रह्मप्रवचननिमित्तसमाख्यामात्रविषयत्वेऽप्युपपत्तेः। "सूर्य आत्मा जगतस्तस्थुषश्च" इत्यादित्योपासनस्यापि ब्रह्मोपनिषत्त्वोपपत्तेश्च। तस्माद्ब्रह्मादिव्यामिश्रा-

## रत्नतूलिका

नन्वत्रापि देवानामधिकारासिद्धये ब्रह्मविद्यात्वप्रतिपादनायेदमाधिकरणमित्याशङ्क्य निषेधति—न चात्रेति। ब्रह्मविद्यापरत्वे हेतुमाह—य एतामिति। निचाय्यत्वात् [1]विचार्यत्वादित्यर्थः। अधिकारेति। "शुगस्य" इत्युत्तराधिकरणे "तदुपरि" इति पूर्वाधिकरणे चाधिकारविषये स्थिते सति मध्ये ब्रह्मोपासनत्वव्युत्पादनस्य साक्षादसङ्गतत्वप्रसङ्गादित्यर्थः। ननूपसंहारे स्पष्टं [2]ब्रह्मविद्या त्वेव गम्यते, तदनुसारेण "भावं तु बादरायणोऽस्ति हि" इति सिद्धान्तसूत्रे अस्ति हीत्यनेन वस्वादीनामेव सतां स्वावस्थब्रह्मोपासकत्वमस्तीति न्यायः सूच्यत इति वक्तुं शक्यमित्यत आह—ब्रह्मोपनिषदमितीति। सूर्यः जगतः जङ्गमस्य तस्थुषः स्थावरस्य च आत्मेति श्रुत्यर्थः। तस्थुषश्चेतीत्यनन्तरं सर्वात्मत्वव्यपदेशादिति शेषः। ततश्चादित्योपासनरूपस्यैवास्य ब्रह्मोपनिषत्त्वेन व्यपदेशः, आदित्यस्य सर्वात्मत्वव्यपदेशात्। [3]ततश्च

---

[1] उपास्यत्वादित्यर्थः—च. कुं. [2] ब्रह्मविद्यात्वेऽवगते—च. कुं. [3] तथा च—घ. कुं.

सूपासनास्वधिकारासंभवान्न ब्रह्मविद्याधिकार इत्यभ्युचितवाद-हानेन भूतमये ज्योतिषि भावाच्चादित्यादिशब्दानामर्थित्वादेर-संभवादनधिकारो देवानामिति स्वाभिसन्धिसारेण मन्त्रादि-प्रामाण्याक्षेपेण प्रत्यवतिष्ठते जैमिनिरित्येव युक्तम् ।

यद्यपि संभवादित्येवासंभवशङ्का यावती समाधेया गम्यते, तथापि मन्त्रादिप्रामाण्योपक्षेपेण देवानामधिकारः संभाव्यते । तत्र व्यतिरेकानुपलब्ध्यभावं यौक्तिकमाशङ्क्य

रत्नतूलिका

व्यपदेशोऽन्यथासिद्ध इति भावः । इत्यभ्युचितेति । न हि वस्वादि-व्यामिश्रेषूपासनेष्वसंभवादधिकारो नास्तीत्येतावता यत्र संभवः शुद्ध-ब्रह्मविद्यासु तत्राप्यधिकारो नास्तीति वक्तुं युक्तम् । अतस्तस्याभ्युचि-तत्वमिति भावः ।

"तदुपरि" इति सूत्रे मन्त्रादिप्रामाण्यमभ्युपेत्य देवानां चेत-नानामधिकारः संभवतीति स्वरूपगतासंभवशङ्काव्यावृत्तिः कृता । इदानीं "ज्योतिषि" इति सूत्रे प्रमाणाक्षेपमुखेनासंभवमुद्भाव्य "भावं तु बादरायणः" इति सूत्रेण तन्निरसनेन स एव समर्थ्यत इत्याभिप्रायेण मन्त्रादिप्रामाण्याक्षेपेणेत्युक्तम् । [1]तदेव शङ्कोत्तराभ्यां विशदयति—यद्य-पीत्यादिना । यावतीति । प्रमाणगता स्वरूपगता चेत्यर्थः । "तदु-परि" इति सूत्रे देवानामधिकारोऽस्तीत्युक्त्वा संभवादित्युक्ते तद्गता-संभवशङ्कासमाधानमेव गम्यते ; सन्निहितविषयत्वात् , न तु प्रमाणगतम् ; तस्य व्यवहितत्वादित्याभिप्रेत्य परिहरति—तथापीति । व्यतिरेकेति । व्यतिरेकेणानुपलब्धिर्व्यतिरेकानुपलब्धिः, तस्याभावमित्यर्थः । अनुप-लब्धिर्द्वेधा व्यतिरेकेणान्वयेन वेति । तदुभयमपि प्रामाण्यबीजम् ।

[1] एतदेव—च. कुं.

"विरोधः कर्मणीति चेन्न" "शब्द इति चेन्न", इति परिहृते, पुनः "ज्योतिषि भावाच्च" इति प्रत्यक्षतो व्यतिरेकादप्रामाण्यमाशङ्क्य तत्समाधानेन स एव संभवः समर्थ्यते। भावं तु

रत्नतूलिका

"अर्थेऽनुपलब्धे तत्प्रमाणम्" इति जैमिनिना सूत्रितत्वात्। तत्रानुपलब्ध इति अस्तीत्यन्वयेन नास्तीति व्यतिरेकेण वा अनुपलब्ध इत्यर्थः। तदभावश्चाप्रामाण्यनिदानमिति तदाशङ्केति भावः। "विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्" इति सूत्रस्य "शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्" इति सूत्रस्य चैकदेशः पठितः। तयोरयमर्थः—विग्रहवत्त्वे देवताया ऋत्विजामिव सन्निधाय हविर्भोक्तृत्वं स्यात्, न च तथा दृश्यत इति कर्मणि विरोध इति चेन्न; कुतः, एकस्यापि देवतात्मनोऽनेकप्रतिपत्तिः अनेकरूपापत्तिः संभवति। कथमेतदवगम्यते, दर्शनात्, एकस्या देवताया अनेकरूपतायाः श्रुतिस्मृतिषु दर्शनादिति प्रथमस्य, कर्मणि विरोधाभावेऽपि विग्रहवत्त्वे देवताया अनित्यदेवतासंयोगाद्वेदाप्रामाण्यं स्यात्। ततश्च शब्दे विरोध इति चेन्नातो वैदिकाच्छब्दाद्देवादिकस्य जगतः प्रभवात्। कुत एतत्, प्रत्यक्षानुमानाभ्याम्, श्रुतिस्मृतिभ्याम्। "एत इति वै प्रजापतिर्देवानसृजत" इत्यादिश्रुतिः।

"अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥"

इति स्मृतिरिति। प्रत्यक्षतो व्यतिरेकादिति। ज्योतिष्यादित्यादिशब्दानां प्रयोगविषयप्रत्यक्षाद्धेतोर्देवानां चैतन्यव्यतिरेकात् मन्त्राद्यप्रामाण्यमाशङ्क्येत्यर्थः। अथ वा प्रत्यक्षनिमित्ताद्व्यतिरेकात् अनुपलब्धिव्यतिरेकादप्रामाण्यमाशङ्क्येत्यर्थः। स एवेति। तथा च "तदुपरि"

देवानामधिकारस्य ब्रह्मविद्यायां बादरायणो मन्यते, संभवादेव। अस्ति हि मन्त्रादिप्रामाण्यम्। न हि ज्योतिषि व्यपदेशो मन्त्रादिप्रतिपन्नचेतनदेवता[1]त्मतामपवदति, "ब्राह्मणो यजेत" इत्यादिष्वपि प्रसङ्गादिति न्याय्यतरम्। "फलमत उपपत्तेः", "पुरुषार्थोऽतःशब्दात्" इत्यादौ स्वमतोपक्षेपं परमतमाशङ्क्य समाधानेन तथा सूत्रकारशैलीविज्ञानात्।

रत्नतूलिका

इत्यारभ्यैकमधिकरणमिति भावः। ननु "ज्योतिषि भावाच्च" इत्यचेतने आदित्यादिशब्दप्रयोगस्य का गतिरित्यत आह—**न हि ज्योतिषीति।** ज्योतिस्तादात्म्याभिमानिचेतनदेवतावचना आदित्यादिशब्दाः न ज्योतिर्मात्रवचना इति भावः। एवमनङ्गीकारे बाधकमाह—**ब्राह्मणो यजेतेति।** ब्राह्मणत्वादिजातेर्देहनिष्ठत्वात्तावन्मात्रं शब्दार्थः स्यात्। ततश्च यजेतेति भावनाक्षिप्तयजिकर्तृसामानाधिकरण्यानुपपत्तिः। यदि तत्रात एव देहतादात्म्याभिमानिचेतनवाचित्वं, तर्ह्यत्रापि मन्त्रादिप्रामाण्यात्तदभिमानिचेतनपरत्व[2]मस्त्विति भावः। नन्वेकाधिकरणत्वे "तदुपरि" इति सिद्धान्तेनोपक्रमः कथमित्याशङ्क्य, एवं सूत्रकारशैलीति दृष्टान्तेनोपपादयति—**फलमत इति।** "फलमत उपपत्तेः" इति सिद्धान्तेनोपक्रम्य "धर्मं जैमिनिरत एव" इति परपक्षमाशङ्क्य, "पूर्वं तु बादरायणो हेतुव्यपदेशात्" इति तत्समाधानं कृतम्। तथा "पुरुषार्थोऽतःशब्दादिति बादरायणः" इति स्वमतमुपक्षिप्य, "शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः" इति परमतमाशङ्क्य, "अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्" इत्यनेन समाधानं

[1] त्मकता—ङ.  [2] मस्तीति—कुं.

यत्तु "य एतामवं ब्रह्मोपनिषदं वेद" इति ब्रह्मविद्यात्व श्रवणाद्ब्रस्वादीनामुपास्यत्वप्रतिपत्तेश्च संशये, बुभुत्सितार्थपरीक्षणमिह कार्यमिति, तदिहासङ्गत्यादिना परिहृतम् । प्रातर्दननयनेयं च परस्येति कृतकरणापत्तिश्च, तत्रापि "मामेव विजानीहि", "प्राणोऽस्मि प्रज्ञात्मा" इति श्रवणात् जीवरूपेण प्राणरूपेण स्वरूपेण च परमात्मोपासनं व्याख्यातमिति । यत्पुनर्ब्रह्मसूत्रेषु "धर्मं जैमिनिः" इत्यादेः पूर्वपक्षस्य निरसनीयस्यान्वारुह्यवादत्वमुक्तं, तन्न ; तन्मुख्यसिद्धान्तत्वे बाधकाभावात् ।

रत्नतूलिका

कृतम् । एवमत्रापि "तदुपरि" इति स्वमतेनोपक्रम्य, "ज्योतिषि भावाच्च" इति परमतमाशङ्क्य, "भावं तु बादरायणः" इति तत्समाधानमिति भावः ।

असङ्गत्यादिनेति । अधिकारचिन्ताऽसङ्गतिप्रसङ्गात्, न चेह ब्रह्मोपासनपरत्वे कश्चिन्न्यायः सूत्रकृता सूच्यत इत्यादिनेत्यर्थः । प्रातर्दननयेति । "प्राणस्तथाऽनुगमात्" इति नयनेयमित्यर्थः । इत्थं तदधिकर म्, कौषीतकिब्राह्मणे प्रतर्दनविद्यायां "त्वमेव मे वरं वृणीष्व, थ त्वं मनुष्याय हिततमं मन्यसे" इति प्रतर्दनेनोक्त इन्द्रः "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्व" इत्याह । अत्र हिततमोपासनकर्मतया निर्दिष्ट इन्द्रप्राणशब्दाभिधेयो जीव एव; इन्द्रशब्दस्य जीवविशेषे प्रसिद्धेः, "मामेव विजानीहि" इति तस्योपास्यत्वश्रवणात् । प्राणशब्दस्यापि तत्समानाधिकरणस्य स एवार्थः; "तं मामायुरमृतमुपास्व" इति तस्यैवोपास्यत्वोपदेशादिति पूर्वपक्षे—इन्द्रप्राणशब्दनिर्दिष्टजीवादर्थान्तरभूतं परं ब्रह्मैवोपास्यम् ; "स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः" इति प्राणशब्दनिर्दिष्टस्यैव जीवेष्वसं-

"परं जैमिनिः" इत्यादितदीयसिद्धान्तोपन्यासस्य [1] चान्वारुह्य-वादाविषयत्वात् ब्रह्मसन्न्यासाद्युपगमतन्निरासाभ्यां विप्रतिषेधे-नासामञ्जस्योद्घाटनपरत्वेना[2]प्युपपत्तेर्वा ।

यदपि स्वशास्त्रेऽसूत्रितत्वात् ब्रह्मसन्न्यासाद्यपलापो नेष्टो जैमिनेरिति, तन्न; अत एव ब्रह्मसन्न्यासादेरनिष्टत्वापत्तेः, अक्रियार्थानामानर्थक्यं "सोमविद्याप्रजमृणश्रुतिसंयोगात्" इति

## रत्नतूलिका

भावितानन्दाजरामृतत्वश्रवणात, तस्माज्जीवरूपेण प्राणरूपेण स्वरूपेण च परमात्मोपासनमिति राद्धान्तितम् । तथेहापि वस्वादिरूपेण स्वरूपेण च ब्रह्मोपासनमिति न्यायसाम्यात्कृतकरणमित्यर्थः । ननु ब्रह्मतदुपासन-तत्फलानामभ्युपगम एव तन्मुख्यसिद्धान्तत्वे बाधक इत्याशङ्क्य, वैपरीत्यापादनेन परिहरति—**परं जैमिनिरित्यादीति**। अथ वा नान्वारुह्यवादस्तदीयसिद्धान्तोपन्यासः, किं तु "ब्राह्मेण जैमिनिः" इत्यादौ क्वचिद्ब्रह्माङ्गीकारः क्वचित्तन्निरासः "धर्मं जैमिनिः" इत्यत्र, क्वचित्सन्न्यासाभ्युपगमः "तद्भूतस्य तु नातद्भावः" इत्यत्र, क्वचित्त-न्निषेधः "परामर्शं जैमिनिः" इत्यत्र । अतः परस्परविरोधादसमञ्जसं तन्मतमिति वक्तुं विरोधोद्घाटनार्थमित्यर्थः ।

**अत एवेति**— असूत्रितत्वादेवेत्यर्थः । ब्रह्मसन्न्यासयोरभिमतत्वे तत्सूत्रणमपि स्यादिति भावः । अपलापस्यासूत्रितत्वहेतुरसिद्ध इत्याह—**अक्रियार्थानामिति** । वेदान्तानामक्रियार्थानामानर्थक्यकथनेन ब्रह्माप-लापः सूत्रितः, सोमादीनामृणत्वकीर्तनेनावश्यकर्तव्यताङ्गीकारात्

---

[1] च ब्रह्मसन्न्यासा—ग. [2] प्युपपत्तेः—ग.

ब्रह्मसन्न्यासाद्यपलापस्यार्थतः सूत्रितत्वाच्च । तस्मादर्थविप्रतिषेधाद्धर्मब्रह्मजिज्ञासाशास्त्रभेदसिद्धिरिति । अत्रायमर्थसंक्षेपः—

धर्मब्रह्मविभिन्नप्रमेयचिन्तापरिज्ञानात् ।
धर्मब्रह्मैकार्थ्यं कृत्स्नाम्नायस्य नांशतो द्वितयम् ॥
जैमिनिवेदविभाजोरिष्टं तस्मान्न शास्त्रैक्यम् ।
बहुलाच्चार्थविरोधात्सिद्धः शास्त्रस्य भेदो नः ॥

### अध्ययनविधेरर्थज्ञानफलकत्वनिरासः

अथापि स्यादेकं शास्त्रं धर्मब्रह्मजिज्ञासे, तथापि न क्रमनियमः। यदि ह्यध्ययनविधिरर्थज्ञानपर्यन्तो विचारं प्रयुञ्जीत,

### रत्नतूलिका

सन्न्यासापलापश्चेति विवेकः । शास्त्रभेदमुपसंहरति—**तस्मादिति** । धर्म इति ब्रह्म इति च विभिन्नेत्यर्थः । **जैमिनिवेदविभाजोरिति** । जैमिनिव्यासयोरित्यर्थः ।

धर्मब्रह्मविचारयोः पृथक्प्रस्थितत्वेनैकशास्त्रत्वाभावान्न धर्मविचारानन्तर्यं ब्रह्मविचारस्येत्युक्तम् । इदानीमङ्गीकृत्यापि शास्त्रैक्यं न क्रमनियम इत्याह—**अथापि स्यादिति** । ननु "स्वाध्यायोऽध्येतव्यः" इति विहितमध्ययनं फलमपेक्षमाणं स्वस्य स्वाध्यायशब्दोदितकृत्स्नशाखासंस्काररूपतयाऽक्षरग्रहणप्रभृति यद्यच्छक्यते तत्सर्वं फलत्वेन स्वीकरोतीति अर्थावबोधोऽपि शक्यत्वात्तत्फलम् । ततश्च तत्सिद्ध्यर्थं विधिरेव क्रमविशिष्टस्य स्वाध्यायस्याध्ययनमिव विचारमपि क्रमेणैव प्रयुङ्क्ते । तथा च कर्मविचारप्राथम्यासिद्धिरिति स्यादपीयमाशङ्का मीमांसकस्य, न तु परस्येत्यभिप्रेत्याह—**यदि हीति** । यदि ह्यर्थज्ञानपर्यन्त इत्यनेन वस्तुतस्तत्पर्यन्तता नास्तीति व्यज्यते । तत्राय-

**तत एवाध्ययन इव विचारेऽपि क्रमो नियम्येत । न च तदुभयमध्ययनविधेरिष्टं परस्यापि; "अध्ययनमात्रवतः" इति सूत्रविरोधात् ।**

**कः पुनरत्र दोषः ? अत्राह—अध्ययनविधेरर्थज्ञानपर्यन्तत्वे "आचार्यकुलाद्वेदमधीत्याभिसमावृत्य", "वेदमधीत्य स्नायात्" इति श्रुतिस्मृत्योस्तदैकार्थ्येन कृत्स्नवेदार्थज्ञानस्य**

## रत्नतूलिका

माशयः—"स्वाध्यायोऽध्येतव्यः" इति तव्यप्रत्ययेन तस्य साध्यत्वं प्रतीयते । तच्चाप्यतयेति तदाप्तिरेवाध्ययनफलम्, न त्वर्थज्ञानम् । तथा सति राज्ञो वैश्यस्तोमबृहस्पतिसवसत्राणां; वैश्यस्य च बृहस्पतिसवाश्वमेधसत्राणां चाध्ययनं न स्यात्; तयोस्तदंशार्थज्ञानस्याप्रयोजकत्वात् । अतस्तत्राक्षरावाप्तेरेव प्रयोजनत्वं वाच्यम् । तथा सति सर्वत्रैकरूप्येण तदेव प्रयोजनमस्त्विति मीमांसकस्यैवेयमाशङ्का संभवति न त्वन्यस्येत्येतद्विशदयति —न च तदुभयमिति । अर्थज्ञानपर्यन्तत्वं विचारप्रयोजकत्वं चेत्यर्थः । अपिशब्दः सिद्धान्तिसमुच्चयार्थः । "आचार्यकुलाद्वेदमधीत्याभिसमावृत्य कुटुम्बे" इत्यत्राध्ययनमात्रवत एव कर्म विधीयते, न तु वेदार्थज्ञानवतः; येन विद्या कर्माङ्गं स्यात् । "वेदमधीत्य" इत्यध्ययनमात्रप्रतीतेस्तस्यार्थावबोधपर्यन्तत्वाभावादिति सूत्रार्थः ।

अर्थज्ञानपर्यन्तत्वे स्वाभिमतं दोषं वक्तुं तत्र परोक्तं दोषं दूषयितुमनुवदति——**अत्राहेति** । **तदैकार्थ्येनेति** । अध्ययनविध्यैकार्थ्येनेत्यर्थः । **यज्ञाद्यनुष्ठानेति** । अधीत्याभिसमावृत्येत्यत्र समावर्तनस्य सर्वयज्ञाद्यनुष्ठानहेतोः सर्वोपलक्षकत्वमिति भावः । अथवा अधीत्याभिसमावृत्य धार्मिकान्विदधदिति सर्वधार्मिकसंबन्धोऽध्ययन-

यज्ञाद्यनुष्ठानशेषत्वेन विनियोगादात्मब्रह्मशब्दसामानाधिकरण्येन वेदान्तेषु ब्रह्मज्ञानस्य सम्प्रतिपन्नकर्त्रात्मद्वारा प्रोक्षणादेरिव व्रीह्यादिद्वारा कर्मशेषत्वोपपत्तेः, असम्प्रतिपन्नातिरिक्तात्मकल्पने तज्ज्ञानस्य कर्मसु विनियुक्तस्य समुद्रमनोध्यानवददृष्टार्थत्वात्, दृष्टसंभवेऽदृष्टकल्पनायोगात्, न जीवाधिकोपदेशो वेदान्ते-

## रत्नतूलिका

स्येति भावः। ननु ब्रह्मज्ञानस्य कथं कर्मणि विनियोगः, अकिंचित्कुर्वतस्तस्याङ्गत्वायोग्यत्वादित्यत आह—**आत्मब्रह्मशब्देति**। "आत्मा श्रोतव्यः" इति श्रवणविधिवाक्ये आत्मशब्दः श्रुतः, "तद्विजिज्ञासस्व" इति तद्विधायकवाक्यान्तरे ब्रह्मशब्द इत्युभयोरेकविध्यन्वयिनोः सामानाधिकरण्यमित्यर्थः। अथवा "अयमात्मा ब्रह्म" इत्यत्र सामानाधिकरण्यमित्यर्थः। अस्तु सामानाधिकरण्यं, तथापि कथं विद्यायाः कर्माङ्गत्वोपपत्तिरित्यत आह—**ब्रह्मज्ञानस्येति**। आत्मब्रह्मसामानाधिकरण्यात्तज्ज्ञानमेव कर्त्रात्मज्ञानमिति भावः। **व्रीह्यादिद्वारेति**। यथा द्रव्यसंस्कारत्वेन तद्द्वारा प्रोक्षणं कर्माङ्गम्, तथा कर्तृसंस्कारत्वेनात्मज्ञानमित्यर्थः। ननु वेदान्तेषु कत्रतिरिक्त आत्मोपादिश्यते "यः सर्वज्ञः" इत्यादौ, अतः कथं तस्य ज्ञानं कर्माङ्गं स्यात्, अकर्तृसंस्कारकत्वात्, अतः कर्मणि विनियोगोऽनुपपन्न इत्यत आह—**असम्प्रतिपन्नेति**। **अदृष्टार्थत्वादिति**। तथा च तत्कल्पनेन विनियोगानुपपत्तिरिति भावः। अतिरिक्तात्मकल्पन इत्यनेन वस्तुतस्तत्कल्पनमयुक्तम्, तथा सत्यदृष्टार्थत्वापातादिति सूचितं, तं पक्षं दृढयति—**दृष्टसंभव इति**। **न जीवाधिकोपदेश इति**। "यः सर्वज्ञः सर्ववित्" इत्यादिस्तत्तद्देहपरिग्रहे तस्य तस्य ज्ञानं जीवस्य संभवतीति कर्त्रात्मन एव स्तुतिरिति

**ष्वित्यप्रामाणिकेश्वरविचाररूपं शास्त्रमनारम्भणीयं प्राप्नुयात्। [1]अक्षरग्रहणपर्यन्तत्वे तु तस्य कर्मस्वर्थज्ञानस्याविनियोगेन कर्मानुष्ठायिजीवातिरिक्तात्मप्रतिपादनसंभवात् प्रामाणिकपरमात्मविचाररूपं शास्त्रमारम्भणीयं स्यादिति।**

**अत्रेदं वक्तव्यम्—अध्ययनविधावर्थज्ञानपर्यन्तेऽपि कथमर्थज्ञानस्य कर्मशेषतावगतिरिति। न हि क्त्वाश्रुतिर्विनियोजिका; "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यादावपि प्रसङ्गात्। श्रुतिलिङ्गाद्यन्यत्त्वेन तद्वतो विधानस्यापि लिङ्गमात्रत्वात्। सामर्थ्यं तु तत्तत्कर्मानुष्ठाने तत्तज्ज्ञानस्यैवेत्यात्मज्ञानस्य तच्छे-**

## रत्नतूलिका

नेश्वरे प्रमाणमिति भावः। अर्थावबोधपर्यन्तत्वभावे न पूर्वोक्तदोष इत्याह—**अक्षरग्रहणेति**।

किं श्रुत्या तदङ्गतावगतिः, उत लिङ्गेनेति विकल्प्य नाद्य इत्याह—**न हि क्त्वाश्रुतिरिति। प्रसङ्गादिति।** "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यत्र क्त्वाश्रुत्या दर्शपूर्णमासयोरपि सोमाङ्गता स्यात्, तथा च "उत्पत्तिकालविशये कालः स्याद्वाक्यस्य तत्प्रधनात्वात्" इति चातुर्थिकाधिकरणविरोध इति भावः। ननु "आचार्यकुलाद्वेदमधीत्याभिसमावृत्त्य" इत्यादिश्रुत्या विद्यावतः कर्मविधानात्तस्याः कर्माङ्गत्वमित्यत आह—**श्रुतिलिङ्गाद्यन्यत्वेनेति। लिङ्गमात्रत्वादिति।** चिह्नमात्रत्वादित्यर्थः। तथा च श्रुत्या लिङ्गेन वाङ्गत्वेऽवगते अत एव तद्वतो विधानमप्युपपन्नमिति तदपि चिह्नतया वक्तुं शक्यम्, न तु तस्याङ्गत्वबोधकत्वमिति भावः। वस्तुसामर्थ्यरूपं विनियोजकं लिङ्गमप्यत्र नास्तीति द्वितीयं कल्पं दूषयति—**सामर्थ्यं त्विति। तत्तज्ज्ञानस्येति।** अनुष्ठेयकर्मज्ञानस्येत्यर्थः। ननु तत्तदनुष्ठेयज्ञान-

[1] अर्थग्रहण—ग.

**षत्वासिद्धेः। तस्यापि पारलौकिकफलकर्मानुष्ठापनसामर्थ्येऽप्यधिकोपदेशात्। न ह्यपहतपाप्मादिलक्षणात्मज्ञानमपि तदौपयिकम्; केवलव्यतिरेकाभावात्। तज्ज्ञानविनियोगविध्यभावे सति [1]तद्दृष्टार्थत्वायाधिकोपदेशान्यथासिद्धेरनवकल्पनात्। तत्सामर्थ्यस्य च तदन्यथासिद्ध्यधीनत्वात्। आत्मब्रह्मशब्दसामानाधिकरण्यं च ब्रह्मरूपावसानमपि स्यादिति।**

### रत्नतूलिका

वह्न्येहाद्यतिरिक्तकर्त्रात्मज्ञानस्यापि पारलौकिककर्मानुष्ठापने सामर्थ्य[2]मस्त्विति शङ्कते—**तस्यापीति**। दूषयति—**अधिकोपदेशादिति**। **केवलेति**। केवले अधिकात्मज्ञानाभाव व्यतिरेकाभावात्, कर्मानुष्ठानव्यतिरेकाभावादित्यर्थः। ततश्च कार्यव्यतिरेकप्रयोजकव्यतिरेकप्रतियोगित्वाभावान्न कारणमित्यर्थः। नन्वधिकोपदेशेऽन्यथासिद्धिरुक्तेत्यत आह—**तज्ज्ञानविनियोगेति**। नन्वात्मज्ञानस्य पारलौकिकानुष्ठापनसामार्थ्यमेव विनियोजकमित्यत आह—**तत्सामर्थ्यस्य चेति**। तथा च सामर्थ्येन विनियोगे सिद्धे तद्दृष्टार्थत्वायाधिकोपदेशान्यथासिद्धिः, तस्यां च सत्यां सम्प्रतिपन्नकर्त्रात्मविषयकत्वात् ज्ञानस्य [3]सामर्थ्यसिद्धिरिति चक्रकाश्रयः स्यादिति भावः। यदुक्तमात्मब्रह्मसामानाधिकरण्यात् ब्रह्म कर्त्रात्मैवेति, तत्राह—**आत्मब्रह्मशब्देति**। जीवस्वरूपपर्यालोचनायां ब्रह्म पर्यवस्यतीति स्वरूपाभेदपर्यवसायिसामानाधिकरण्यमित्यर्थः।

अध्ययनविधेरर्थज्ञानपर्यन्तत्वे गुरुकुलादसमावृत्तस्यैव कृत्स्नवेदार्थविचारः प्रसज्येत, दृष्टवैदुष्यरूपफलसिद्धयेऽवहननविधेरवहननावृत्तिपर्यन्ततया तदाक्षेपकत्ववदर्थज्ञानरूपदृष्टफलसिद्धयेऽध्ययनविधे-

---

[1] तदद्दृष्टा—ग. [2] मस्तीति—च. कुं. [3] सामर्थ्यसभव इति—कुं.

वयं तु ब्रूमः—अध्ययनविधेरर्थज्ञानपर्यन्तत्वे गुरुकुलाद्-समावृत्तस्यैव दृष्टफलार्थज्ञानाय विचार आक्षिप्येत, "वेदम-धीत्य" इति क्त्वाश्रुतेरानन्तर्यमनादृत्य पूर्वकालत्वमात्रवृत्त्युपपत्तेः। स्नानाभिसमावृत्त्योर्वा गुरुकुलवासवर्जमस्नानादिनियमनिवृत्ति-लक्षणत्वाश्रयणात्। यथाह—वार्तिककारः—

"इहास्नानादिनियमो यः कृतो ब्रह्मचारिणः।
अवधित्वमनाश्रित्य सोऽवसानमपेक्षते॥
ततोऽपेक्षावशात्स्नानमस्नानादिनिवर्तनम्।
विरोधसाहचर्याभ्यां दृष्टार्थत्वाय लक्षयेत्"॥ इति॥

## रत्नतूलिका

विचारपर्यन्ततया तदाक्षेपकत्वं स्यात्, ततश्च वेदान्तविचारे सन्न्यासाङ्गतया तदानीमेव सन्न्यासोऽनुष्ठेयः स्यात्, तथा च पुनर्विवाहाद्यभावात् कर्मवि-धीनामननुष्ठानलक्षणाप्रामाण्यं स्यात, अतो नार्थज्ञानपर्यन्तोऽध्ययनविधि-रिति स्वमतमाह—**वयं त्विति**। ननु "वेदमधीत्याभिसमावृत्त्य" इत्यादाव-ध्ययनानन्तरं समावर्तनं गम्यते, तच्चाध्ययनं गुरुमुखोच्चारणानूच्चारणरूपम्, अतः कथमन्तराले विचाराक्षेप इत्यत आह—**वेदमधीत्येति**। "समानकर्तृकयोः पूर्वकाले" इति स्मरणात् पूर्वकालत्वं क्त्वाप्रत्यय-स्यार्थः, आनन्तर्यं त्वौत्सर्गिकमिति भावः। अधीत्य स्नास्यन् अधीत्याभिसमावृत्त्येत्यादिनाध्ययनानन्तरं न स्नानं गुरुकुलान्निवृत्ति-र्विधीयते, येनोक्तदोषः स्यात्, किं तु गुरुकुलवासं वर्जयित्वा इतरेषा-मस्नानमध्वनशनादीनां नियमनान्निवृत्तिर्लक्षणया विधीयत इति, तथा च गुरुकुले स्थितस्य वेदार्थविचार उपपद्यत इति पक्षान्तरमाह—**स्नानाभिसमावृत्त्योर्वेति**। **अवधित्वं** अवधिसत्त्वमनपेक्ष्य यः कृत इत्यन्वयः। लक्षणायां शक्यार्थसंबन्धमाह—**विरोधेति**। स्नानस्या-

अध्ययनविध्येकार्थतया वेदमधीत्येत्यर्थज्ञानावधिकाध्ययनानन्तरमभिसमावृत्तिविरोधाच्च । सर्वथैव वेदान्तविचारे शमदमसन्न्यासादिसाधनोपदेशानर्थक्यम् ।

अथाध्ययनविधिरर्थज्ञानाय विचारं प्रयुञ्जानोऽन्यत्र निरपेक्षोऽपि ब्रह्मविचारं शमादिसाधनापेक्षः प्रयोक्ष्यते शाखाभेदा-

रत्नतूलिका

स्नाननियमेन विरोधित्वं संबन्धः तन्निवृत्त्या साहचर्यमिति विवेकः । दृष्टार्थत्वायेति लक्षणाप्रयोजनमुच्यते । स्नानविधाने अदृष्टार्थता स्यात् । अस्नानादिनियमस्यावधिसापेक्षस्याध्ययनसमाप्तिरूपावधिविधाने दृष्टार्थतेति भावः ।

"अधीत्याभिसमावृत्त्य" इत्यादावध्ययनं गुरुमुखोच्चारणमेव, न त्वर्थज्ञानपर्यन्तमित्यङ्गीकृत्योक्तम् । इदानीमङ्गीकारं परित्यजति—अध्ययनविध्येकार्थतयेति । अस्तु तावद्विचाराक्षपकत्वम्, को दोष इत्यत आह—सर्वथैवेति । आनन्तर्यमनपेक्ष्याध्ययनोत्तरकालं स्नानविधिः, अस्नाननियमानिवृत्तिः, अर्थज्ञानावधिकाध्ययनानन्तरमभिसमावृत्तिरिति प्रकारत्रयेऽपीत्यर्थः । साधनोपदेशानर्थक्यमिति । कर्मानुष्ठानाय विवाहेच्छोः सन्न्यासादिविधानेऽपि तदनुष्ठानासंभवेनानर्थक्यमित्यर्थः । तथा च तत्सार्थक्यायाध्ययनविधिर्नार्थज्ञानपर्यन्तः, वेदान्तविचारश्च पृथग्विधिविधेय इत्यङ्गीकार्यमिति भावः ।

आशयमविद्वान् साधनोपदेशसार्थक्यं शङ्कते—अथाध्ययनविधिरिति । अन्यत्रेति । कर्मविचार इत्यर्थः । अन्यत्र निरपेक्षस्याप्यन्यत्र सापेक्षत्वे दृष्टान्तमाह—शाखाभेदेति । शाखाभेदः अथर्वशाखाविशेषः । शिरोव्रतं शिरस्यङ्गारपात्रधारणम् । "शिरोव्रतं विधिवद्यैस्तु चीर्णम्" इति दर्शनादिति भावः । अध्ययनविधिः

ध्ययनमिव शिरोव्रतादिसापेक्ष इति चेन्न ; कृत्स्नकर्मविधीनामननुष्ठानलक्षणाप्रामाण्यप्रसङ्गात् , प्रागेवोपनिषदर्थविचारौपयिकतया सन्न्यासादिसाधनानुष्ठाने पुनर्निवेशाभावात् । "अरण्यमियात् न पुनरेयात्", "सन्न्यस्याग्नीन्न पुनरावर्तयेत्" इति श्रवणात् ।

"आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ।
प्रायश्चित्तं न पश्यामि येन शुद्ध्येत्स आत्महा ॥"

इति निन्दास्मरणाच्च । आह च सूत्रकारः—"तद्भूतस्य तु नातद्भावः" इति । सन्न्यासश्च श्रवणाङ्गमित्यग्रे वक्ष्यते । अथोच्येत—धर्मविचारानन्तरमेवोपयम्य कर्मविधयोऽनुष्ठास्यन्ते-कालान्तरे च सन्न्यासादिसव्यपेक्षोऽप्यध्ययनविधिरुपनिषदर्थविचारं प्रयोक्ष्यत इति, तथा सति वेदैकदेशमविचार्याचार्यकुला-

रत्नतूलिका

[1]शमादिसाधनसापेक्षो ब्रह्मविचारं प्रयोक्ष्यत इति वदतः कोऽभिप्रायः किमक्षरग्रहणानन्तरं धर्मं विचार्य सन्न्यस्य वेदान्तविचारे प्रवृत्तिः, किं वा विचार्य धर्ममनुष्ठाय ब्रह्मविचारावसरे प्राप्ते प्राक्सन्न्यासानुष्ठानमिति। तत्राद्यं दूषयितुमाशयमुद्घाटयति—कृत्स्नकर्मेति । तदेवोपपादयति—प्रागेवेति । कर्मानुष्ठानात्प्रागित्यर्थः । निवेशो विवाहः । नैष्ठिकं धर्ममारूढो यः प्रच्यवत इत्युक्त्या उत्तरोत्तराश्रममारूढस्य न पूर्वाश्रमावरोहणमिति गम्यत इति भावः । स्यादेतदेवं, यदि विचाराय सन्न्यासोऽवश्यानुष्ठेयः स्यात् , न त्वेतदस्तीत्यत आह—सन्न्यासश्चेति । द्वितीयं शङ्कते—अथोच्येतेति । अस्मिन्पक्षे किं विचारावसानमध्ययनम् , किं वावृत्त्या गुरुमुखोच्चारणमात्रमिति विकल्पं हृदि [2]निधायाद्यं दूषयति — तथा सतीति ।

---

[1] शमादिसापेक्षो–कुं. [2] कृत्वाद्यं–कुं.

दभिसमावर्तमानस्याध्ययनविध्यनुष्ठानमन्तराले विहितमिति "वेदमधीत्य स्नायात्" इत्यादि विरुद्ध्येत ।

अथावृत्त्या गुरुमुखोच्चारणानूच्चारणस्याध्ययनशब्दत्वप्रसिद्धेस्तस्य च नान्तरीयकाक्षरग्रहणपर्यन्तस्य साङ्गस्य करणस्य निष्पत्त्यैवाध्ययनविधिचारितार्थ्यात्, फलनिष्पत्तेरविध्यधीनत्वादधीत्य समावृत्तौ न विरोध इति चेत्,

रत्नतूलिका

द्वितीयं शङ्कते—अथावृत्त्येति । आवृत्तिर्नाध्ययनशब्दार्थकोटिनिविष्टतयोक्ता, किं त्वधीतस्य स्वाध्यायस्य ब्रह्मयज्ञादौ विनियोगादक्षरावाप्तिपर्यन्तामावृत्तिमुपक्षिपत्यध्ययनविधिरिति तदुक्तिरिति द्रष्टव्यम् । अत एव वक्ष्यति "अदृष्टार्थत्वेऽपि गुरुमुखोच्चारणानूच्चारणरूपस्याध्ययनस्य ब्रह्मयज्ञादौ स्वाध्यायविनियोगबलेनावृत्त्याक्षेपात्" इति । अध्ययनशब्दो यस्य तत्त्वप्रसिद्धेरित्यर्थः । यदन्तरा यन्न भवति तन्नान्तरीयकम् । अवर्जनीयोत्पत्तिकमिति यावत् । अध्ययनसंस्कृतस्य साङ्गस्वाध्यायस्य ब्रह्मयज्ञादौ विनियोगबलादक्षरग्रहणपर्यन्तावृत्तावेवाध्ययनविधिश्चरितार्थ इत्यक्षरग्रहणं नान्तरीयकम् । अत एवाङ्गानामप्यध्ययनसिद्धिरिति भावः । ननु विधिना फलाय व्यापारे पुरुषो नियुज्यते, फलं चाध्ययनविधेरर्थावबोध इति, तन्निष्पत्त्या विधिचारितार्थ्यं वाच्यम्, अतो न विचारात्पूर्वं समावृत्तिरित्यत आह—फलनिष्पत्तेरिति । सत्यं विधिः फलाय पुरुषं नियोजयतीति, तथापि यन्निष्पत्तिर्विधिं विना न सिद्ध्यति यच्च पुरुषव्यापारगोचरस्तत्रैव पुरुषं प्रेरयति, फलनिष्पत्तिस्तु विधिं विनापि [1] रागादेव पुरुषस्य संभवति, न वा फलं पुरुषव्यापारगोचरः, किं तु करणे विधिनानुष्ठापिते फलं सिद्ध्यतीति न तत्र विधिव्यापार इत्यर्थः ।

[1] योगादेव—कुं.

एवं तर्हि वेदार्थविचारो नाध्ययनविधिनानुष्ठाप्येत। उपद्रष्टृवचनादिनाप्यनुष्ठानसंभवे चानियतकर्तव्यो विचारः प्रसज्येत। तत्र च वेदमधीत्याभिसमावृत्त्येत्याद्यवगतवेदाध्ययनानन्तरकालीनगुरुकुलावसानस्य बाधेन तदनन्तरविचारकर्तव्यतापरं "अथातो धर्मजिज्ञासा" इति सूत्रमुपरुध्येत। अत्र सामान्यज्ञानाधीनधर्मविशेषजिज्ञासायामन्वयव्यतिरेकासिद्धहेतोरध्ययनानन्तर्यस्यावाच्यत्वात्, अनन्तरधर्मजिज्ञासाविरोधिगुरुकुलावसाननिवृत्तेरेवाथशब्दलक्ष्यत्वात्। यथाह भाष्यकारः—"अधीते वेदे द्वयमापतति गुरुकुलाच्च समावर्तितव्यम्, वेदवाक्यानि विचारयेदित्येवमर्थोऽयमुपदेश" इति।

## रत्नतूलिका

ननु मास्त्वध्ययनविधिना विचारानुष्ठापनम्, अनुष्ठेयधर्मज्ञानराग एव तदनुष्ठापकोऽस्त्वित्यत आह—उपद्रष्टृवचनादिनेति। अनुष्ठानसंभव इति। कर्मणामिति शेषः। अस्त्वनियतकर्तव्यत्वम्; तथापि को दोष इत्यत आह—तत्र च वेदमधीत्येति। ननु सूत्रे वेदाध्ययनानन्तर्यं विचारस्य प्रतीयते, तच्चानियतकर्तव्यत्वेऽप्यविरुद्धम्, यदा रागाद्विचारः क्रियते तदाध्ययनानन्तरमेवेति वक्तुं शक्यत्वात्, अतो न सूत्रोपरोध इत्यत आह—अत्र सामान्येति। सामान्यज्ञानं अज्ञानावच्छेदकतया धर्मज्ञानम्। अनन्तरेति। वेदाध्ययनादनन्तरा या धर्मजिज्ञासा तद्विरोधि यत गुरु[1]कुलावसानं तन्निवृत्तेरित्यर्थः। आनन्तर्यवचोयुक्तिरत्र सूत्रे आश्रितैव मानान्तरप्राप्तार्थैव लक्ष्यते ज्ञायते। अतस्तन्न वक्तव्यमिति भावः।

---

[1] कुलवासनं.

वार्तिककारोऽपि—

"आनन्तर्यवचोयुक्तिराश्रितैवात्र लक्ष्यते ।
श्रुतार्थं तु परित्यज्य लक्षणार्थो विधीयते ॥
प्रतीता धर्मजिज्ञासा वेदाध्यायादनन्तरा ।
तत्कालस्यावरुद्धत्वात्स्नानाभावं हि लक्षयेत् ॥" इति ।

स्नानमत्र गुरुकुलनिवृत्तिः समावर्तनम् । "वेदमधीत्य स्नायात्" इति स्मृतेः "वेदमधीत्याभिसमावृत्त्य" इति श्रुत्यैकार्थ्यात् ।

रत्नतूलिका

कस्तर्ह्यथशब्दार्थ इत्यत्राह—श्रुतार्थं त्विति । अध्ययनधर्मविचारयोरानन्तर्यमित्यर्थः । लक्षणया योऽर्थः गुरुकुलवास[1]निवृत्तिरूपः स बोध्यत इत्यर्थः । लक्षणाबीजं शक्यसंबन्धं प्रयोजनं च दर्शयति—तत्कालस्येति । अवरुद्धत्वात् स्नानेनेति शेषः । तथा चानन्तर्यस्य निवृत्तिप्रतियोगिनो गुरुकुलावसानस्य च विरोधित्वं संबन्धः । गुरुकुलादसमावृत्तिस्तत्प्रयोजनमिति भावः । ननु भाष्ये "गुरुकुलान्मा समावर्तिष्ठ" इत्युक्त्या समावर्तननिवृत्तिर्लक्ष्यत इति गम्यते, युक्तं च तथा; समावर्तनस्यैवानन्तर्यविरोधित्वात्, अतः "स्नानाभावं हि लक्षयेत्" इति वार्तिकं भाष्यविरुद्धमित्यत आह—स्नानमत्रेति । तत्र हेतुमाह—वेदमधीत्येति । यत्प्रसक्तं तन्निवृत्ति[2]लक्षणया, प्रसक्तं च स्मृत्या स्नानं श्रुत्याभिसमावर्तनमिति गम्यते । ततश्च तयोर्विरोधे श्रुत्यनुसारेण स्नायादित्यस्य समावर्तनपरत्वमित्यर्थः । गुरुमुखोच्चारणानूच्चारणमध्ययनमित्यस्मिन्पक्षेऽप्यध्ययनविधेर्विचाराक्षेपकत्वमवहननविधेरावृत्त्याक्षेपकत्वनिदर्शनेनोपपादयन्नर्थज्ञानपर्यन्तत्वे बाधक-

---

[1] निवृत्त्यानन्तर्यरूपः. [2] लक्षणीयं-कुं

तस्माद्ध्ययनविधेरर्थज्ञानफलत्वे फलनिष्पत्तेरविध्यधीनत्वेऽपि दृष्टफलार्थज्ञानस्य साङ्गाध्ययनेऽपि विना विचारमनुत्पत्तौ सर्वौषधावहननवत् सकृत् द्विस्त्रिर्वा व्रीह्यवहननेऽपि विनाऽऽवृत्तिं दृष्टफलतण्डुलानुत्पत्ताविवातत्फलत्व[1]शङ्काया अवहन्तिविधेरावृत्त्याक्षेपपर्यन्ततयेवाध्ययनाविधेर्विचाराक्षेपपर्यन्ततया समाधेयत्वात् , विचारावसाने तस्मिन्नौपनिषदा वादाः कथमपि धर्मैकार्थाः

रत्नतूलिका

कमुपसंहरति—तस्मादिति। "व्रीहीनवहन्ति" इत्यवहननं विहितम् , तच्च मुसलोद्यमननिपतनरूपम् , अतस्तस्य सकृदनुष्ठानेऽपि विधिश्चरितार्थः। यथा चयने "उलूखलमुपदधाति" इति विहितोपधानस्योलूखलस्य संस्कारत्वेन "सर्वौषधस्य पूरयित्वावहन्ति" इत्यवहननविधिः सकृद्द्विर्वा मुसलोद्यमननिपतनाभ्यां चरितार्थस्तथायमपीति। तथापि तस्य फलाकाङ्क्षायां सर्वौषधावहननस्थलेऽसंभावितमपि क्रत्वपेक्षितं दृष्टं तण्डुलनिष्पत्तिरूपं स्वीक्रियते। तस्यावृत्तिमन्तरा निष्पत्तेरतत्फलत्वाशङ्का भवति। सा अश्रुतावृत्तिपर्यन्तताक्षेपेण समाधेयेत्येकादशे "क्रियाणामर्थशेषत्वात्प्रत्यक्षे तन्निवृत्त्या अपवर्गः स्यात्" इत्यधिकरणे स्थितम्। तद्वदत्राप्यध्ययनं गुरुमुखोच्चारणानूच्चारणरूपम्। अतस्तावन्मात्रानुष्ठानेनाध्ययनविधिश्चरितार्थः। तथापि तस्य फलाकाङ्क्षायां दृष्टमर्थज्ञानं फलं स्वीक्रियते। तच्च विचारं विना साङ्गाध्ययनेनापि न संभवतीत्यतस्तत्फलत्वाशङ्का भवति। सा चाश्रुतविचाराक्षेपेण समाधेयेति घट्टतात्पर्यार्थः।

एवं विचाराक्षेपमुपपाद्यार्थज्ञानपर्यन्तत्वे बाधकमाह—विचारावसान इति। कथमपीति। [2]अर्थवादनयनेयेन विध्येकवाक्यत्वादि-

[1] शङ्कया—क. [2] अर्थवादनयेन—कुं.

कल्प्येरन्निति "आथातो ब्रह्मजिज्ञासा" इति नारभ्येत। पार्थगर्थ्येऽपि वा धर्मजिज्ञासैकाधिकारितया सन्न्यासाद्यपेक्षायोगात् "अथातो ब्रह्मजिज्ञासा" इति नारभ्येत, ब्रह्मार्थविचाराय पृथगारम्भेऽपि ब्रह्मजिज्ञासेत्येव स्यात्।

अथ वैधे भागद्वयविचारे युगपत्प्राप्तेऽशक्यत्वात्क्रमापेक्षायामध्ययनक्रमेण पूर्वभागे विचारितेऽवसरदानायाथातश्शब्दावित्युच्येत, फल्गुफलः सूत्रभागः कल्प्येत। तस्मादौपनिषदविचारस्य विशिष्टाधिकारिकत्वात् अध्ययनविधेरर्थज्ञानफलत्वे तदयोगात् अक्षरावाप्तिमात्रफले तस्मिन्नापातप्रतिपन्नफलवदर्थनिर्णयाय यथाधिकारं यथाविषयं च विचारारम्भ उपपद्यत इति।

## रत्नतूलिका

प्रकारेणेत्यर्थः। पार्थगर्थ्येऽपि वेति। पृथक्प्रयोजनत्वेऽपि वेत्यर्थः। सन्न्यासाद्यपेक्षायोगादित्यत्र हेतुः—**धर्मजिज्ञासैकाधिकारितयेति**। स च धर्मविचाराधिकारिणोऽधीतवेदमात्रस्यात्राप्यधिकारे तस्य सन्न्यासे कर्मविधीनामननुष्ठानलक्षणाप्रामाण्यं स्यादित्यादिपूर्वोक्तदोषस्मरणार्थः। ततश्च पृथगधि[1]कारापेक्षायां पृथग्विधिविधेयत्वाभावात्तदपेक्षितन्यायसूचकसूत्रारम्भो व्यर्थ इत्याह—**अथात इति**। ननु कर्मविचारात्पृथगर्थत्वद्योतनाय पृथगारम्भ इत्यत आह—**ब्रह्मार्थेति**। पृथगधिकारिणोऽनपेक्षणात्तत्प्रतिपत्त्यर्थयोरथातश्शब्दयोर्वैयर्थ्यमित्येवकारार्थः।

प्रकारान्तरेणाथातश्शब्दसार्थक्यं शङ्कते—**अथ वैध इति**। अर्थज्ञानरूपदृष्टप्रयोजनसिद्ध्ये अध्ययनविधिनाऽऽक्षिप्त इत्यर्थः। इदं च विशेषणमवश्यकर्तव्यत्वद्योतनाय। **फल्गुफल इति**। विनाप्यथातश्शब्दौ कृत्स्नकर्मकाण्डविचारेणैव प्रतिबन्धकीभूततज्जिज्ञासाया अपगमादिति भावः।

[1] कारानपेक्षायां—कुं.

कः पुनरेवं सत्यध्ययनविधावधिक्रियताम्। अत्राह—स्वाध्यायग्रहणकाम एवाधिक्रियते, "स्वाध्यायोऽध्येतव्यः" इति तस्य कर्मत्वावगमात्, कर्तुरीप्सिततमस्यैव कर्मत्वात्, फलकामस्य सफले कर्मण्यधिकारादिति। यथोक्तं श्रुतप्रकाशिकायां "स्वाध्यायसिद्धिरधिकारिविशेषणं स्यात्, "स्वाध्यायोऽध्येतव्यः" इति "स्वाध्यायस्याध्ययनसाध्यत्वावगमात्" इति, "अक्षरराशिग्रहणफलमित्यनेन स्वाध्यायग्रहणकामत्वमध्ययनाधिकारिविशेषणमित्यपि सूचितम्" इति च।

अत्र ब्रूमः—एवं ह्यध्ययनकाम एवाधिक्रियताम्। अध्ययनस्य सुखदुःखाभावान्यत्वेन कामनायोगः स्वाध्यायग्रहणस्यापि, अर्थज्ञानादिपरम्परया पुरुषार्थावसानं च अध्ययनस्यापि, अक्षरग्रहणार्थज्ञानादिपारम्पर्योपपत्तेः। अध्ययनप्रवृत्तिदशायामध्ययनस्य पुरुषार्थपर्यवसानाज्ञानं च स्वाध्यायग्रहणस्यापीति। अपि च "अग्नीनादधीत" इत्यादावग्निकामनाधिकारः स्यात्, कर्मनिर्वृत्त्या पुरुषार्थपर्यवसानोपपत्तेः। तत्र चोत्तर-

## रत्नतूलिका

एवं सतीति। कर्मानुष्ठानादिप्रणाड्या पुरुषार्थभूतार्थज्ञानस्य फलत्वाभावे सतीत्यर्थः। उपनीतोऽधिकारीति स्वमतं वक्तुं परोक्तमधिकारिणं दूषयितुं तन्मतमाह—अत्राहेति। युक्तं चैतदित्याह—फलकामस्येति। उक्तेऽर्थे परकीयग्रन्थं संवादयति—यथोक्तमिति।

अध्ययनकाम एवेति। समानपदोपात्तस्याध्ययनस्यैव फलत्वं युक्तं न तु स्वाध्यायस्येति भावः। ननु स्वाध्यायस्य कर्मत्वेनावगतस्य फलत्वमिति तत्कामनैवाधिकारिविशेषणं स्यादित्यशङ्क्यातिप्रसङ्गमाह—अपि चेति। तत्राप्यग्नीनां द्वितीयाश्रुत्या कर्मत्वावगमादिति भावः। इष्टापत्तिरित्यत आह—तत्र चेति। "अग्नी-

क्रतुविधिप्रयुक्तानुष्ठानत्वोपगमविरोधः । अपि च तत्साध्यकामस्य तदधिकारित्वेऽङ्गसाध्यनानात्वेन साङ्गप्रधानैकाधिकारित्वभङ्गः। अपि च कामाधिकारित्वेऽध्ययनमनित्यं स्यात्, कामस्याधिकारहेतोरनियाम्यत्वात् । तत्र च "अश्रोत्रिया अननुवाक्या अनग्नयः शूद्रसधर्माणः" इति निन्दावचनमुपरुध्येत । आचार्यककामाधिकारकाध्यापनविधेरनित्यतया नित्याध्ययनस्य तत्प्रयुक्तिनिराकरणं च पीड्येत। नित्यक्रतुविधिनेवाग्निकामनायाः स्वाध्यायकामनाया नित्यजपयज्ञादि-

रत्नतूलिका

नादधीत" इत्यग्न्यर्थतया विहितमाधानं न स्वविधिनानुष्ठाप्यते, किंतु क्रतुविधिना। क्रतुविधिर्हि स्वविधेयक्रत्वङ्गभूताग्न्यर्थतयाऽऽधानमनुष्ठापयति। अतस्तेनैवानुष्ठानसिद्धेर्न स्वविधिनानुष्ठानम्। वसन्तादिवाक्यं त्वाधानस्याग्न्यर्थतां बोधयति। आत्मनेपदेन च कर्तृगामिक्रियाफलाभिधायिना आधानकर्तुरेवाग्नयः क्रतुद्वारा फलं साधयन्ति नान्यस्येति क्रयसम्पादिताग्निनिवृत्तिरिति वस्तुस्थितिः। तद्विरोधः स्यादित्यर्थः। **अङ्गसाध्यनानात्वेनेति**। दृष्टादृष्टरूपतया नानात्वमिति भावः। **अनियाम्यत्वात्** कादाचित्कत्वादित्यर्थः। इष्टापत्तिमाशङ्क्याह—**तत्र चेति**। **अननुवाक्याः** स्वाध्यायधारणशून्याः। नन्वत एव निन्दावचनान्नित्यत्वमप्यस्त्विति चेन्न; अधिकारस्यासिद्धत्वेन निन्दया तत्कल्पनायोगादिति भावः। **पीड्येतेति**। यस्याध्ययनस्यानित्यत्वप्रसङ्गभीत्या अनित्याध्यापनविधिप्रयुक्तत्वमपि निराकृतं, तस्य कथमनित्यकामनाधिकारकत्वमिति भावः। ननु कामाधिकारत्वेऽप्यध्ययनविधेर्नानित्यत्वं, स्वाध्यायकामनायाः "तस्मात् स्वाध्यायोऽध्येतव्यः" इति नित्यब्रह्मयज्ञादिजपविधिप्रयुक्तत्वादित्यत आह—**नित्यक्रतुविधि-**

विधिना प्रयुक्तत्वोपगमे चाधानमिवाध्ययनं न स्वविधिप्रयुक्तं स्यात्। तस्मादुपनीतोऽधिक्रियत इति युक्तम्।

### उपनयनस्याध्ययनाङ्गत्वाभावः

ननूपनयनमध्ययनाङ्गतयानुष्ठेयं नाधिकारः। अन्यथा तस्योद्देश्यरूपतया स्वर्गकामगृहदाहादिवदनङ्गत्वादननुष्ठेयत्व-प्रसङ्गादिति, उच्यते—न तावदुपनयनमध्ययनाङ्गम्; "अष्टवर्षं ब्राह्मणमुपनयीत" इति ब्राह्मणादिसंस्कारतया पुरुषार्थत्वात्,

"गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामुपमृज्यते"॥

### रत्नतूलिका

**नेति**। **न स्वविधीति**! न चेष्टापत्तिः; "स्वाध्यायोऽध्येतव्यः" इति विध्यप्रवृत्तिदशायामध्ययनेऽप्रवृत्त्या नित्यब्रह्मयज्ञविधेरेवाप्रवृत्तेः, नैवमाधान इति भावः। परोक्तं दूषयित्वा स्वाभिमतमधिकारमाह—**तस्मादिति**॥

नन्वधिकारिविशेषणत्वेऽपि शमादेः श्रवणविधाविवाङ्गतयानुष्ठेय-त्वमप्यस्तु, को दोष इत्यत आह—**अन्यथेति**। अधिकारिविशेष-णस्योद्देश्यतया सिद्धत्वं वाच्यम्, अङ्गस्यानुष्ठेयतया साध्यत्वम्, तथा च विरोधः। शमादौ त्वधिकारिविशेषणीभूतशमाद्यपेक्षया अनुष्ठेयस्य शमादेरतिशयोऽस्तीति तयोर्भेदान्न सिद्धत्वसाध्यत्वविरोध इति भावः। **गृहदाहेति**। "यस्य गृहान्दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्" इत्यादि विहितक्षामवत्यादाविति[1] शेषः। **ब्राह्मणादि-संस्कारतयेति**। "व्रीहीन्प्रोक्षति" इत्यादाविव द्वितीयया प्रतीतस्य

---

[1] भावः—कुं.

इत्यादौ मौञ्जीनिबन्धनोपलक्षितोपनयनस्यैनश्शान्त्यर्थतास्मरणात्। "यस्यैते चत्वारिंशत्संस्काराः," "अष्टावात्मगुणाः अथ स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति" इति स्मरणात्।

किं च—

"अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः॥"

रत्नतूलिका

साध्यत्वस्य संस्कार्यत्वे पर्यवसानादिति भावः। एनश्शान्त्यर्थतेति। तथा च पुरुषार्थतेति भावः। यस्यैत इति। "गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनम्। चत्वारि वेदव्रतानि। स्नानं सहधर्मचारिणीसंयोगः, पञ्चानां यज्ञानामनुष्ठानं देवपितृमनुष्यभूतब्रह्मणाम्। एतेषां च अष्टका पार्वणः श्राद्धं श्रावण्याग्रयणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः, अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः, अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्थाः" इति निषेकादिषु चत्वारिंशत्संस्कारेषूपनयनस्यापि गौतमेन परिगणितत्वादिति भावः। "दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहा" इत्यष्टावात्मगुणा इत्यर्थः।

अत ऊर्ध्वमिति। "आषोडशाद्ब्राह्मणस्यानात्ययः, आद्वाविंशात्क्षत्रियस्य, आचतुर्विंशाद्वैश्यस्य",

"आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः॥"

**इत्युपनयनासंस्कारे पातित्यस्मरणात्, उचितविहितकर्मानर्हताया एव पातित्यशब्दितत्वात्। संस्कृतस्य च कर्मानुष्ठानयोग्यतापत्तेः "उपनयनादिर्नियमः" इति स्मरणात्। कर्मणामुपकारकमात्रमुपनयनं संस्कृतानामेव कर्मार्थितया अग्निसंस्कारकमिवाधानम्। तच्चादृष्टांशेन साधारण्येऽपि धात्वर्थभूताचार्यासत्तिरूपदृष्टांशेनापि प्रयोजनमपेक्षमाणमध्ययनविधावधिकारिसापेक्षे कर्तृविशेषणमधिकारनिमित्तं भवति।**

## रत्नतूलिका

इत्यादिस्मृत्युक्तगौणकालादूर्ध्वमित्यर्थः। नन्वस्तु यथाकालमुपनयनाकरणे पातित्यस्मरणम्, तस्याध्यय[1]नानङ्गत्वे किमायातमित्याशङ्क्य पातित्यस्वरूपं वदन् तस्य पुरुषार्थतामुपपादयति—**उचितविहितेति**। उपनयनासंस्कृतस्य कर्मानर्हत्वे उक्ते तत्संस्कृतस्य कर्मयोग्यतोक्तप्रायेत्यर्थः। **उपकारकमात्रमिति**। न त्वङ्गत्वमिति मात्रशब्दार्थः। ननूपकारकत्वमेवाङ्गत्वमित्याशङ्क्य तथासत्याधानस्यापि क्रत्वङ्गता स्यात्, न चेष्टापत्तिः; श्रुत्यादेर्विनियोजकस्याभावेन तदनुपपत्तेरित्यभिप्रेत्याधानसाधारण्यमुपपादयति—**संस्कृतानामेवेति**। एवं तर्हि पुरुषार्थस्योपनयनस्य कथमधिकारिविशेषणत्वमित्यतस्तदुपपादयति—**तच्चेति**। उपनयने द्वैरूप्यमस्ति, विहितरूपेणादृष्टसाधनत्वम्, धात्वभिहितरूपेण माणवकस्याचार्यासत्तिसाधनत्वं चेति। तत्राद्यस्य [2] कर्मानुष्ठानयोग्यता[3]धायकत्वेन सर्वकर्मसाधारण्येऽपि द्वितीयेन रूपेणाधिकारिविशेषणत्वमित्यर्थः।

---

[1] नाङ्गत्वे—च. कुं. [2] कर्मसु योग्यता—च. कुं. [3] तासाधकत्वेन—कुं.

हन्तैवमितरेतराकाङ्क्षया वाक्यविनियोगादध्ययनाङ्गमुपनयनमापन्नम्, सामर्थ्यादध्ययनैकाश्रयत्वाच्चेति चेत्, न; एकाश्रयत्वमात्रस्याङ्गत्वाप्रयोजकत्वात्, वैधाचार्योपगमननियमस्य प्रागुपनयनविधेः सामर्थ्यानवगमात्। अध्ययनविधौ कर्त्राक्षेपपर्यवसन्ने तत्संस्कारतया तदविधेर्विनियुक्तव्रीहिप्रोक्षणा-

रत्नतूलिका

तर्हि विनियोजकस्य सत्त्वादङ्गत्वमापन्नमित्याशङ्कते—**हन्तैवमिति**। न केवलं वाक्यादपि तु लिङ्गादपीत्याह—**सामर्थ्यादिति**। [1]आसत्तिसम्पादनद्वारा अध्ययननिर्वृत्तिसामर्थ्यादित्यर्थः। प्रत्यासन्नत्वेनाङ्गत्वयोग्यताप्यस्तीत्याह—**अध्ययनैकाश्रयत्वादिति**। एकपुरुषाश्रयत्वादित्यर्थः। **अङ्गत्वाप्रयोजकत्वादिति**। अन्यथा अग्निहोत्रदर्शपूर्णमासाग्रयणादीनाम[2]प्यङ्गत्वापत्तिरिति भावः। सति विनियोजके तस्यापि प्रयोजकत्वमित्युक्तमित्याशङ्क्य विनियोजकं दूषयति—**वैधाचार्योपगमनेति**। **सामर्थ्यानवगमादिति**। उपगमनविधेः प्रागप्राप्ततया तत्र सामर्थ्यमेव ज्ञातुमशक्यम्, तद्विधौ च सिद्धोपगमनस्य माणवकस्याध्ययनविधावधिकारित्वेनैवान्वय इति नोभयथाप्यङ्गत्वमिति भावः। वाक्यविनियोगं निरस्यति—**अध्ययनविधाविति**। न हि परस्पराकाङ्क्षया संस्कृतस्याध्ययनकर्तृत्वमात्रेण तस्य तदङ्गत्वप्रसङ्गः, तथा सत्याधानसंस्कृतस्याग्नेः क्रतुषु विनियोगादाधानस्यापि क्रत्वङ्गता स्यात्, तत्राप्याधानसंस्कृतस्याग्नेः प्रयोजनाकाङ्क्षायाः क्रतोश्चाग्न्याकाङ्क्षायास्तुल्यत्वात्, किं तु कर्तृत्वेन विनियुक्तसंस्काररूपत्वे, यथा "व्रीहिभिर्यजेत" इति विनियुक्तव्रीहिसंस्कारस्य प्रोक्षणस्य तद्द्वारा दर्शपूर्णमासाङ्गत्वम्, न चोपनयनमध्ययनकर्तृसंस्कारः; येन

[1] आसक्ति—कुं. [2] प्यङ्गाङ्गित्वा—च. कुं.

दिवद्दौवारिकान्याङ्गत्वाप्रतीतेः। अन्यथा विशेषाभावेन सर्वकर्तृकेऽध्ययनविधौ शूद्रपरिवर्जनाभावप्रसङ्गात्। उपनयनसंस्कारस्य च यथाविधानं ब्राह्मणादिकर्तृविशेषणतया शूद्रे रथकारादिवदनपेक्ष्यत्वात्।

अथ "पद्यु ह वा एतच्छ्मशानम्, यच्छूद्रः, तस्माच्छूद्रसमीपे नाध्येतव्यम्", "अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रपूरणमुदाहरणे जिह्वाच्छेदः.... ..." इत्यादिनिषेधात्—

रत्नतूलिका

तद्द्वारा तदङ्गता स्यादिति भावः। उपनीतमनपेक्ष्याध्ययनविधेरविशेषेण कर्त्राक्षेपकत्वे बाधकमाह—अन्यथेति। ननु "वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम्" इति वाक्यैरुपनयनस्य विद्यार्थस्य त्रैवर्णिकसंस्कारत्वावगमानुरोधेन तेषामेव कर्तृत्वेनाक्षेपो न शूद्रस्येत्यत आह—उपनयनसंस्कारस्येति। स्यादेवं, यद्युपनयनविधिमपेक्ष्य कर्त्राक्षेपः, तथा सत्यधिकारिविशेषणमुपनयनं स्यात्, किं त्वविशेषेण कर्त्राक्षेपे सति ब्राह्मणादिसंयोगेन विधीयमानमुपनयनं तत्कर्तृकाध्ययने स्यात्। शूद्रस्य तूपनयनं विनाप्यध्ययनं स्यादेवेति भावः। रथकारादिवदिति। तथा सर्वकर्मयोग्यताधायकस्याप्युपनयनस्य "वर्षासु रथकार आदधीत" इति विहितसङ्कीर्णजातिकर्तृके आधाने अनपेक्षा तद्वदित्यर्थः।

ननु नोपनयनविधिबलात्त्रैवर्णिककर्त्राक्षेपोऽध्ययनविधेः, येनोपनयनमङ्गं न स्यात्, किं तु शूद्रस्याध्ययननिषेधवशादित्याक्षिपति—अथ पद्यु ह वेति। पदा यातीति पद्यु सञ्चरदित्यर्थः। ननु निषेधस्याध्ययनविधि-

"यस्य येनार्थसंबन्धो दूरस्थेनापि तस्य सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥"

इति न्यायेन तदेकवाक्यतापन्नाध्ययनविधेस्त्रैवर्णिककर्त्राक्षेपपर्यवसाने सन्निधिबलेन ब्राह्मणादिपदोपस्थिते तत्रोपनयनं विधीयमान[1]मङ्गीक्रियतामिति चेन्न; एवं विहितवेदाध्ययनाभावेऽपि शूद्रस्याविहितवेदाध्ययनप्रसङ्गात् । निषेधस्य विहिताध्ययनकर्तृनियमार्थत्वोरीकारात् । तन्मा भूदिति स्वतः पुरुषार्थे शूद्रस्याध्ययनानिषेधेऽध्ययनविधेरुपनीतमनपेक्ष्याविशिष्टकर्त्राक्षेपे शूद्रस्य

रत्नतूलिका

सन्निध्यभावात् कथं तदेकवाक्यतेत्यत आह—यस्य येनेति । अर्थेन प्रयोजनेन संबन्धोऽर्थसंबन्धः । अथ वा अभिधेयपरः तद्द्वारकः संबन्धः । तदेकवाक्यतेति । निषेधैकवाक्यत्वे यस्याध्ययनं निषिद्धं तद्व्यतिरिक्तस्य कर्तृत्वाक्षेपः पर्यवस्यतीत्यर्थः । कर्त्राक्षेपपर्यवसानमुपपाद्योपनयनस्याङ्गत्वमुपपादयति — सन्निधिबलेनेति । उपनयनविधिवाक्ये ब्राह्मणादिप[2]दैरध्ययनकर्तार उपस्थाप्यन्ते, तस्याध्ययनविधिसन्निधानात्, अतस्तत्कर्तृसंस्कारतया विहितमुपनयनं तदङ्गमित्यर्थः । नन्वध्ययनसामान्यनिषेधान्न शूद्रस्याविहिताध्ययनप्रसङ्ग इत्यत आह—निषेधस्येति । अध्ययनविधावनियमेन कर्त्राक्षेपे प्रसक्ते त्रैवर्णिककर्तृनियमार्थोऽयं निषेधस्तत्रैवोपक्षीणः सामान्यरूपोऽपि [3]विहितमध्ययनं न

[1] मङ्गमङ्गी—ख. [2] पदैस्तत्कर्तृकमध्ययनमुपस्थाप्यते । तस्य—कुं. [3] अविहित—क. च. कुं.

विहितप्रतिषिद्धमध्ययनं प्रसज्येत। वैधाध्ययनातिरिक्तविषयतया सामान्यतन्निषेधस्य विहिताध्ययनमेव वा प्रसज्येत। तस्मात्सर्वार्थोपयोगितयोपनयनसंस्कारोऽदृष्टांशेनाध्ययनाधिकारि[1]निमित्तमिति युक्तम्।

न चैवं "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा" इत्यत्र दध्यानयनं वैश्वदेवाङ्गं न स्यात्, उपनयनवदवगतविनि-

रत्नतूलिका

स्पृशतीत्यर्थः। **विहितप्रतिषिद्धमिति।** अध्ययनविधेरविशेषेण सर्वार्थतया शूद्रं प्रत्यप्यध्ययनस्य विहितत्वम्, "पद्यु ह वा" इत्यादिना प्रतिषिद्धत्वं च। ततश्च ग्रहणाग्रहणयोरिव विकल्पः स्यादित्यर्थः। सामान्यनिषेधस्याविशेषेण सर्वाध्ययनविषयत्वमिति स्वमतेन विकल्प इत्युक्तम्। इदानीं विहितेतरमात्रविषयत्वं निषेधस्येति प्राचीनमतेनाप्याह—**वैधाध्ययनातिरिक्तेति।** उपनयनस्याधिकारार्थत्वमुपसंहरति—**तस्मादिति। सर्वार्थोपयोगितयेति।** "उपनयनादिर्नियमः" इत्यादिना तस्यादृष्टांशेन सर्व[2]योग्यताधायकत्वावगमादिति भावः। इदं च विशेषणं योग्यताधानायावश्यानुष्ठेयमुपनयनम्, अतः सिद्धत्वात्तस्य स्वर्गादिकामनावदधिकारिविशेषणत्वं संभवतीति द्योतयितुमिति ध्येयम्।

अध्ययने विनियुक्तस्य कर्तुः संस्कारत्वेनाविधानादुपनयनं तदङ्गं न भवतीत्युक्तम्। सिंहावलोकनन्यायेन तत्रैवाव्याप्तिमतिव्याप्तिं चाशङ्क्य निषेधति—**न चैवमिति।** उपनयनवदित्यन्वयदृष्टान्तः। **तप्ते पयसीति।** पयोमात्रमुद्दिश्य दध्यानयनं विधीयते, न तु तस्यापूर्वी-

---

[1] अधिकार--ख. [2] योग्यतापादकत्वा—घ. च. कुं.

योगकारकगोचरे विधानाभावात्, अर्थज्ञानद्वारा सामर्थ्यावगतविनियोगे स्वाध्याये संस्कारतया विधीयमानाध्ययनं च क्रत्वङ्गं स्यादिति वाच्यम्; सा वैश्वदेवीति तच्छब्देन प्रकृतपरामर्शिना आमिक्षासामानाधिकरण्यापन्नस्त्रीलिङ्गेन दध्यानयनसंस्कृतपयःपरामर्शे संस्कारविशिष्टस्यैव विनियोगावगमात् स्वतः पुरुषार्थत्वाभावात्, तत्प्रकरणसंबन्धेन तदङ्गत्वौचित्याच्च। "अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत" इत्युपनयनस्य तच्छब्दश्रुत्यविशेषेऽपि बैजिकादिदोषनिर्हरणार्थत्वावगतेः। अतत्प्रकरण-

## रत्नतूलिका

यत्वेन रूपेणोद्देशः; तद्रूपस्य तदानीमनवगमात्। ततश्चावगतो विनियोगो यस्य कारकस्य तद्गोचरे तद्विषये विधानाभावत् विनियुक्तसंस्कारत्वाभावादङ्गत्वं न स्यादित्यर्थः। अनेनाव्याप्तिरुक्ता। अतिव्याप्तिमप्याह-**अर्थज्ञानद्वारेति**। ननु तच्छब्दस्य प्रकृतपयःपरामर्शित्वे नपुंसकलिङ्गता स्यादित्याशङ्क्याह—**आमिक्षेति**। आमिक्षापदस्य स्त्रीलिङ्गत्वात्तत्सामानाधिकरण्येन स्त्रीत्वमित्यर्थः। **संस्कारविशिष्टस्यैवेति**। तथा च विशिष्टविनियोगो विशेषणविनियोगमन्तरानुपपन्न इति तस्यापि तदङ्गत्वमित्यर्थः। तच्छब्देन संस्कृतस्य परामर्श इत्येतदुपनयनसाधारणमिति हृदि निधाय तद्व्यावृत्तं हेतुद्वयमाह—**स्वतः पुरुषार्थत्वेति**। **तत्प्रकरणेति**। उपक्रमादिना वैश्वदेवयागसन्दंशपातित्वावगमाद्दध्यानयनस्य तत्प्रकरणसंबन्धित्वमित्यर्थः। उपनयने दध्यानयनसाधारणांशं प्रदर्शयंस्तद्वैषम्यमाह—**अष्टवर्षमिति**। **अतत्प्रकरणेति**। तत्प्रकरणे यस्य वाक्यस्य संबन्धो नास्ति तस्येत्यर्थः। तदभावश्चाध्ययनविधिसन्दंशाभावान्निश्चीयत इति भावः। किमर्थस्तर्हि "उपनयीत,

**संबन्धवाक्यस्य चाधिकारिसंबन्धेऽप्युपपत्तेश्च वैशेष्यात्। "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इत्यत्रैव "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यत्र क्त्वाश्रुत्यविशेषेऽपि ह्यङ्गाङ्गित्वाभावः, पृथगधिकारिश्रवणादिवैशेष्यात्।**

रत्नतूलिका

तमध्यापयीत" इत्येकस्मिन्वाक्ये तयोः पाठ इत्यत आह—**अधिकारसंबन्धेऽपीति**। ननु तच्छब्देन संस्कारविशिष्टपरामर्शतौल्येऽप्येकत्राङ्गाङ्गिभावपरत्वमितरत्राधिकारसंबन्धपरत्वमित्येतत्कथमित्याशङ्क्य वाक्यतौल्येऽपि भिन्नार्थत्वमित्येतदृष्टान्तेन समर्थयते—**वाजपेयेनेति**। "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इति श्रुतम्। किं तत्र वाजपेयाङ्गत्वेन बृहस्पतिसवविधिः किं वा कालार्थः संयोग इति संशये, उभयोरपि फलवत्त्वान्न मिथोऽङ्गाङ्गित्वम्, अतः कालार्थः संयोग इति पूर्वपक्षे—दूरगतबृहस्पतिसवानुवादेनानुपादेयकालविधानानुपपत्तेः काले कर्म विधीयत इति वाच्यम्। तच्च पुरोधादिफलस्य बृहस्पतिसवस्य बुद्धावविपरिवृत्तेः कर्मान्तरम्। तच्च वाजपेयप्रकरणे विधानात्तदङ्गमिति चतुर्थे "समवाये चोदनासंयोगस्यार्थवत्त्वात्" इत्यधिकरणे निर्णीतम्। तथा "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति श्रुतम्। तत्राङ्गाङ्गिभावार्थ एव संबन्धो न कालार्थः। तथा सति दर्शपूर्णमासशब्दस्य कालोपलक्षणार्थतयाऽत्यन्तपारार्थ्यं स्यादिति प्राप्ते—दर्शोत्तरकाले विधीयमानः सोमः "संनिधौ त्वविभागात्" इति न्यायान्न कर्मान्तरम्। प्रकृतश्च सोमयागः फलार्थत्वान्न दर्शपूर्णमासाङ्गतां प्रतिपद्यते, न वा तौ सोमाङ्गताम्; तयोरत्राविधीयमानत्वात्। न चाकृतयोर्दर्शपूर्णमासयोस्तदुत्तरकाले सोमः शक्यते कर्तुमित्यर्थात्तद्विधिः स्यात्। विध्यन्तरविहितयोस्तु तयोर्लाभान्नानुपपत्तिः। तस्मात्कालार्थ एव संबन्ध इति

न चाध्ययनस्यार्थज्ञानादिद्वारा क्रत्वङ्गतापत्तिः; अनुष्ठेयार्थज्ञानस्य हितैषिवचनादप्युपपत्तौ स्वाध्यायस्य तादर्थ्यानियमात्। सामर्थ्यसाधारण्येन व्यभिचारात्। अन्यनिमित्तज्ञानानुष्ठितात्फलसिद्धावध्ययनसंस्कारानर्थक्यात्। स्वाध्यायादेवानुष्ठेयार्थज्ञानमेपितव्यमिति चेत्, एवं तर्हि संस्कृतस्यैव तस्य तादर्थ्यावधारणादनवगतविनियोगे संस्कारविधानादध्ययनं क्रत्वङ्गं स्यात्। न चाध्ययनस्य दध्यानयनतुल्यता; प्रकरणसंबन्धस्य विशेषकत्वात्, तद्वदत्र संस्कारप्रत्यवमर्शनाभावात्,

## रत्नतूलिका

तत्रैव "उत्पत्तिकालविशये कालः स्याद्वाक्यस्य तत्प्रधानत्वात्" इत्यधिकरणे निर्णीतमिति वाक्यस्यैकरूपत्वेऽपि प्रयोजनभेद इत्यर्थः।

अतिव्याप्तिं दूषयति—**न चाध्ययनस्येति**। किं स्वाध्यायस्य [1]स्वसामर्थ्येन क्रत्वव्यभिचारः, किं वाध्ययनरूपसंस्कारविधिबलेनेति विकल्प्याद्यं दूषयति—**अनुष्ठेयार्थज्ञानस्येति**। तदेवोपपादयति—**सामर्थ्येति**। द्वितीयं शङ्कते—**अन्यनिमित्तेति**। तर्ह्यध्ययनविधेः प्राक्स्वाध्यायस्य क्रतुविनियोगाज्ञानेनाध्ययनस्य विनियुक्तसंस्कारत्वाभावान्नाङ्गत्वमिति दूषयति—**एवं तर्हीति**। ननु पश्चाद्विनियोगेऽपि तस्याङ्गत्वाविशेषात्तत्संस्कारस्याध्ययनस्य क्रत्वङ्गत्वं दध्यानयनवत्स्यादित्याशङ्क्य निषेधति—**न चाध्ययनस्येति**। असति श्रुत्यादौ विनियोजके करणसंस्कारत्वमात्रेणाङ्गत्वं न सिद्ध्यतीत्यभिप्रेत्य दध्यानयनवैषम्यमाह—**प्रकरणसंबन्धस्येति**। प्रकृते तदभावादिति भावः। वाक्यविनियोगोऽपि प्रकृते नास्तीत्यभिप्रेत्याह—**तद्वदत्रेति**। "सा वैश्वदेवी" इति पदद्वयसमभिव्याहारवदत्र विनियोजकं नास्तीत्यर्थः।

---

[1] सामर्थ्येन—क.

सामर्थ्यस्य स्वाध्यायस्वरूपमात्रानुगतत्वात्, [1] नित्यतयाध्ययनस्य स्वतः पुरुषार्थत्वाच्च । संस्कृतविनियोगे संस्काराङ्गत्वस्यापुरुषार्थत्वानिबन्धनत्वात् ।

ननु "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते, ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इत्युत्पत्त्यैव ब्राह्मणस्य विद्यादिसंबन्धबोधनादवगतकर्तृभावे ब्राह्मणे विधीयमानसंस्कारो विद्याङ्गतां प्रतिपद्यत इति चेत्, एवं सत्युपनयनं [2] सोमाद्यङ्गं स्यात्, तुल्यन्यायत्वात् । न चायमवदानार्थवादो

रत्नतूलिका

लिङ्गमपि नास्तीत्याह—सामर्थ्यस्येति । ननु विध्यन्यथानुपपत्त्या फलवत्क्रत्वनुष्ठानौपयिकज्ञानजननसामर्थ्यं संस्कारस्यापि कल्प्यत इत्याशङ्क्याह—नित्यतयेति । "अश्रोत्रिया अननुवाक्याः" इत्यादिनिन्दादर्शनान्नित्यत्वमिति भावः । तथा चाध्ययनविधेः पुरुषार्थतयाऽर्थापत्तिपरिक्षयान्न तदनुपपत्त्या संस्कारस्याङ्गत्वकल्पनमित्याह—संस्कृतविनियोग इति । तथा चाव्याप्त्यतिव्याप्त्योरभावादध्ययनविनियुक्तकर्तृसंस्कारतया तदविधेर्नोपनयनमङ्गमिति सूक्तमिति भावः ।

प्रकारान्तरेणोपनयनस्याध्ययनकर्तृसंस्कारत्वेनाङ्गत्वमाशङ्कते —ननु जायमान इति । ऋणवा ऋणवान् । तथा च यज्ञादिभिर् ऋणवानित्युक्त्या ऋणापाकरणमिव ब्रह्मचर्यादिकं ब्राह्मणस्यावश्यानुष्ठेयमित्युक्तं भवति । ब्रह्मचर्यमनुष्ठेयमित्युक्त्या [3] तदङ्गाध्ययनाद्यनुष्ठानमप्युक्तमेवेत्यभिप्रेत्याह—विद्यादिसंबन्धबोधनादिति । तुल्यन्यायत्वादिति । "यज्ञेन देवेभ्यः" इत्यादिना यज्ञादिसंबन्धस्याप्यवगतौ तत्कर्तृसंस्कारत्वस्य तुल्यत्वादित्यर्थः । जायमान इत्यादेः कर्तृसम्बन्धपरत्वमङ्गीकृत्योक्तम् । इदानीमङ्गीकारं परित्यजति—न चायमिति ।

[1] अनित्य-ख. [2] सोमाद्यङ्गमपि—ख. [3] तदङ्गकाध्ययना—कुं.

ब्रह्मचर्याङ्गकाध्ययनादेर्ब्राह्मणसंबन्धपरः । अपि चैवमृणश्रुतेर्ब्राह्मणसंबन्धविधिपरत्वे सोमविद्याप्रजं न त्रैवर्णिकविषये नित्यं स्यात्; ब्राह्मणसंबन्धावरुद्धत्वात् ।

अथ ब्राह्मणग्रहणमुपलक्षणमित्युच्येत, कुतः पुनरेवं निश्चयः; अध्ययनविधावधिकारिसापेक्षे गुर्वासत्तिपर्यन्तोपनयनसंस्कृतस्य त्रैवर्णिकस्यापि सामर्थ्यसाम्येनाधिकारित्वान्वयादिति चेत्, न तर्ह्युपनयनमध्ययनाङ्गम्, उपनीतस्यैवाधिकारिणः कर्तृत्वावगमात् । यत्तु "वसन्ते ब्राह्मणमुपनयीत" इति द्वितीयाश्रुत्या उपनयनस्य तादर्थ्यावगमात्तस्य च तदीय-

## रत्नतूलिका

"हृदयस्याग्रेऽवद्यति" इत्यादिश्रुतावदानार्थवाद इत्यर्थः । नन्वस्यार्थवादस्यान्यविधिपरत्वमसति विरोधेऽङ्गीकृतं "द्वादशाहीनस्य" इत्यादौ, तद्वदत्रापि स्यादित्याशङ्क्य विरोधमाह—अपि चैवमिति । नित्यं स्यादिति । तथा च "ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात्" इति षष्ठाधिकरणभाष्यादिविरोध इति भावः । ब्राह्मणसंबन्धविधिपरत्व इत्यापाद्योंऽशः । तथा च ब्राह्मणस्यैव विद्यासंबन्धः स्यान्न त्रैवर्णिकमात्रस्येति भावः ।

उपलक्षणमिति । त्रैवर्णिकस्य कर्तृत्वावगमेऽपि तत्संस्कारस्योपनयनस्याध्ययनाङ्गत्वमविकलमिति भावः । यत्तु वसन्त इति । इदं "ग्रीष्मे राजन्यम्, शरदि वैश्यम्" इत्यनयोरप्युपलक्षणम् । तादर्थ्यावगमादिति । ब्राह्मणाद्यर्थत्वावगमादित्यर्थः । अस्तु तादर्थ्यावगमः, तथाप्यध्ययनाङ्गत्वे किमायातमित्यत आह—तस्य चेति । तादर्थ्यस्य चेत्यर्थः । न तु संस्कार्यस्वरूपमात्रार्थता, तथा सति

**कार्यपुरुषार्थाध्ययनाङ्गतानतिरेकादुपनयनमध्ययनाङ्गमिति, तन्न; न ह्यध्ययनमात्रमुपनीतकार्यम्, कर्मणामपि तत्कार्यत्वादुपनयनं तदङ्गमपि प्रसज्येत।**

**अथ कर्माणि स्वविधिसामर्थ्यादत्रैवर्णिकानामपि पुरुषार्थतया कार्यत्वेन प्राप्तान्युपनयनपूर्वकाध्ययनविधुरेषु विद्याप्रयुक्तिकल्पनागौरवदोषेण तद्वत्सु त्रैवर्णिकेषु व्यवस्थाप्यन्ते। वचनात्तु क्वचित् "एतया निषादस्थपतिं याजयेत्" इत्यादा-**

रत्नतूलिका

वैयर्थ्यापातात्, किं तु तत्कार्यार्थता, यथा प्रोक्षणादेरपूर्वीययागार्थता, अत्र चोपनीतस्य कार्यमध्ययनमेवेति तादर्थ्यमित्यर्थः। यथा कर्मणां पुरुषार्थतया सर्वानुष्ठेयतया प्राप्तानां [1]नोपनीतमात्रकार्यत्वम्, अतो नोपनयनं तदङ्गं, तथाध्ययनमपीति न तदङ्गत्वमप्युपनयनस्येति वास्तवमर्थं हृदि निगूह्य कर्मप्रतिबन्दीमालम्बते—**न ह्यध्ययनमात्रमिति**।

तुल्यमध्ययनेऽपीति वक्तुं परेण प्रतिबन्दीं विमोचयति—**अथ कर्माणीति**। **अत्रैवर्णिकानामपीति**। तेषामपि स्वर्गकामत्वाद्यविशेषादिति भावः। ननु यदि व्यवस्था तर्हि "एतया निषादस्थपतिं याजयेत्" इति विहितेष्टिरपि विद्याप्रयुक्तिकल्पना[2]भिप्रायात् त्रैवर्णिकस्य स्यात्, निषादानां स्थपतिरिति [3]समासाश्रयेण त्रैवर्णिकस्यापि [4]तत्त्वोपपत्तेरित्यत आह—**वचनात्त्विति**। निषादस्थपतिमित्यत्र षष्ठीसमासाश्रयणे निषादपदस्य तत्संबन्धिनि लक्षणा स्यात्। कर्मधारये तु स्वार्थवृत्तयोरेव पदयोः समभिव्याहारेणाभेदलाभान्न कस्यापि लक्षणेति प्रमाणपर्यालोचनया जातिविशेषस्येष्टिरिति सिद्धे विद्याप्रयुक्ति-

---

[1] नोपनीतकार्य—क. [2] भिप्राया त्रै—च. [3] समासाश्रयणेन—च. [4] तत्रोपपत्ते—च.

वत्रैवर्णिकार्थान्यप्यनुमन्यन्ते। तत्रैवं सत्युपनीतमात्रकार्यत्वाभावेन कर्मणामुपनय[1]नाङ्गत्वाभावेऽपि स्वविधिनैवोपनीतमात्रकार्यतयावगम्यमानस्याध्ययनस्य तदङ्गत्वं स्यात्। तथा च स्मृतिः—"उपनयनं विद्यार्थस्य श्रुतितः संस्कारः" इति। नैवम्; बैजिकाद्येनश्शमार्थमध्ययनानधिकारिणां मूकादीनामप्युपनयनविधानेन तयोरङ्गाङ्गित्वायोगात्। न ह्यङ्गिप्रयुक्तिमनपेक्ष्यानुष्ठीयमानमङ्गं नाम भवति।

## रत्नतूलिका

गौरवमपि प्रामाणिकत्वान्न दोषायेति षष्ठे "स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात्" इत्यधिकरणे व्यवस्थापितमिति भावः। एवं कर्मणां षष्ठाध्यायसिद्धां त्रैवर्णिकमात्राधिकारितया व्यवस्थामुपपाद्य तया फलितमध्ययनवैषम्यं दर्शयति—तत्रैवं सतीति। स्वविधिनैवेति। अध्ययनं नाम गुरुमुखोच्चारणानूच्चारणम्। तच्च गुर्वासत्त्यधीनम्। अत उपनयनेन गुर्वासत्तिमतामेव तत्कार्यमित्यवगम्यत इत्यर्थः। स्मृतिः आपस्तम्बस्येति शेषः। श्रुतिप्रमाणको विद्यार्थस्य संस्कार उपनयनमित्युक्त्या विद्याङ्गत्वमवगम्यत इति भावः। अध्ययनविधावधिकारिव्यवस्थामात्रहेतुत्वमुपनयनस्येति वक्तुमङ्गत्वं तावन्निराकरोति—नैवमिति। अङ्गप्रधानयोरेकाधिकारित्वानियमात्प्रधाने अधिकृतं प्रति विधीयमानमेवाङ्गं नान्यदित्यर्थः। तदेवोपपादयति—न हीति। अङ्गिप्रयुक्तिमङ्ग्यनुष्ठानम्। अथ वा अङ्गिना अनुष्ठानम्। तथा चाध्ययनाननुष्ठातृपुरुषं प्रत्यपि विधीयमानत्वान्नोपनयनं तदङ्गमित्यर्थः।

[1] नाङ्गत्वा—ख.

"मूकोन्मत्तौ न संस्कार्याविति केचित्प्रचक्षते।
कर्मण्यनधिकाराच्च पातित्यं नास्ति चैतयोः" ॥

इति तदसंस्कारस्य परपक्षत्वं ब्रुवता मनुना तयोरपि संस्कारस्य स्वपक्षत्वसूचनात्। एनःशमार्थतया गार्भहोमादिसहपाठाच्च। तथा चाध्ययनविधिः स्वतः पुरुषार्थतया सर्वसाधारणोऽपि स्वतोऽपेक्षिताचार्यासत्तिप्रयुक्तिकल्पनागौरवं मा भूदित्युपनयनविधिलब्धाचार्यासत्तिकेषूपनीतेषु व्यवस्थाप्यत इति तुल्यः कर्मविधिभिरध्ययनविधेः स्वविधिस्वरसत उपनीतमात्रकार्यत्वाभावः। स्मृतावप्युपनयनं विद्यार्थमित्यस्मरणात् विद्यार्थस्येति संस्कारप्रतिसंबन्धितया पुरुषोपादानात् तदर्थसंस्कारस्य तदीयसर्व-

रत्नतूलिका

असिद्धो हेतुरित्याशङ्कते—मूकोन्मत्ताविति। किं मनुनाहत्य निषेधात्तदसंस्कारः, किं वा प्रयोजनाभावादिति विकल्प्याद्य आह—इति तदसंस्कारस्येति। द्वितीय आह—एनःशमार्थतयेति।

"गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥"

इत्यादिस्मृताविति शेषः। एवमुपनयनस्याङ्गत्वासंभवमुपपाद्याध्ययनस्य कर्मणामिवोपनीतमात्रकार्यत्वाभावमुपपादयति–तथा चाध्ययनविधिरिति। अकरणे प्रत्यवायश्रवणेन नित्यत्वात्स्वतः पुरुषार्थतेति भावः। आपस्तम्बस्मृतेरन्यथासिद्धिमाह—स्मृतावपीति। ननु प्रतिसंबन्धिनिर्देशोऽपि न पुरुषार्थत्वेन, किं तु विद्यार्थत्वेनेति तदङ्गत्वं स्यादित्यत आह—तदर्थसंस्कारस्येति। यदि विद्याङ्गत्वमाभिप्रेतं तदा विद्यार्थत्वमित्येव वदेत्। अतः पुरुषस्य यत्कर्तव्यं श्रौतं स्मार्तं वा तत्र योग्यता-

कर्तव्योपकारकमात्रत्वावगमात् । न चादृष्टांशेन तथाभूतमप्युपनयनमाचार्यासत्तिरूपदृष्टांशेनाध्ययनाङ्गमपि स्यादिति वाच्यम् ; तदंशेनाप्युपनयनप्रभृत्यनुष्ठेयनियमग्रहणस्य

"उपनीय गुरुः शिष्यं–शौचाचारांश्च शिक्षयेत्"

इत्यादिस्मृतेराचार्यायत्तत्वेन साधारण्यात् । तस्मात्स्वतः पुरुषार्थत्वे सति श्रुत्यादिविनियोजकाभावान्नाध्ययनाङ्गमुपनयनम् ।

रत्नतूलिका

धायकत्वेनोपकारकत्वमात्रम् । विद्यार्थस्येति ग्रहणं तु सर्वानुष्ठानमूलतया उपकार्येषु प्राधान्याभिप्रायं नाङ्गित्वाभिप्रायमिति भावः । [1]नन्वस्तूपनयनस्य रूपद्वयम्, विहितरूपं आचार्यासत्तिरूपदृष्टप्रयोजनकं धात्वभिहितरूपं चेति । तत्राद्यस्यादृष्टद्वारा सर्वकर्तव्योपकारकत्वेऽपि द्वितीयस्य गुरुमुखोच्चारणानुच्चारणरूपाध्ययननिर्वर्तनसामर्थ्यरूपलिङ्गेन तदङ्गत्वमपि स्यादित्याशङ्क्य निषेधति—न चादृष्टांशेनेति । तथा सत्यतिप्रसङ्ग इत्यभिप्रेत्याह—तदंशेनापीति । ननु नियमग्रहणमुपद्रष्टृवचनेन वा अन्यदीयाचारदर्शनेन वा भविष्यतीति न तत्र नियमेनोपनयनापेक्षेत्याशङ्क्य तस्याप्याचार्याधीनत्वे

"उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्" ॥

इति याज्ञवल्क्यस्मृतिमपेक्षितांशपठनेन दर्शयति—उपनीय गुरुरिति । तथा चाचार्याद्गृहीत एव नियमः फलाय भवति, नान्य इति भावः । उपनयनस्याध्ययनाङ्गत्वाभावं सहेतुकमुपसंहरति—तस्मादिति ।

[1] नन्वस्त्युपनयनस्य—कुं.

उपनयनस्याध्यापनाङ्गत्वाभावः

अत एव नाध्यापनाङ्गमपि। ननु "अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत" इत्यात्मनेपदश्रुतेः स्वरितञितः कर्त्रभिप्राये क्रियाफले तद्विधानात् अध्यापनक्रियासाध्यमाचार्यकं कर्तृगामि क्रियाफलमिति फलवत्सान्निधानात्तदेकफलमुपनयनमध्यापनाङ्गं स्यात्। उपनेयासत्त्यध्ययनद्वारा तस्य तत्र सामर्थ्याच्च।

"अथ संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः" इत्यकर्त्रभिप्रायार्थोऽयमारम्भः। न च कर्तृगाम्याचार्यकफलोद्देश्यक एवोपनयनेऽकर्तृगाम्युपनेयसंस्कारोऽपि विद्यत इत्येतावता तत्प्रवृत्तिः; कर्त्रभिप्रायादिविवक्षायाः प्रधानफल-

रत्नतूलिका

अत एवेति। स्वतः पुरुषार्थत्वे सति श्रुत्यादिविनियोजकाभावादेवेत्यर्थः। फलवद[1]ध्यापनसन्निधानादफलस्योपनयनस्य तदङ्गत्वं वक्तुं तस्य फलवत्त्वोपक्षेपायाह—इत्यात्मनेपदश्रुतिरिति। नन्वस्त्वध्यापयीतेत्यात्मनेपदश्रुतिः, तथापि तस्य फलवत्त्वे किमायातमित्याशङ्क्योपपादयति—स्वरितञित इति। अकिंचित्कुर्वतस्तदयोगात्किंचित्कारमाह—उपनेयेति। तस्य उपनयनस्य। तत्र अध्यापने।

ननु "संमाननोत्सञ्जनाचार्यकरण" इति सूत्रेण नयतेरकर्तृगामिनि क्रियाफले आत्मनेपदं विधीयते, तच्चोपनयनस्याध्यापनाङ्गतयाऽऽचार्यकफलत्वे विरुद्ध्यते, तस्य कर्तृगामिफलत्वादित्याशङ्कते—अथेति। ननु संमाननेति सूत्रमकर्तृगामिक्रियाफलमात्रमपेक्षते, न तु कर्तृगामिफलान्तराभावमपि, तच्चात्र माणवकसंस्काररूपं विद्यत एव, अत उपनयनस्याध्यापनरूपाङ्गिद्वारा आचार्यफलकत्वेऽपि न विरोध इत्याशङ्क्य निषेधति—न चेति। प्रधानफलविषयत्वादिति। तथा चोप-

---

[1] दध्ययन—कुं.

विषयत्वात्। अन्यथा यजन्ति याजकाः पचन्ति पाचका इत्यादौ "स्वरितञितः" इत्यात्मनेपदं स्यात्। दक्षिणादिफलस्य कर्त्रभिप्रायत्वात्। एवं तर्हि तत्रात्मनेपदमेव किं न स्यात्? न स्यात्; यागपाकारम्भकफलस्याकर्त्रभिप्रायत्वात्, यागपाकक्रियासन्तत्यविच्छेदप्रयोजकवरणप्रवर्तनादिरूपारम्भस्य स्वामिगामिस्वर्गान्नवत्त्वफलोद्देश्यकत्वात्।

उक्तं च हरिणा—

"यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः।
तत्प्रधानं फलं तेषां न लाभादि प्रयोजनम्"॥

इति। अन्यथा कर्त्रभिप्रायाद्यव्यवस्थया सूत्रवैयर्थ्यादिति चेन्न;

रत्नतूलिका

नयनस्याध्यापनाङ्गत्वे तस्याचार्यकमेव प्रधानफलं वाच्यम्; अङ्गानामङ्गिफलार्थत्वात्, तच्च कर्तृगामीत्या[1]त्मनेपदविध्यनुपपत्तिरिति भावः। अन्यथेति। [2]प्रधानफलविषयत्वाभावे यथा अप्रधानसंस्काररूपफलस्याकर्तृगामित्वेन उपनयीतेत्यत्र संमाननसूत्रेणात्मनेपदं तथा यजन्तीत्यादावप्यप्रधानफलस्य कर्तृगामित्वात् "स्वरित ञितः" इत्यात्मनेपदं स्यादित्यर्थः। यया क्रियया यल्लभ्यते तत्तस्य फलम्, तथा च फलत्वे सिद्धे दक्षिणादेरपि प्राधान्यमविशिष्टमित्यभिप्रेत्याशङ्कते—एवं तर्हीति। आरम्भदशायामारब्धुर्यदुद्देश्यं तत्प्रधानं फलमितरदप्रधानमिति विशेषमभिप्रेत्य परिहरति—न स्यादिति। तमेवोपपादयति—यागपाकारम्भफलस्येत्यादिना। अन्यथेति। उक्तविशेषानङ्गीकार इत्यर्थः। संमाननेति सूत्रेणैवात्मनेपदम्, तन्निर्वाहकं चाकर्तृमाणवकगामिसंस्कार-

[1] आत्मनेपदानुपपत्तिरिति—च. कुं. [2] प्रधानविषयत्वाभावे—कुं.

अध्यापनफलाचार्यकरणसंबन्धबोधनादुपनयनस्य कथंचिदध्यापनोपकारकत्वमात्रेण तत्फलपरम्परासंबन्धकल्पनापेक्षया तदङ्गतया साक्षात्फलसंबन्धकल्पनस्य न्याय्यत्वात्। आधानाङ्गे तु पूर्णाहुतौ कथंचिदुपकारकतामात्रेण परम्परयाप्युपकार्याग्निहोत्रादिकर्मफलसबन्धोऽनुकीर्त्यते स्तवनाय "पूर्णाहुत्या सर्वान्कामानवाप्नोति" इति। अनारभ्याधीताधानाङ्गस्यातदङ्ग-

## रत्नतूलिका

रूपं फलम्, एवमपि तस्याध्यापनाङ्गत्वं वाच्यम्, [1]अन्यथा संमानननसूत्रोपात्तस्योपनयने आचार्यकरणसंबन्धस्य साक्षात्सम्बन्धत्वालाभादित्यभिप्रेत्य—परिहरति—अध्यापनेति। संमाननेति सूत्रे आचार्यकरणं फलत्वेन न विवक्षितम्, तथा सति तस्य कर्तृगामित्वात् "स्वरितञितः" इत्येव तत्सिद्धौ सूत्रवैयर्थ्यात्। अत आचार्यकरणसंबन्धमात्रं विवक्षितम्। स चोपनयनाध्यापनयोरङ्गाङ्गित्वबोधकाभावे परम्परेति पर्यवस्यति। स च साक्षात्संबन्धसंभवे अयुक्त इति भावः। नन्वेवं पूर्णाहुतेरप्यनेन न्यायेनाग्निहोत्राद्यङ्गत्वं स्यादित्यतो वैषम्यमाह—आधानाङ्गे त्विति। अङ्गिभूतस्याधानस्याग्निद्वारा सर्वकर्मोपकारकत्वेऽपि तदङ्गभूतपूर्णाहुतेर्न तत्रोपकारकत्वमिति कथंचिदित्युक्तिः। स्तवनायेति। तथा च तत्र स्तुतेः परम्परासंबन्धकीर्तनेनापि निर्वाहः। इह तु विहितस्योपनयनस्य फलाकाङ्क्षाशान्तिः साक्षात्संबन्धेन निर्वहणीयेति विशेष इति भावः। अत्र साक्षात्संबन्धलाभे बाधकमाह—अनारभ्येति। अनारभ्याधीतं यदाधानं तदङ्गस्येत्यर्थः। अत्र साङ्गस्याधानस्याग्निहोत्राद्यङ्गत्वे [2]अङ्गभूतपूर्णाहुतेरपि साक्षात्फलसंबन्धः संभाव्येत। तदेव तु

[1] अन्यथा सति सं—कुं. [2] असङ्गत—च.

त्वेन साक्षादग्निहोत्रादिफलसंबन्धासंभवात् । उदुम्बरता पुनः प्रकरणादङ्गमङ्गिफलसाक्षात्सम्बन्धेन स्तूयते— "औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्धे" इति सोमापौष्णस्याङ्गिनः पशुफलत्वात्, तद्वदिह स्यात् सन्निधानात्संभवाच्चेति चेन्न; पुरुषस्य कर्तव्यताप्राप्तियोग्यतापादनेनोपनयनस्य स्वतः पुरुषार्थतया श्रुत्यादिविनियोजकाभावेनाङ्गत्वानुपपत्तेः । सन्निधानस्य संबन्धमात्रगमकत्वात् । संभवमात्रस्यातिप्रसक्तत्वात् । उपकारकतामात्रेणाध्यापनफलसंबन्धस्य कल्पनीयत्वात् ।

अथ—

"उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" ॥

इति स्मृत्यनुमितायामाचार्यकक्कामः शिष्यमुपनीयाध्यापयीतेति श्रुतावुपनयनाध्यापनयोः क्त्वाश्रुत्यवगतकर्त्रैक्योपपादक-

रत्नतूलिका

नास्तीत्यभिप्रेत्यानारभ्याधीतत्वविशेषणम् । बाधकाभावे साक्षात्संबन्ध इत्युदाहरणमुखेन दर्शयति—उदुम्बरता पुनरिति । सत्यामङ्गत्वयोग्यतायामात्मनेपदादिनाङ्गत्वबोधः । सैव तु नास्तीत्यभिप्रेत्य दूषयति—न पुरुषस्येति । अतिप्रसक्तत्वात् भोजनादिसाधारण्यादित्यर्थः । कल्पनीयत्वादिति । तथा चासति विरोधे कल्पना प्रवर्तते, अत्र तु स्वतः पुरुषार्थत्वविरोधान्न सेति भावः ।

नन्वनन्यथासिद्धक्त्वाश्रुत्याऽङ्गत्वमित्याशङ्कते—अथेति । क्त्वाश्रुतेर्विनियोजकत्वप्रकारमाह—उपनयनाध्यापनयोरिति । "समान-

तयाऽऽक्षिप्यमाणं प्रयोगैक्यं समप्राधान्येऽङ्गाङ्गित्वे विपर्यये वा संभवदप्युपनेयासत्त्यादिदृष्टद्वाराध्यापनानिर्वृत्तिसामर्थ्यादुपनयनस्य तदङ्गतामावहतीति चेन्न; "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यादाविव क्त्वाश्रुतेरवगतमपि कर्त्रैक्यमुदस्य कर्तृत्वाधिष्ठानपुरुषैक्यमात्रालम्बनत्वाभ्युपगमात्। वाक्यान्तरे स्वतन्त्रफलत्वावगत्यविशेषात्।

अपि च "उपनीय तु यः शिष्यम्" इत्यादि न साङ्गाध्यापनविधिपरम्, किं तु "आचार्याय दक्षिणा देया" इत्यादि विध्यपेक्षिताचार्यसंज्ञाविधिपरम्, न केवलेनोपनयनेन, नापि केवलेनाध्यापनेन, किं तूभाभ्यामाचार्यो भवतीति।

"न विद्यया केवलया तपसा वापि पात्रता।
यत्र वृत्तमिमे चोभे तद्धि पात्रमनुत्तमम्"॥

रत्नतूलिका

कर्तृकयोः पूर्वकाले" इति कर्त्रैक्ये क्त्वाप्रत्ययस्य विधानादिति भावः। समप्राधान्ये यथा आग्नेयादीनाम्, अङ्गाङ्गित्वे यथा प्रयाजाग्नेयादीनां, विपर्यय इति। अध्यापनस्याङ्गत्वे उपनयनस्याङ्गित्वे वेत्यर्थः। ननु दर्शपूर्णमाससोमयोः स्वतन्त्रफलवत्त्वान्नाङ्गाङ्गित्वमित्याशङ्क्य प्रकृतेऽपि तथेत्याह—वाक्यान्तर इति।

"उपनीय तु यः शिष्यम्" इत्यादावध्यापनविधिमङ्गीकृत्यापि उपनयनस्य तदङ्गत्वं निरस्तम्, इदानीमङ्गीकारं परित्यजति—अपि चेति। संज्ञाविधिमात्रस्य स्वतः प्रयोजनपर्यवसानाभावादाह—आचार्यायेति। संज्ञाविधिः संज्ञाज्ञापकम्। उभाभ्यामाचार्यो भवतीत्युभाभ्यामाचार्यसंज्ञाविधाने दृष्टान्तमाह—न विद्ययेति।

इतिवत् तत्संज्ञाविधिप्रायपाठात् । अनन्तरश्लोके—

"निषेकादीनि कर्माणि यः करोति यथाविधि ।
संभावयति चान्नेन स विप्रो गुरुरुच्यते" ॥

इति संज्ञाविध्युपलम्भात् । अपि चैवम्—

"स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति" ।

इत्यत्रापि गुरुत्वकामो निषेकादिक्रियाः कृत्वा वेदमस्मै दद्यादिति विधिकल्पने निषेकादीनाम[1]प्यध्यापनाङ्गत्वं स्यात् । न चैवम् । तस्मादुपनयनस्यानन्याङ्गतयोपनीताधिकारिकमध्ययनमिति । तथा च न्यायरत्नमालायाम्—"अप्राप्तविधिरेवायं न यावद्धि फलवत्कर्मानुष्ठानोपयोगिज्ञानोपायतयाध्ययनानुष्ठानमुत्प्रेक्ष्यते, तावदेव द्विजातीनामुपनीतानां तत्प्रक्रमाधीतया "स्वाध्यायोऽध्येतव्यः" इति प्रत्यक्षश्रुत्याध्ययनं विधीयते, श्रुतेर्लिङ्गाच्छीघ्रं प्रवृत्तेः" इति ।

### रत्नतूलिका

तत्रापि "दातव्यं प्रत्यहं पात्रे" इत्यादि विध्यपेक्षिता पात्रसंज्ञेति भावः । नन्वस्तु संज्ञाविधिरूपेणान्यशेषत्वम्, तथापि साङ्गाध्यापनविधिपरत्वमप्यस्त्वित्याशङ्कयातिप्रसङ्गमाह—स गुरुरिति । परमप्रकृतमुपसंहरति—तस्मादिति । उपनीताधिकारिकमध्ययनमित्यत्र संमतिमाह—तथा चेति । उपनीतानामध्ययनं विधीयत इति तदधिकारिकत्वमुक्तमिति भावः ।

इयता प्रबन्धेन "अष्टवर्षं ब्राह्मणमुपनयीत" इति श्रुत्या उपनयनं विधीयते, तच्च नाध्ययनाङ्गम्, न वा अध्यापनाङ्गम्,

[1] ध्ययनाङ्गत्वं—ङ.

### उपनयनस्योपनीताधिकारिकत्वपक्षः

केचित्पुनः "एतया अन्नाद्यकामं याजयेत्" इत्यादाविव उपनयीताध्यापयीतेति [1]वृत्त्यर्थप्राप्तानुवादित्वात् "तस्मिन्नभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत्" इति स्वातन्त्र्यलिङ्गादाचार्योपगमनस्योपनयनपदोपलक्षितस्य सामर्थ्यादध्ययनविध्यपेक्षिताचार्यासत्तिफलस्यार्थवशादपि प्राप्नुवतः "अष्टवर्षो ब्राह्मण उपगच्छेत्, सोऽधीयीत" इति नियमविधिपरिणामेन आचार्यासत्तिरूपदृष्टसमवाय्यदृष्टार्थतयोपनयनस्या-

### रत्नतूलिका

किं त्वध्ययनविधेरधिकारिविशेषणमात्रमित्युक्तम्। इदानीं नोपनयनाध्यापनयोर्विधेयत्वम्, किं तूपगमनाध्ययनयोरेव, तच्चोपगमनमध्ययनेऽङ्गमधिकारिविशेषणं चेति पक्षान्तरमाह—केचित्पुनरिति। वृत्त्यर्थेति। ब्राह्मणस्य याजनमिवाध्यापनं तादर्थ्येनोपनयनं च जीवनार्थतया मानान्तरप्राप्तमित्यनुवाद्यमित्यर्थः। उक्तेऽर्थे आपस्तम्बस्मृतौ लिङ्गं दर्शयति—तस्मिन्निति। सदन्वयप्रसूतिविद्याभ्यां प्रसिद्धामित्यर्थः। स्वातन्त्र्येति। उपनयनस्य विधेयत्वे आचार्याधीनमेव माणवकस्योपगमनमिति तस्य तत्र स्वातन्त्र्यं न स्यादिति भावः। आचार्यासत्तिफलकत्वे हेतुः—सामर्थ्यादिति। दृष्टसमवाय्यदृष्टार्थतयेति। यथा "व्रीहीनवहन्ति" इति विहितमवहननं दृष्टतण्डुलसमवायिनियमादृष्टार्थतया दर्शपूर्णमासाङ्गं तथोपगमनमप्यध्ययनाङ्गम्। तण्डुलेष्वनियतस्य नखविदलनादेरिवाचार्यासत्तौ कदाचिदाचार्यकर्तृकस्य कदाचिन्माणवककर्तृकस्य चोपगमनस्योपायतया प्राप्ते-

[1] प्रत्यक्षप्राप्त-ख.

ध्ययनाङ्गतामाश्रित्य प्रदोषादिकालदीक्षादिवदधिकारिविशेषणत्वमविरुद्धमित्युपनीताधिकारिकमध्ययनमित्याहुः।

सर्वथापि साधिकारत्वात्स्वविधिप्रयुक्तानुष्ठानं स्वाध्यायाध्ययनम्, आधानसंस्कारेणारण्यादौ समारोप्यस्यापचारे नश्यतश्च देवतात्मनोऽग्नेरिवाध्ययनसंस्कारेण स्वाध्यायस्यानुत्पाद्यतया सिद्धस्याध्ययने कारकभावोपपत्त्या पुरुषार्थविधिपरिणामोपपत्तेः।

## रत्नतूलिका

रविशेषादिति भावः। **प्रदोषादीति**। यथा सायंकालादीनामग्निहोत्रादिषु प्रतीक्ष्यतयाङ्गत्वं, तत्कालजीविनोऽग्निहोत्रादिविधानादधिकारिविशेषणत्वं च, यथा वा नियमग्रहणरूपाया दीक्षायाः ज्योतिष्टोमं प्रत्यङ्गत्वम्, "दीक्षितो यजेत" इति दीक्षितस्य यागविधानादधिकारिविशेषणत्वं च, तद्वदित्यर्थः। पक्षान्तरमुपसंहरति—**इत्युपनीतेति**।

**सर्वथापीति**। अध्ययनानङ्गमुपनयनमिति स्वमते, अङ्गमिति मतान्तरे चेत्यर्थः। ननु "स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायस्य संस्कार्यत्वावगमात्तस्य च यत्रोपयोगस्तद्विधिप्रयुक्तमेवाध्ययनस्यानुष्ठानं न स्वविधिप्रयुक्तम्, यथाधानस्योत्तरक्रतुविधिप्रयुक्तमनुष्ठानमिति परमते आपादितं दोषमाशङ्क्य तद्वैषम्यमुपपादयति—**आधानसंस्कारेणेति**। **अग्नेरिवेति** व्यतिरेकदृष्टान्तः, यथाऽऽधानेनाग्निस्वरूपोत्पादः, न तथाध्ययनेन स्वाध्यायस्वरूपोत्पाद इति। स्वरूपोत्पत्तौ नियामकद्वयमाह—**अरण्यादावित्यादि**। प्रत्यक्षाग्नेरेवाधानसाध्यत्वे तस्य समारोपः अस्पृश्यस्पर्शादिरूपापचारे नाशश्च प्रत्यक्षविरुद्ध इति भावः। अस्त्वेवम्, स्वविधिप्रयुक्तौ किमायातमित्यत आह—**सिद्धस्येति**। यथा "सुवर्णं भार्यं" इत्यादौ पुरुषार्थविधिविपरिणामः,

### अध्ययनविधेर्नित्यत्वम्

**नित्यं च तत्, अनधीयानस्य अश्रोत्रिया इत्यादि दोषश्रवणात्। तथा च स्वप्रधानतया विधीयमानमदृष्टद्वारा पुरुषार्थं कर्मप्रधानतया च संस्कारार्थम्। संस्कृतश्च स्वाध्यायो ब्रह्मयज्ञजपफलवदर्थावबोधादावुपयोक्ष्यते, दृष्टरूपेण स्वाध्या-**

### रत्नतूलिका

तथा स्वाध्यायेनाधीयीतेति पुरुषार्थविधिविपरिणामः स्यात्। आधाने तु नैवम्; साध्यस्याग्नेः कारकभावायोगात्। पुरुषार्थविधिपरिणामासंभवे उत्पन्नस्याग्नेर्यत्र विनियोगस्तद्विधिप्रयुक्तमेवानुष्ठानं न स्वविधिप्रयुक्तमिति वैषम्यमिति भावः। अत एवोपनयनस्याधिकारिविशेषणत्वं साधितमिति हृदयम्।

तर्हि तद्वदेव फलकल्पना स्यात्। तथा च कामाधिकारत्वेनाध्ययनमनित्यं स्यादिति परमतापादितदोषः स्यादित्यत आह—**नित्यं च तदिति**। अत्र फलकामो न नियोज्यः, येनोक्तदोषः स्यात्, किंतूपनीतः, तथा चोपनीताधिकारिकेऽध्ययने "कर्मणा पितृलोकः" इत्यादिना श्रुतं पितृलोकादिकं निषेधावगतप्रत्यवायपरिहारो वानुद्देश्यं फलमप्यस्तु। न चैतावता तस्यानित्यत्वमिति भावः। स्वाध्यायस्य श्रुतं संस्कार्यत्वं परित्यज्याश्रुतपुरुषार्थविधिविपरिणामोऽयुक्त इति यदि कस्य चिदाग्रहस्तं प्रति तदपि सिद्ध्यतीत्याह—**तथा चेति**। स्वप्रधानतया पुरुषार्थमिति संबन्धः। तथा च पुरुषार्थविधिपरिणामेऽपि स्वाध्यायस्वरूपपर्यालोचनायामध्ययनं प्रति संस्कार्यत्वमपि सिद्ध्यतीति भावः। [1] कथं तर्ह्यक्षरावाप्तिफलकत्वप्रवाद इत्याशङ्क्य तदप्युपपन्नमित्याह—**दृष्टरूपेणेति**। तथा चाध्ययनस्य गुरुमुखोच्चारणानूच्चा-

[1] कथं तस्याक्षर—क.

यावाप्त्यर्थं च। अदृष्टार्थत्वेऽपि गुरुमुखोच्चारणानूच्चारणरूपस्याध्ययनस्य ब्रह्मयज्ञादौ स्वाध्यायविनियोगबलेनावृत्त्याक्षेपात्। एवमुपनयनमपि पुरुषार्थं, माणवकस्य संस्कारार्थं, आचार्यासच्चाध्ययनार्थं च।

यदि च कांस्यादिशुद्धिरिव तदशुद्धेरुपनयनसंस्कार एव पुरुषैनसो निबर्हणार्थः, मा भूत्स्वतन्त्रादृष्टार्थम्, न काचित्क्षतिः। आधानमपि "अनाहिताग्निता स्तेयम्," "नास्तिक्यं चोपपातकम्" इति मनूक्तानाहिताग्नित्वनिमित्तोपपातकपरिहारार्थतया पुरुषार्थम्, अग्निसंस्कारार्थं च। यथा "सूक्तवाकेन प्रस्तरं प्रहरति" इति विधीयमानं यागात्मनार्थकर्म देवतादिसंस्कारकर्म च तद्वत्।

रत्नतूलिका

रणरूपदृष्टरूपमेकम्, विहितरूपमपरम्। तत्राद्येनाक्षरावाप्तिफलकत्वम्, द्वितीयेऽपि स्वप्राधान्ये स्वतन्त्रादृष्टफलकत्वम्, कर्मप्राधान्ये स्वाध्यायगतसंस्काररूपादृष्टफलकत्वमिति विवेक इति भावः। नन्वदृष्टार्थत्वादध्ययनस्य सकृदनुष्ठानेऽपि चारितार्थ्यात्तस्य दृष्टरूपेणापि कथमक्षरावाप्तिः फलं स्यादित्यत आह—**अदृष्टार्थत्वेऽपीति**। **एवमिति**। तस्यापि द्वैरूप्यादिति भावः। **पुरुषार्थमिति**। अदृष्टद्वारा एनश्शान्त्यर्थमित्यर्थः। **संस्कारार्थमिति**। संस्कृतस्य च विहितसर्वकर्मसु विनियोग इति भावः।

**संस्कार एवेति**। न तु मध्ये किंचिददृष्टं कल्प्यमित्येवकारार्थः। **न काचित्क्षतिरिति**। संस्कारे एनोनिर्हरणार्थत्वस्याप्यपूर्वत्वेन विधिसाफल्यादिति भावः। आधाने तु दृष्टप्रयोजनाभावात्स्वतन्त्रं द्रव्यगतमाहवनीयादिरूपं चेत्यदृष्टद्वयमात्रमित्याह—**आधानमपीति**। **यागात्मनेति**। प्रस्तरप्रहरणं यागः। स च देवतामुद्दिश्य द्रव्यत्यागात्मकः। तस्य त्यागांशेनादृष्टार्थता; उद्देशांशेनेष्टदेवतासंस्कारार्थतेत्युभयार्थत्वमिति चतुर्थे व्यवस्थापितमिति भावः।

अध्ययनविधेरपूर्वत्वे विरुद्धत्रिकद्वयापत्तिनिराकरणम्

अथ कथमेकस्मिन्वाक्ये स एव [1]स्वाध्यायाध्ययने पुरुषार्थे गुणः, संस्कारार्थे प्रधानम्? उपादेयश्च प्रथमे उद्देश्यश्च द्वितीये विधेयश्चानुवाद्यश्चेति प्रतीयेत। प्रस्तरप्रहरणादावपि कथम्? विरुद्धत्रिकद्वयान्यतरस्कन्धस्य नान्तरीयकतया समाधानं च समानमुभयत्र।

रत्नतूलिका

विरुद्धत्रिकद्वयापत्तिरिति शङ्कते—अथ कथमिति। वस्तुपरिहारं मनसि निधाय प्रतिबन्दीमालम्बते—प्रस्तरप्रहरणादाविति। तत्रापि "सूक्तवाकेन प्रस्तरं प्रहरति" इति वाक्ये विहितस्य प्रहरणस्य त्यागांशेनादृष्टार्थत्वे देवतादीनां गुणत्वं विधेयत्वमुपादेयत्वं चेत्येकं त्रिकम्, उद्देशांशेन संस्कारार्थत्वे तत्रैव देवतादीनां प्राधान्यमनुवाद्यत्वमुद्देश्यत्वं चेत्यपरं त्रिकमिति विरुद्धत्रिकद्वयस्य समानत्वादिति भावः। उभयसाधारणं परिहारमाह—विरुद्धत्रिकद्वयेति। अन्यतरस्कन्धस्य प्राधान्यादिस्कन्धस्य। नान्तरीयकतयेति। स्वाध्यायगुणकमध्ययनं देवतादिगुणकं प्रहरणं च वाक्येन विधीयते। शब्दात्मकस्य स्वाध्यायस्य उपयुक्तस्य देवतादेश्चाध्ययनप्रहरणनिर्वर्तकत्वं तत्तत्क्रियाजन्यफलशालित्वमन्तरा न संभवतीति वस्तुसामर्थ्यादेव प्राधान्यादिसिद्धिरिति न वाक्यभेदादिदोष इति भावः।

---

[1] स्वाध्यायोऽध्ययने—ख.

### नियमविधित्वम्

अन्ये त्वावश्यकजपाद्युपयोगिस्वाध्यायविधुरा एवाश्रोत्रिया इति निन्द्यन्ते। ततश्च स्वध्यायावाप्तौ लोकावगतसाधनेऽध्ययने नियमार्थो विधिरिति साङ्गविहिताध्ययनावाप्तस्वाध्यायादेव पुरुषार्थसिद्धिरित्याहुः।

### अध्ययनविधेरर्थज्ञानफलकत्वाभावे विचारप्रयोजकचिन्ता

ननु सक्तुन्यायेन स्वाध्यायेनाधीयीतेति विधिं विपरिणम्य स्वाध्यायाध्ययनेन यच्छक्यमक्षरावाप्त्यादि तद्भावये-

### रत्नतूलिका

अध्ययनविधिः पुरुषार्थतयाऽपूर्वविधिरिति स्वपक्ष उक्तः। इदानीं नियमविधिरिति पक्षान्तरमाह—अन्ये त्विति। स्वाध्यायविधुरा एव न त्वध्ययनविधुरा इत्येवकारार्थः। तथा चावश्यकब्रह्मयज्ञादिजपोपयोगिस्वाध्याय एव पुरुषस्य नित्यो न त्वध्ययनमिति भावः। ततश्चाध्ययनस्य पक्षप्राप्तत्वान्नियमविधिरुपपद्यत इत्याह—ततश्चेति। लोकावगतसाधने इत्यनेन विध्यवगतत्वव्यावृत्तिः। तथा च लोकतोऽन्वयव्यतिरेकाभ्यां कदाचिदध्ययनं कदाचिल्लिखितपाठादिरिति पक्षतः प्राप्तिरिति भावः। नियमादृष्टस्योपयोगमाह—इति साङ्गविहितेति।

अध्ययनविधेरर्थज्ञानफलकत्वाभावे बाधकमाशङ्कते—ननु सक्तुन्यायेनेति। "सक्तून् जुहोति" इत्यत्र द्वितीयया सक्तूनां साध्यत्वं श्रुतम्, तथापि तेषां भूतभाव्युपयोगाभावेन संस्कारे प्रयोजनाभावात्सक्तुभिर्जुहोतीति यथा विपरिणामः कृतस्तथेत्यर्थः।

दित्यध्ययनविधेरर्थज्ञानफलकत्वं यदि नाद्रियते, वेदाध्ययनानन्तरकालविहितस्नानबाधेन विचारप्रयोजकाभावात्तदनन्तरकालकर्तव्यतया विचारशास्त्रं नारभ्येत। अध्ययनविधेरर्थज्ञानरूपदृष्टफलपर्यवसानाय हि विचाराक्षेपः, तदभावे तदभावादिति।

विचारस्य रागतः प्राप्तत्वम्

अत्राह—अध्ययनविधिगृहीतसाङ्गस्वाध्यायात्फलवदर्थावगमप्रतीतेः फलस्य च तदर्थनिर्णयायत्तानुष्ठानाधीनत्वात्तन्निर्णय-

रत्नतूलिका

विधिं विपरिणम्येत्यर्थज्ञानफलत्वाभावे हेतुरुक्तः। अथ वा अध्येतव्य इति संस्कार्यत्वमात्रपर्यवसाने स्वाध्यायावाप्तावेवाध्ययनस्य पर्यवसानादर्थज्ञानफलत्वं न स्यात्। अतस्तन्मतेऽपि विधिविपरिणामो वक्तव्य इत्यर्थज्ञानहेतुतया तदुक्तिः। अत एव श्रवणविधिसिद्धान्ते "न च स्वाध्यायाध्यायोऽपि गुणकर्मैव तान्त्रिकाणाम्; तद्विधिर्विश्वजिन्न्यायेन स्वर्गार्थः दृष्टसंभवन्यायेनार्थावबोधार्थो वेति निरूपणविरोधात्" इति गुणकर्मत्वाभावस्यार्थावबोधहेतुत्वोपयोगोक्तिरिति भावः। स्वमते त्वध्ययनविधिरेव विचारानुष्ठापक इत्यभिप्रेत्याह—अध्ययनविधेरिति।

अध्ययनविधिगृहीतेति। "स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायसंस्काररूपमध्ययनं विधीयते। संस्कृतस्य च तस्य जपादौ फलवदर्थावबोधे चोपयोगो वाच्यः। तथा चाङ्गविनाकृतस्य तस्यार्थज्ञानोपयोगो न संभवतीति साङ्गमेव स्वाध्यायमध्ययनविधिर्ग्राहयतीति

रागादेवाधीतवेदः पुरुषः स्वयमेव विचारे प्रवर्तते । अथापि—

"वेदाङ्गानि समस्तानि कृष्णपक्षेषु संपठेत्"

"षडङ्गो वेदोऽध्येतव्यः" इत्यनुष्ठानसादेश्या[1]दङ्गाध्ययनस्य वेदाध्ययनाङ्गत्वेऽकिंचित्करस्य तदयोगात्, किंचित्कारापेक्षायां वेदाध्ययनस्वरूपसन्निपातित्वाभावेन विषयद्वारा तदर्थ-ज्ञानफलोपकारित्वावश्यंभावेऽध्ययनविधेरर्थज्ञानफलत्वाक्षेपात्ता-दर्थ्येन तत्प्रयुक्त एव विचारो न रागप्रयुक्त इत्यापद्यत इति चेत्,

रत्नतूलिका

वक्तव्यमिति भावः। स्वयमेवेति। न तु विधेरित्येवकारार्थः। अथापीति। रागात्प्रवृत्तिसंभवेऽपीत्यर्थः। अनुष्ठानसादेश्यादिति। यथा पशुधर्माणामौपवसथ्याख्ये चतुर्थदिने अग्नीषोमीयपशुना सहानु-ष्ठेयानामेककालानुष्ठानलक्षणस्थानप्रमाणेन तदङ्गत्वं तद्वदिति भावः। विषयद्वारेति। अङ्गाध्ययनस्य विषयोऽङ्गानि तद्द्वारेत्यर्थः। अर्थ-ज्ञानफलत्वाक्षेपादिति। अङ्गत्वनिर्वाहो द्वेधा, स्वरूपोपकारित्वेन, यथाग्नेयादौ द्रव्यादेः, फलोपकारित्वेन वा, यथा तत्रैव प्रजाजादेः। तत्राङ्गभूतशिक्षाद्यध्ययनेन स्वाध्यायाध्ययनस्वरूपस्यानिष्पत्तेरन्त्यः पक्षः स्वीकार्यः। ततश्चाङ्गिनोऽध्ययनस्य यादृशफलाक्षेपेऽङ्गस्याङ्गाध्ययनस्य फलोपकारित्वं निर्वहति तादृशफलमाक्षेप्तव्यम्। इयांस्तु विशेषः— प्रयाजादेरदृष्टद्वारा आग्नेयादिफलोपकारित्वम्, अत्र तु स्वविषय-भूताङ्गानामध्ययनविषयभूतस्वाध्याये प्रकृतिप्रत्ययादिविभागस्वरूपदृष्ट-द्वारेति। तादर्थ्येन अर्थज्ञानार्थत्वेन। तत्प्रयुक्तः अध्ययनविधि-प्रयुक्तः। स्यादेवमङ्गत्वे, तदेव तु न संभवति; प्रमाणाभावादिति हृदि निधायाह—इति चेदिति। किं तत्रैककालानुष्ठानमात्रं प्रमाणम्,

[1] दुक्ताध्ययनस्य—ग.

नानुष्ठानैककालत्वमात्रादङ्गाङ्गिभावः; दर्शादावभावात्। नापि वेदाध्ययनतन्त्रमध्यविधानादङ्गाध्ययनस्य तदङ्गता; तुल्यविधित्वेन तदसिद्धेः। अपि च विषयावच्छिन्नस्याङ्गाध्ययनस्य वेदाध्ययनाङ्गत्वे शिक्षादीनां वेदाङ्गत्वसंशब्दनं विरुध्येत। तस्माद्वेदतदङ्गाध्ययनयोः स्वस्वविषयावाप्तिफलयोर्नाङ्गाङ्गितेति। नचैवं वेदाध्ययनवदङ्गाध्ययनस्याप्यक्षरावाप्तिमात्रफलत्वे वेदार्थापातप्रतीतेरप्यनुपपत्तेस्तन्निर्णयरागाभावात् प्रयोजकाभावेन विचारप्रवृत्तिरेव न स्यादिति वाच्यम्; शिक्षादीनामङ्गतया वेदस्य किंचित्कारापेक्षायां दृष्टसंभवन्यायेन स्वर-

रत्नतूलिका

उत वेदाध्ययनाङ्गमध्ये विधानमपीति विकल्प्याद्यमतिप्रसङ्गेन दूषयति– **नानुष्ठानैकेति।** **दर्शादाविति** आग्नेयादावित्यर्थः। अथ वा दर्शपिण्डपितृयज्ञादावित्यर्थः। पश्वङ्गानां तूपाकरणादीनां पशुसंबन्धित्वेन श्रुतत्वादितरेषामुत्तरवेद्यादीनां तन्मध्यपाताच्च पश्वङ्गत्वे सति स्थानादग्नीषोमीयाङ्गत्वं व्यवस्थाप्यत इति वैषम्यमिति भावः। द्वितीयमसिद्ध्या दूषयति—**नापीति।** तन्त्रमङ्गसमुदायः। **तुल्यविधित्वेनेति।** उभयोरपि स्वस्वविषयावाप्तिफलकत्वेन स्वतन्त्रविधित्वेन तुल्यत्वम्, न त्वन्यतन्त्रमध्येऽन्यस्य विधिरित्यर्थः। **वेदाङ्गत्वसंशब्दनमिति।** "शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमित्यङ्गानि" इत्यादीत्यर्थः। स्वतन्त्रविधित्वमुपसंहरति — **तस्मादिति।** **अक्षरावाप्तिमात्रफलत्व इति।** तथा चाङ्गानां व्याकरणादीनामर्थज्ञानाभावे स्वाध्याये प्रकृतिप्रत्ययविभागज्ञानायोगादिति भावः[1]। **अङ्गतयेति।** तेषां वेदाङ्गत्वं "शिक्षा कल्पो

[1] दित्यर्थः–कुं.

वर्णप्रकृतिप्रत्ययविभागादिज्ञानद्वारा तदर्थज्ञानोपयोगकल्पनया तदापातप्रतीतिसंभवात् । न चैवं रागप्रयुक्तत्वे विचारस्य "आचार्यकुलाद्वेदमधीत्याभिसमावृत्य", "वेदमधीत्य स्नायात्" इति वेदाध्ययनानन्तरकालमेवाभिसमावर्तनप्रसङ्गः; अध्ययनविधेरप्यक्षरावाप्तिमात्राव[1]सानतया विचारानाक्षेपकत्वेन बाधकाभावात् । किं चातः, वृत्ते निवेशे नैयमिकनैमित्तिकादिकमविद्वाननुतिष्ठन् अन्धतमसमापद्येतेति, न; अव्यक्तस्य सन्ध्योपासनादिवदुपद्रष्ट्राद्युपदेशजन्मनापि तस्य ज्ञानेनानुष्ठानोपपत्तेः। न च शूद्रस्याप्येवं प्रसङ्ग इत्यपशूद्रनयविरोधः;

रत्नतूलिका

व्याकरणं निरुक्तं छन्दो ज्योतिषमित्यङ्गानि" इति वचनेन सिद्धम् । तथा चाङ्गाध्ययनविधेरक्षरावाप्तिमात्रपर्यवसानेऽपि शिक्षादीनामङ्गत्ववचनमेव तेषामर्थज्ञानाक्षेपकमिति भावः । वेदाध्ययनानन्तरकालमेवेति । क्त्वाश्रुत्यवगतस्य पौर्वापर्यस्यासति बाधके नैरन्तर्यपर्यवसानात् रागस्य च शास्त्रसिद्धनैरन्तर्याबाधकत्वाच्चेति भावः । बाधकाभावादिष्टापत्तिरित्यभिप्रेत्य पृच्छति—किं चात इति । अतश्च किमित्यन्वयः । बाधकमाशङ्कते—वृत्ते निवेश इति । अपशूद्रनयविरोध इति । तत्र ह्यग्निहोत्रादिविधयः स्वविधेयानुष्ठानाय विद्यामपेक्षमाणा उपनयनसंस्कृतानध्ययनविधिसम्पादितविद्यांस्त्रैवर्णिकानासाद्य निर्वृण्वन्ति, न तु शूद्रस्य विद्यामाक्षिपन्तीति न तस्य कर्मानुष्ठानमित्युक्तम् । इदानीं सर्वेषामध्ययनविध्यधीनविद्याभावस्य उपद्रष्ट्राद्युपदेशजनितविद्यावत्त्वस्य च तुल्यत्वाच्छूद्रस्याप्येवमनुष्ठानं प्राप्तमिति तदधिकरणविरोध इति

[1] सन्नतया—ख. ग.

"न शूद्राय मतिं दद्यात् .... ........ ।
न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ॥"

इत्याद्युपदेशनिषेधात्, तस्य मन्त्राभावात्, "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" इत्याहत्य यज्ञानवक्लृप्तिवचनाच्च । यद्येवमनपेक्ष्य एव विचारः प्राप्तः, सत्यं नानुष्ठानाय तदपेक्षा ; स्त्र्यादीनामन्तरेणापि विचारमनुष्ठानात्, किं तूपद्रष्टृवचने प्रमाणमूलत्वनिश्चयाय द्रष्टृणामुपपादनाय च । न च वृत्ते निवेशे नैयमि-

रत्नतूलिका

भावः । इत्याद्युपदेशनिषेधादिति । तथा चोपदेष्टुरभावान्न तस्यानुष्ठानमिति भावः । यदि कश्चिन्निषेधमतिक्रम्याप्युपदिशेत्तदा तस्याप्यनुष्ठानं स्यादित्यत आह—मन्त्राभावादिति । "अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्" इत्यादिना तस्य वेदविषये श्रवणोदाहरणादेर्निषेधादिति भावः । यद्येवमिति । उपद्रष्टृवचनेनैवानुष्ठानाङ्गीकार इत्यर्थः । किमनुष्ठानायानपेक्ष्य इत्यापाद्यते, उत प्रयोजनान्तरायापीति विकल्प्याद्यमङ्गीकरोति—सत्यमिति । द्वितीयं दूषयति—किं त्विति । ननु रागप्राप्तविचारस्य [1] स्नानपूर्वकालकर्तव्यत्वाभावादनन्तर[2]कर्तव्यत्वस्य [3]प्राप्ताववकाशो न स्यादित्याशङ्क्य निषेधति—न च वृत्त इति । नन्वध्यापनादेरवश्यकर्तव्यत्वम् ;

"इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च ।
प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा ॥"

"याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमार्जयेत्" इत्यादिशास्त्रविहितत्वात्, विचारस्तु नैवम् ; तस्य रागप्राप्तत्वात्, अतः श्रावयितुरवसरलाभोऽस्ति

[1] स्नानपूर्वकालनियमाभावाद—घ. कुं. [2] कर्तव्यत्वस्यापि—कुं. [3] प्राप्तावकाशो—घ.

कार्यावरुद्धासंवेशनकालस्य विचारावसरो न लभ्यते, अत एवाहापस्तम्बः—"संवत्सरे संवत्सरे द्वौ द्वौ मासौ समाहित आचार्यकुले वसेत् भूयः श्रुतमिच्छन्" इत्यारभ्य "तच्छास्त्रैर्विप्रतिषिद्धम्", "निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते", "अग्निहोत्रमतिथयः" इत्यादीति वाच्यम्; श्रावयितुरिव श्रोतुरपि तदवसरलाभोपपत्तेः। वृत्त्यर्थतया रागप्राप्तस्यैवाध्यापनस्य शास्त्रानुमतत्वेऽपि कर्मच्छिद्रेष्वेव कार्यत्वात्। श्रोतुरप्येवं कर्मच्छिद्रसंभवात्, तस्यापि हितैषिवचनतो यावदनुष्ठेयज्ञानसंभवात्। स्मृतिश्च नैरन्तर्येणाचार्यपरतया समिदाहरणादिकुर्वतो गुरुकुलवासो नैयमिकाद्यनुष्ठानोपरोधीति तन्निषेधाभिप्राया। अन्यथा श्रावणमपि न स्यात्, श्रावयितुरपि "निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते" इति हेतोस्तुल्यत्वात्। अत एव युधिष्ठिरादीनां गृहिणामेव सतां भीष्मादेर्धर्मश्रवणं भारतादिषूपाख्यायते। तस्माद्रागत एव विचारप्रवृत्तिरिति।

## रत्नतूलिका

न श्रोतुरिति मन्दशङ्कायामाह—**वृत्त्यर्थतयेति**। **रागप्राप्तस्येति**। न त्वग्निहोत्रादीनामिव तत्तत्कालोऽनुष्ठेयतयाध्यापनादेर्विधानमस्ति, येन विरोधो न स्यात्। स्मृतौ तस्योपादानं तु पुरुषस्य धनार्जनोपायनियमार्थं न तु विधानार्थमिति भावः। **कर्मच्छिद्रेष्वेति**। किंचित्कर्म समाप्य स्वकालप्रतीक्षया यदा कर्मान्तरं नारभ्यते तदन्तरालकालेष्वित्यर्थः। **स्मृतिश्चेति**। "तच्छास्त्रैर्विप्रतिषिद्धम्" इति स्मृतिरित्यर्थः। तथा च समिदाहरणादिशुश्रूषां विना विचारः कर्तव्य इति भावः। विचारमात्रनिषेधपरत्वे बाधकमाह—**अन्यथेति**।

### विचारस्य रागतः प्राप्तत्वनिरासः

तदिदमापातरमणीयम्; वेदार्थमविचार्याचार्यकुलात्समावृत्तस्य दारसङ्ग्रहे तदनन्तरकर्तव्याज्ञानात्। हितैषिवचनमेलनैकान्त्याभावात्। अन्यथानपेक्ष्यतया विचारशास्त्रस्यैवानारम्भप्रसङ्गात्। यत्तु हितैषिवचने प्रामाण्यनिश्चयाय तदपेक्षेति, तन्न; प्राग्विचारात्तत्र तदनिश्चयेऽनुष्ठानविघातात्प्रत्यवायापातात्। यदपि प्रष्टृपदेशार्थो विचार इति, तदात्मनः शूद्राद्युपदेश्यत्वमिच्छतामनुरूपम्; सुतरामपि क्षत्रियादेरुपदेष्टृत्वसंभवात्। अथौपमन्यवप्रभृतीनां क्षत्रियाद्विद्याग्रहणमनुश्रूयते, सजातीयावरोपदेष्टृत्वं च क्षत्रियस्य न विरुध्यते; भीष्मादेर्युधिष्ठिराद्युपदेशलिङ्गादिति चेत्, युक्तं प्राचीनशालादीनामुपास्यविषये समुपजातसन्देहानामारुणिं ब्राह्मणमुपेत्य तस्याप्यविदितार्थत्वे-

### रत्नतूलिका

तत्र विचारात्प्राक्प्रामाण्यनिश्चयोऽस्ति न वेति विकल्पं हृदि निधाय द्वितीयं दूषयति—**तन्न प्राग्विचारादिति**। इष्टापत्तिमाशङ्क्य बाधकमाह—**प्रत्यवायेति**। आद्ये विचारवैयर्थ्यमिति भावः। विचारस्य प्रष्टुपदेशार्थत्वे यस्योपदेष्टृत्वं संभवति ब्राह्मणस्य तस्य विचारप्राप्तावपि क्षत्रियवैश्ययोर्विचारानारम्भप्रसङ्ग इत्यभिप्रेत्य दूषयति—**तदात्मन इति**। **अनुश्रूयत इति**। छान्दोग्ये वैश्वानरविद्यायां—"तान्हानुपनीयैवैतदुवाच" इत्यत्रेति शेषः। किं च क्षत्रियादेर्ब्राह्मणस्येव सर्वदा उपदेष्टृत्वमिति विचारे प्रवृत्तिः, उत सत्यामापद्युपदेष्टृत्वं संभाव्यत इति विकल्प्य, आद्य आह—**युक्तमिति**। **उपास्यविषय इत्यारभ्यापदुप-**

नापदि क्षत्रियाद्विद्याग्रहणम्। तथा च लिङ्गम्—"न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान्गच्छति" इति। तथा स्मार्तमपि लिङ्गं ब्राह्मणालाभ एव क्षत्रियादेर्विद्यार्थग्रहणं दर्शयति। यथा—

"ततो राजा हतां ज्ञात्वा धेनुं व्याघ्रेण चर्त्विजः।
प्रायश्चित्तं स पप्रच्छ किमत्रेति विधीयते ॥
ते चोचुर्न वयं विद्मः कशेरुः पृच्छ्यतामिति।
कशेरुरपि तेनोक्तस्तथेति प्राह भार्गवम् ॥
शुनकं पृच्छ राजेन्द्र नाहं वेद्मि स वेत्स्यति।
स गत्वा तमपृच्छच्च सोऽप्याह शृणु यन्मुने ॥
न कशेरुर्न चैवाहं न चान्यः साम्प्रतं भुवि।
वेत्त्येक एव त्वच्छत्रुः खाण्डिक्यो यो जितस्त्वया ॥"

इत्यारभ्य

"ततः सर्वं यथावृत्तं धर्मधेनुवधं द्विज।
कथयित्वाथ पप्रच्छ प्रायश्चित्तं हि तद्गतम् ॥"

इत्यादि। एतेन भाष्मीदानां धर्मोपदेष्टृत्वं व्याख्यातम्।

"अद्यैव परिपृच्छध्वं यद्वो मनसि वर्तते।
ज्ञानान्यल्पीभविष्यन्ति भीष्मे लोकान्तरं गते" ॥

इति तत्रैव भीष्मवदन्यो धर्मज्ञो नास्तीत्यर्थवाददर्शनात्।

रत्नतूलिका

पादनम्। तथा चेति। लिङ्गं च तथा ब्राह्मणस्योपदेष्टुरभावं दर्शयति। त्वत्तः प्रागियं वैश्वानरविद्या ब्राह्मणान्न गच्छतीत्यभिधानादिति भावः। राजा केशिध्वजः। किमत्र विधीयत इति पप्रच्छेत्यन्वयः। द्वितीय-

नचैवमायतावापदमालक्ष्य क्षत्रियादेरुपदेशार्थो विचार इति युक्तम् ; अपुरुषार्थे दुःखाकरे प्रवृत्त्ययोगात् । न च वृत्त्यर्थः क्षत्रियादेरुपदेशः शास्त्रेऽनुज्ञायते । तस्माद्रागाधीने विचारे न त्रैवर्णिकस्य तत्सिद्धिः । अपि चोपयमानन्तरं विचारमुपयतः "बुध्द्वा कर्माणि यत्कामयेत तदारभेत" इति स्मृतिरुपरुध्येत । अपि चैवं परिणयानन्तरं गुर्वधीनस्योदकाहरणादिशुश्रूषापरस्य कर्मलोपः स्यात् । यत्तूदकाहरणादिशुश्रूषाध्ययनधर्मो न विचारयतोऽस्तीति, तन्न ; उदितशास्त्रविप्रतिषेधस्मृतेरनर्थकत्वप्रसङ्गात्।

रत्नतूलिका

माशङ्क्य निषेधति—न चैवमिति । आयतौ कालान्तरे । अपुरुषार्थत्वमसिद्धम् ; वृत्त्यर्थत्वात् , अत एव खाण्डिक्यविषये केशिध्वजस्य गुरुनिष्क्रयदानं स्मर्यत इत्याशङ्क्य निषेधति—न च वृत्त्यर्थ इति । प्रजापरिपालनादिकमेव तस्य वृत्त्यर्थः—

"प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्" ॥

इति वृत्त्यर्थतया परिगणनात् । केशिध्वजेन तु कृतघ्नत्वापनुत्तये निष्क्रयदानं कृतम् । न चैतावता तस्य वृत्त्यर्थतेति भावः । स्मृतिरुपरुध्येतेति । तत्र "बुद्ध्वा कर्माणि" इत्युपकुर्वाणस्य सतः कर्मज्ञानानन्तरमितराश्रमप्राप्त्यभिधानादिति भावः । अनर्थकत्वप्रसङ्गादिति । रागप्राप्ते विचारे समिदाहरणादीनामप्राप्तत्वात्तन्निषेधपरत्वे आनर्थक्यं स्यात् । अत इत्थमवगम्यते—विचारोऽपि शुश्रूषायामध्ययनतुल्य एव, अतो निवेशे सति स नानुष्ठेयः, तस्मिन्ननुष्ठीयमाने शुश्रूषाया अवश्यकर्तव्यतया नैयमिकाद्यनुष्ठानविरोधादिति युधिष्ठिरादीनां भीष्मादेर्धर्मग्रहणमापत्कल्पत्वादुपपन्नम् । तदानीं [1]शुश्रूषाया नैयमि-

[1] शुश्रूषायां–घ. च. कुं.

"ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे" इत्युपास्यविषयसंशयविच्छेदनार्थमपि प्रवृत्तानां प्राचीनशालादीनां समिदाहरणादिलिङ्गदर्शनात् । धर्मधेनुवधनिमित्तप्रायश्चित्तोपदेशमात्रेण खाण्डिक्यविषये केशिध्वजस्य गुरुनिष्क्रयदानस्मृतिलिङ्गाच्च—

"निष्पादितो मया यज्ञः सम्यक्त्वदुपदेशतः ।
सोऽहं ते दातुमिच्छामि वृणीष्व गुरुदक्षिणाम्" ॥

इति । "नासमयेन कृच्छ्रं कुर्वीत" इति दुरवधारणग्रन्थादिग्रहणे शुश्रूषादिनियम[1]स्मरणाच्च । तस्माद्यत्किंचिदपि वैदिकार्थसंस्पर्शि काव्यादिव्यतिरिक्तं गुरोरधिगम्यते, तत्र शुश्रूषादावध्ययनतुल्यतैव । नियमान्तरे परं विशेष इति । यत्तु वित्तख्यात्यादिप्रयोजनान्तरस्पृहया शिष्यस्नेहेन वा शुश्रूषामनपेक्ष्य गुरोः श्रावणमुपपद्यत इति, तन्न ; तथाप्यशुश्रूषमाणस्य श्रोतुर्धर्मलोपा-

## रत्नतूलिका

कादिलोपदोषस्य पश्चात्प्रायश्चित्तेनापनोदसंभवादिति ध्येयम् । शुश्रूषाया लिङ्गं च दृश्यत इत्याह—ते हेति । समित्पाणयः उपहारपाणयः । नासमयेनेति । समयः सङ्केतः । गुरुः शिष्य इति शुश्रूषादिना शास्त्रकृतव्यवस्था । कृच्छ्रशब्दार्थमाह—दुरवधारणेति । नियमान्तर इति । वेदव्रतादिरूप इत्यर्थः । धर्मलोपापत्तेरिति । न चेष्टापत्तिः, तथा विचारिताद्वेदादवगतस्यानुष्ठाने फललाभो न स्यादिति

---

[1] श्रवणाच्च—ख.

पत्तेः, शुश्रूषामात्रापेक्षिणामपि गुरूणां संभवाच्च । न च तदात्वे तेषां त्यागेनान्येषां ग्रहण[1]मनापदि युक्तम् ; "तस्मिंश्चैव विद्याकर्मान्तमविप्रतिपन्ने धर्मेभ्यः" इति स्मृतिविरोधात् । अपि च "एकां शाखामधीत्य श्रोत्रियोऽङ्गाध्याय्यनूचानः" इति लिङ्गदर्शनादङ्गाध्ययनानियमेनाध्ययनविधिगृहीतस्वाध्यायमात्रादापाततोऽप्यर्थप्रत्ययाभावे तन्निर्णयरागाभावेन तत्प्रयुक्त्या विचारारम्भो न स्यात् । तस्मान्नियमेन विचारमिच्छता नियतमेव तत्प्रयोजकमास्थेयम् ।

## रत्नतूलिका

भावः । शुश्रूषामात्रेति । तथा च येषां प्रयोजनान्तरसापेक्षगुरुलाभस्तेषां विचारे प्रवृत्तिः, येषां शुश्रूषामात्रसापेक्षगुरुलाभो न तेषामिति विचारः सर्वसाधारणो न स्यादिति भावः । ननु तेषामपि वित्तादिमात्रसापेक्षगुर्वन्तरपरिग्रहेण विचारे प्रवृत्तिरस्त्वित्याशङ्क्य निषेधति— न च तदात्व इति । तस्मिन् यस्योपगमनं कृतं तस्मिन्नान्तं विद्याकर्म सम्पादनीयम्, स चेद्धर्मेभ्योऽविप्रतिपन्नः सन्देहवान्न भवतीत्यापस्तम्बस्य तदत्यागस्मृतिः । तद्विरोधः स्यादित्यर्थः । लिङ्गदर्शनादिति । यदि ह्यध्ययनविधिर्नियमेन साङ्गस्वाध्यायाध्यापकस्तथा शाखाध्ययने अङ्गाध्ययनस्यापि सिद्धत्वात् पृथगङ्गाध्यायीति न वक्तव्यमिति तस्य लिङ्गत्वमिति भावः । तथा च संस्कृतस्य ब्रह्मयज्ञजपादौ विनियोगमात्रेणापि संस्कारविधिचारितार्थ्यान्न तद्बलेनार्थज्ञानोपयोग इति ध्येयम् ।

---

[1] मनापद्यपि-ङ.

## विचारस्य नित्यादिविधिप्रयुक्तत्वम्

तत्र नित्यादिविधयो विधेयज्ञानं तत्प्रवृत्तावपेक्षमाणास्तादर्थ्येन विचारं प्रयोजयन्ति। "वेदमधीत्य स्नायात्" इत्यादेरपि [1]विध्याक्षिप्तविचारप्रवृत्त्यविरोधिनि पूर्वकालत्वादिमात्रे वृत्त्युपपत्तेः। न चैवं काम्यानां विचारनियमो न स्यात्, प्रयोजकानियमादिति वाच्यम्; नित्यादिप्रतिसंबन्धितया तेषामपि तत एव विचार्यत्वादधर्मवत्। अन्यथा ततो विविच्य नित्यादिविज्ञानायोगात्। विचारितेषु तु काम्येष्विच्छातोऽनुतिष्ठेन्न वानुतिष्ठेत्। न कश्चिद्विरोधः।

### रत्नतूलिका

ननु क्त्वाश्रुत्यवगतानन्तर्यविरोधान्न नित्यनैयमिकविधीनां विचाराक्षेपकत्वमित्याशङ्क्याह—पूर्वकालादीति। आदिपदेन समानकर्तृकत्वस्य ग्रहणम्। प्रयोजकानियमादिति। नित्यविधिर्न काम्यविचारं प्रयोजयति; अन्यविधेरन्यविचाराप्रयोजकत्वात्। किं तु स्वविधिः। स च फलकामनाधीन इत्यनियत इति भावः। तत एवेति। नित्यादिविधित एवेत्यर्थः। अन्यस्यान्यविधिप्रयुक्तविचारविषयत्वे दृष्टान्तमाह—अधर्मवदिति। नन्वनुष्ठापके विध्यन्तरे जाग्रति अननुष्ठापकस्य नित्यादिविधेस्तद्विचारप्रयोजकत्वं विरुद्धमित्यत आह—विचारितेषु त्विति। अननुष्ठापकेनापि नित्यादिविधिना स्वविधेयनिर्णयाय काम्येषु विचारितेषु लाघविको विधिरिष्टसाधनत्वमात्रं बोधयति। ततः फलेच्छायां सत्यां पुरुषोऽनुतिष्ठति। नो चेदुदास्ते। न चैतावता विचारं प्रयुञ्जानस्य नित्यादिविधेर्विरोध इति भावः। यद्वा—ननु विचारस्य प्रवृत्तिपर्यवसानं निवृत्तिपर्यवसानं वा वाच्यम्, तथा च नित्य-

[1] नित्यादिविध्याक्षिप्त—ङ.

### उद्वाहात्पूर्वमेव विचारस्य कर्तव्यत्वम्

यद्युच्येत विचारो न सर्वेषामवश्यकर्तव्यः ; स्त्रीणामभावात्। तत्र येषां स्वभावविशुद्धसत्त्वानां साङ्गाध्ययनादेव

### रत्नतूलिका

विचारविषयादधर्माद्यथा नित्यं निवृत्तिस्तथा काम्ये नित्यं प्रवृत्तिः स्यादिति आह—विचारितेषु त्विति। सत्यं प्रवृत्तिनिवृत्त्यवसानो विचार इति, तथापि येन विचारः प्रयुज्यते न तेन प्रवृत्तिर्वा निवृत्तिर्वा क्रियते, येनोक्तदोषः स्यात्, किं तु सत्यां फलेच्छायां काम्यविधिना प्रवृत्तिः, अधर्मनिषेधेन च निवृत्तिरिति न कश्चिद्विरोध इति भावः। अथ वा—ननु यथा स्वविषयस्याधर्मतो विवेकस्तद्वर्जनार्थः, काम्यतो विवेकोऽपि तथा स्यात्, तथा च नित्यादिविधिप्रयुक्तत्वे काम्यानुष्ठानविरोध इत्यत आह—विचारितेषु त्विति। इच्छात इति। तथा च विचारे समानेऽपि काम्ये समीहितसाधनत्वावगमात् फलकामनायां सत्यामनुतिष्ठति, नो चेदुदास्ते, अधर्मे त्वसमीहितसाधनत्वावगमाद्वर्जनमेवेति वैषम्यमिति भावः।

ननु रागप्रयुक्तत्व इव नित्यादिविधिप्रयुक्तत्वेऽपि अनियतकर्तव्यत्वं विचारस्य प्राप्तमित्याशङ्कते—यद्युच्येतेति। सर्वेषां कर्तव्यो न भवति, केषांचिदसंभवात्। येषां च संभवस्तेषामप्यवश्यकर्तव्यो नेत्यनियतत्वमित्यर्थः। स्त्रीणामभावादिति। तासां वेदाभावादिति भावः। संभवस्थलेऽप्यवश्यकर्तव्यता नेत्येतदुपपादयति—तत्र येषामिति। ऊहापोहकुशलाः स्वयमेव, इतरे परोक्तपद्धत्येति विवेकः। न हि सर्वेषामवश्यकर्तव्यो विचार इति नियमसिद्धये नित्यादिविधिप्रयुक्तत्वङ्गीकारः, येनोक्तदोषः स्यात्, किंतूद्वाहात्प्रागेव

निर्विचिकित्सविज्ञानोपजनः, कृतं तेषां विचारेण। येषां तु विना तेन न संशया निवर्तन्ते, ते पुनरनुष्ठेयनिर्णयाय काममूहापोहकुशलाः स्वयमेव परोक्तपद्धत्या वा विचारयेयुरिति; तथापि प्रागुद्वाहादेव विचारितावधृतवेदार्थस्यानन्तरकर्मानन्तरायसंभवान्न दारसंयोगानन्तरं विचार इत्येव नियम्यत इति।

## विचारस्य स्वविधिप्रयुक्तत्वम्

अन्ये मन्यन्ते—"यो ह वा अविदितार्षेयच्छन्दोदैवतेन मन्त्रेण यजति याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यते प्र वा मीयते पापीयान्भवति यातयामान्यस्य च्छन्दांसि भवन्ति। अथ यो मन्त्रे मन्त्रे वेद सर्वमायुरेति श्रेयांश्च भवत्य-

### रत्नतूलिका

न तदनन्तरमिति नियमसिद्धय इति परिहरति—तथापीति। सर्वेषामवश्यकर्तव्य इति नियमाभावेऽपीत्यर्थः। इत्येव नियम्यत इति। स च नियमो नित्यादिविधेः प्रयोजकत्व एव सिद्ध्यति। तस्य क्त्वाश्रुत्यवगता[1]नन्तरकार्यबाधकत्वसंभवात्। न तु रागस्य विचारप्रयोजकत्वे, तस्य तदबाधकत्वादिति भावः।

अर्थवादोन्नीतस्वविधि[2]प्रयुक्तत्वाद्विचारस्य नानियतकर्तव्यतेत्यभिप्रेत्य मतान्तरमाह—अन्ये मन्यन्त इति। स्थाणुं वर्च्छति—स्थावरो भवतीत्यर्थः। गर्तं—नरकं पद्यते—प्राप्नोति प्रमीयते वेति संबन्धः पापीयान्—दरिद्रः। नन्वविदितार्षेयच्छन्दोदैवतेनेति प्रकृतानामार्षेयादीनामेव एतानस्थितच्छब्देन परामर्शात्तावन्मात्रज्ञानमेव मन्त्रविषयं विधेयं

---

[1] नन्तर्यबाधकत्व–घ. नन्तर्यसाधकत्व–कुं. [2] प्रयुक्तत्वाच्च विचारस्य.

यातयामान्यस्य च्छन्दांसि भवन्ति। तस्मादेतानि मन्त्रे मन्त्रे विद्यात्" इति श्रुत्या वेदार्थज्ञानस्य विहितत्वात्, वेद्यतया देवताग्रहणस्यानुष्ठेयमात्रोप[1]लक्षणत्वात्,

"अविदित्वा ऋषिं छन्दो दैवतं योगमेव च।
योऽध्यापयेद्यजेद्वापि पापीयाञ्जायते तु सः॥"

इति स्मृतौ च योगशब्दोदितविनियोगरूपब्राह्मणार्थस्य ज्ञातव्यत्वाभिधानात्,

"यदधीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्॥"

इत्यर्थाज्ञाने निर्वीर्यत्वनिगदात्,

"स्थाणुरयं भारहरः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा"॥

इति वेदार्थाज्ञानज्ञाननिन्दाप्रशंसावचनाच्च तज्ज्ञानस्य विधेयत्वो-

### रत्नतूलिका

प्रतीयते, न तु वेदार्थज्ञानमित्यत आह—वेद्यतयेति। मन्त्रेणानुष्ठानाय देवताया इव द्रव्यादीनामप्यवश्यज्ञेयत्वादुपलक्षणत्वमिति भावः। न केवलं मन्त्रार्थमात्रविषयमेव ज्ञानं विधेयं प्रतीयते, अपि तु ब्राह्मणार्थविषयमपीत्याह—अविदित्वेति। तथा च "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति भागद्वयात्मकस्य कृत्स्नस्य वेदस्यार्थज्ञानं विहितमिति भावः। ज्ञातव्यत्वाभिधानादिति। अज्ञाननिन्दायां ज्ञातव्यत्वमभिहितप्रायमिति भावः। निगदेनैव—न त्वर्थज्ञानपूर्वकमित्येवकारार्थः। ननु यत्प्रतीयते ज्ञानं तन्न विधेयम्, यश्च विधेयत्वे-

[1] लक्षकत्वात्.

न्नयनात्, आहत्य च तस्यापुरुषतन्त्रस्य विधानानुपपत्तेः, करणस्य च स्वाध्यायस्यान्यतो लब्धत्वात्तदर्थनिर्णयानुकूलो विचार एवा-नेन विधीयते। न च तत्र मन्त्राणामृष्यादिविज्ञानविधान-प्रतीतिस्तस्य चाङ्गाध्ययनसाध्यत्वादनपेक्ष्या मीमांसेति वाच्यम्; निर्विचिकित्सज्ञानस्य मीमांसापेक्षत्वात्। न चैवं संशयाभावाय रागत एव विचारः स्यादिति युक्तम्; विचारानियमप्रसङ्गस्यो-क्तत्वात्। एतेन "अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहुमन्यमानः" इतिवत्कृष्यादाविव रागप्राप्ते विचारे तन्द्रालु-प्ररोचनार्थं "यदधीतम्" इत्यादीति निरस्तम्; प्ररोचनया विधि-

रत्नतूलिका

नाभिमतो विचारः स न प्रतीयत इत्यत आह—आहत्य चेति। तथा च "पत्न्यवेक्षते" इत्यादावक्ष्युन्मीलनादाविवात्र विचारे लक्षणेति भावः। नन्वेवमपि कथं विचारपरिशेष इत्यत आह—करणस्य चेति। अन्यत इति। ब्रह्मयज्ञादौ जपविधानादित्यर्थः। परिशेषोऽसिद्ध इत्याशङ्क्य निषेधति—न च तत्रेति। न चैवमिति। एवं सति विचारविधिपरिशेषाय निर्विचिकित्सज्ञानस्य फलत्वे सतीत्यर्थः। रागत एवेति। न तु विधितः, विचारस्य निर्विचिकित्सज्ञानहेतुत्वेन मानान्तर-प्राप्तत्वादिति भावः। नापूर्वविधिः, किं तु नियमविधिरित्यभिप्रेत्याह—विचारानियमेति। निर्विचिकित्सज्ञाने विचारस्यैवाप्तोपदेशवाक्य-परिशीलनादिरूपोपायान्तरस्यापि प्राप्तत्वान्नियमार्थो विधिरिति भावः। अथवा अनियमप्रसङ्गस्य उद्वाहात्प्राग्वा पश्चाद्वा विचारः स्यादित्येवं रूपस्येत्यर्थः। कृषिमित् कृषिमेव कृषस्वेति पाकं पचेत्यादिवत्।

शक्त्यनुपजनने तन्नियमायोगात्। तस्मात्स्वविधिप्रयुक्तानुष्ठान एव विचार इति। तदेवमध्ययनविधितो न विचारक्रमनियमः।

धर्मविचारस्य प्राथम्यशङ्का

नाप्यर्थात्; वेदान्तविचारे [1]कर्मविचारस्यानुपयोगात्। यत्तु अनित्यफलाद्विरज्य नित्यफलेप्सोर्हि वेदान्तविचारप्रवृत्तिः कर्मफलानित्यत्वाधिगममूला, न च तदाधिगमो धर्ममीमांसाव्युत्पाद्यन्यायालोचनेन विना संभवति; "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति", "अपाम सोमममृता अभूम", हिरण्यदा अमृतत्वं भजन्ते", "अनन्तं ह वा अपारमक्षय्यं लोकं जयति, योऽग्निं चिनुते", "नास्येष्टापूर्ते क्षीयेते, योऽग्निं नाचिकेतं चिनुते" इत्यादिकर्मफलनित्यत्वाधिगमस्यान्यानर्थक्येन गुणवादत्वादिन्यायापोद्यत्वात्। अपि च विविदिषितब्रह्मविद्याङ्गतयानुष्ठेयानि कर्माणि, "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इति तत्र तेषां विनियोगात्।

रत्नतूलिका

एतच्छब्दार्थमाह—तन्नियमायोगादिति। धर्मब्रह्मविचारयोः क्रमः श्रौतो नेत्येतदुपसंहरति—तदेवमिति।

अर्थात्—प्रयोजनादित्यर्थः। यथा "अग्निहोत्रं जुहोति", "यवागूं पचति" इति श्रुतयोर्होमयवागूपाकयोः प्रयोजनवशात् क्रमः कल्प्यते, हुत्वा पाके क्रियमाणे पाकस्यादृष्टार्थता स्यात्, पक्त्वा होमे तु पाकस्य होमनिर्वृत्तिसमर्थतया दृष्टप्रयोजनलाभादिति। न चात्र तथेत्याह—वेदान्तविचार इति। तत्र तेषामिति। असिना जिघांसती-

[1] धर्म.

**तेषां च कर्मविचाराधीनानुष्ठेयरूपविभागज्ञानाभावे सर्वापेक्षानय-विषयब्रह्मविद्यासाधनभावस्य दुरधिगमत्वात् यज्ञादिपदार्थाज्ञाने तद्विनियोगरूपवाक्यार्थज्ञानायोगाच्च। तस्मात्फलद्वारेण कर्मणां हानाय स्वरूपेणोपादानाय च धर्मविचारप्राथम्यं नियम्यत इति।**

रत्नतूलिका

त्यत्रार्थप्राधान्येनासेर्हननं इव "यज्ञेन विविदिषन्ति" इत्यत्रापि कर्मणां विद्यायां विनियोग इति भावः। अस्तु श्रुत्या कर्मणां विनियोगस्त-थापि विचारयोरुपकार्योपकारकभावे किमायातमित्यत आह—**तेषां चेति।** श्रुत्यपेक्षितन्यायसूचकस्य "सर्वापेक्षा च यज्ञादिश्रुतेरश्व-वत्" इति सूत्रस्य कर्मणां विद्यायाश्च साध्यसाधनभावस्तात्पर्यविष-योऽर्थः। तत्र नित्यादिकमनुष्ठेयमितरदननुष्ठेयमिति विभागज्ञानाभावे कुत्रानुष्ठेये साधनभावो ज्ञायेत। अतस्तज्ज्ञानाय धर्मविचारापेक्षेति भावः। एवं सूत्रे सर्वापेक्षेत्यंशे धर्मविचारस्योपयोग उक्तः। यज्ञादि-श्रुतेरित्यंशेऽपि तस्योपयोगमाह—**यज्ञादिपदार्थाज्ञान इति।** तथा च "यज्ञेन विविदिषन्ति" इति श्रुतौ वाक्यार्थज्ञानाभावे यज्ञादिश्रुते-रिति सूत्रोक्तहेतोरज्ञानासिद्धिः स्यादिति भावः। आर्थक्रममुपसंहरति—**तस्मादिति।**

**अधीतवेदादविशेषेण कर्मफले विद्याफले चापाततो नित्यत्वे ज्ञाते नित्यफलप्रेप्सुः पुरुषः कर्मविचार एव प्रथमं प्रवर्तेत इत्यत्र नियामका-भावः। किं च कर्मकाण्डे क्वचित्क्वचित्कर्मफलनित्यत्वश्रवणेऽपि विद्याफलानित्यत्वस्याश्रवणात्, ब्रह्मकाण्डे कर्मफलानित्यत्वस्य विद्याफल-नित्यत्वस्य च श्रवणात् ब्रह्मविचार एव प्रथमं प्रवर्तेत। अपि च मुक्तावपि काम्यफलं सर्वकामोपभोगमभ्युपगच्छतस्तव किं कर्मफलविचाराधीनेन तत्फलवैराग्येण। अपि च विचारेण कर्मफलनित्यत्वे ज्ञातेऽपि प्रतिबन्धेन**

### धर्मविचारस्यानुपयुक्तत्वम्

अत्रोच्यते--अधीतवेदान्तापाताधिगतानन्तास्थिरफलाभिलाषवतस्तदुपाय[1]बुभुत्सया ब्रह्मविचार एव प्रवृत्तिः स्याद्विना धर्मविचारम्। कर्मफलफल्गुत्वाज्ञानेऽप्यधीतवेदोपादापितकर्मब्रह्मविद्याफलनित्यत्वापाताधिगमस्य स्वरसतो नित्यफलप्रेप्सोस्तदुपायजिज्ञासायां विशेषहेत्वभावेन धर्मविचारप्राथम्यस्यानियाम्यत्वात्। अपि च "निचाय्य तं मृत्युमुखात्प्रमुच्यते"

### रत्नतूलिका

तदितरनित्यफलालाभशङ्कया काम्यान्यप्यनुतिष्ठेत्। अपि च मानान्तरेण काम्यानां ब्रह्मविद्याविरोधित्वाधिगमे तत एव त्यागसिद्धेः किं कर्मविचारेण। [2]किं च विचारं विनाप्यापातप्रतीतिदशायामेव कर्मविद्याफलयोस्तारतम्यस्य स्फुटत्वेन कर्मफलाभिसन्धिहानोपपत्तेः कृतं कर्मविचारेण। अपि च विचारेण कर्मफलस्यानित्यत्वनिश्चयेऽपि नित्यफलान्तरस्यानवधारणादास्वादितसजातीयफले कर्मण्येव प्रवृत्तिः स्यात्। अपि च कर्मविचारे कृते तदुपदर्शितन्यायेन विद्यायाः कर्मशेषत्वावगमाद्वेदान्तविचारे न प्रवर्तेत। तस्मात्कर्मविचारप्राथम्ये नियामकाभावात्प्रत्युत ब्रह्मविचारप्राथम्य एव नियामकसत्त्वात् तव साध्यस्य वैराग्यस्यानपेक्षितत्वेन साधनस्य विचारस्याप्यनपेक्षितत्वात् तद्विचारे सत्यपि वैराग्यस्यासंभवात्, विनापि कर्मविचारं काम्यकर्मत्यागसिद्धेः, तस्य ब्रह्मविचारप्रवृत्तिविरोधित्वाच्च न फलतो हानाय धर्मविचारप्राथम्यमित्यभिप्रेत्याह—अत्रोच्यते इति। ननु ब्रह्मविचार एव प्रवृत्तिः स्यादित्यसङ्गतम्; धर्मविचारं विना तत्फलफल्गुत्वाज्ञानेन ततो वैराग्यस्यासिद्धेरित्यत आह—**विना धर्मविचारमिति।**

---

[1] बुभुत्सायां—ग. [2] अपि च—घ. कुं.

"तमेवं विद्वानमृत इह भवति," "ब्रह्म वेद ब्रह्मैव भवति," इत्यादिब्रह्मविद्याफलनित्यत्वं क्रियाभागेऽपि विपरीताध्ययनशून्यतयाविप्लुतमधीयानस्याभिलषितनित्यफलसंभावनौत्कट्येन वेदान्तविचार[1]प्राथम्यमेव स्यात्। क्वाचित्कर्मफल[2]नित्यत्वश्रवणेऽपि वेदान्तेषु "प्लवा ह्येते अदृढा यज्ञरूपाः," "नास्त्यकृतः कृतेन," "न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्," "अन्तवदेवास्य तद्भवति," "अमुत्र पुण्यचितो लोकः क्षीयते" इत्यादिविपरीताध्ययनेन तत्संभावनाशैथिल्यात्। प्राचीनपुण्यविशेष[3]सम्पादापादितकतिपयन्यायविशेषानुसन्धाने तत्फलानित्यत्वनिश्चयोपपत्तेश्च। परस्यापि यत्फलं तदनित्यमेवेति न्यायहार्यं लौकिकसुखविलक्षणस्वर्गादिवदलौकिकब्रह्मज्ञानादनन्तस्थिरफलमपि स्यादिति संभावनायाः सुकृतविशेषायत्तत्वस्यापेयत्वात्।

रत्नतूलिका

नित्यत्वापाताधिगमो यस्य पुरुषस्य तस्येत्यर्थः। आपाततो नित्यफलत्वाधिगमस्योभयत्राप्यविशेषादिति भावः। यज्ञरूपाः—यज्ञो रूप्यते निर्वर्त्यते यैस्ते षोडशर्त्विजः पत्नी यजमानश्चेत्यष्टादश, ते अदृढाः अस्थिराः प्लवाः। कृतेन कर्मणा अकृतो मोक्षो नास्तीत्यर्थः। अस्तु संभावनाशैथिल्यम्, तथापि विना विचारं तदनित्यत्वानिश्चयादनुभूतजातीये कर्मफले रागवशेन कर्मविचार एव प्रवृत्तिः स्यान्न ब्रह्मविचार इत्यत आह—प्राचीनपुण्येति। यत्क्रियते व्यावर्तते वा तदनित्यमित्यादिन्यायानुसन्धान इत्यर्थः। न्यायहार्यं न्यायं हित्वेत्यर्थः। लौकिकेति। लौकिकचन्दनादिसाधनविलक्षणस्य ज्योतिष्टोमादेर्यथा

---

[1] प्राथम्य एव. [2] नित्यत्वादि—ग. [3] सम्पादित—ग.

अपि चैवं विचारितकर्मा तदनित्यफलत्वावगमे यदि ततोऽवर्जनीयदुःखभूयिष्ठफलान्निर्विद्येत, कामं प्रत्यवायपरिहाराय नित्यादीनि केवलमनुतिष्ठेत्, कुतो वेदान्तविचारे प्रवृत्तिः। [1]यद्यधीतवेदान्ताधिगतानन्तस्थिरफलाभिलाषादित्युच्येत, किं कर्मविचारेण। सत्यपि नित्यफलाभिलाषे कर्मफलवैराग्याय तदपेक्षेति चेत्, किं वैराग्येण। कर्मस्वप्रवृत्तिरिति चेत्,

रत्नतूलिका

लौकिकसुखविलक्षणसुखजनकत्वं, तथा ततोऽपि विलक्षणस्य ब्रह्मज्ञानस्यानन्तस्थिरफलजनकत्वं स्यादिति संभावनाया इत्यर्थः।

धर्मविचारप्राथम्ये नियामकं नास्ति, प्रत्युत ब्रह्मविचारप्राथम्य एव नियामकं वर्तत इत्युक्तम्। इदानीमनपेक्षितत्वादपि न प्रथमं धर्मविचार इति गूढाभिसन्धिराह—अपि चैवमिति। तत इति। काम्यात्कर्मण इत्यर्थः। कुत इति। [2]तत्फलानित्यत्वस्य तन्निर्वेदहेतुत्वेऽपि ब्रह्मविचारप्रवृत्त्यहेतुत्वादिति भावः। किं कर्मविचारेणेति। हेतुसम्पादनद्वारापि तस्य ब्रह्मविचारोपयोगाभावादिति भावः। विरोधिनिवृत्तिद्वारा तस्योपयोगोऽस्तीत्यभिप्रेत्य शङ्कते—सत्यपीति। निवर्तनीयविरोध्यभावान्न धर्मविचारस्योपयोग इति दूषणं हृदि निधाय परेण विरोधिस्वरूपं वाचयितुं पृच्छति—किं वैराग्येणेति। कर्मस्विति। काम्यकर्मस्विति परस्य भावः। किं काम्यकर्मप्रवृत्तिः सिद्धान्त इवानेकपदार्थपौर्वापर्यानुसन्धानेन चित्तविक्षेपसंपादकतया कर्मप्रवृत्तिरित्येव विरोधिनी, किं वा स्वहेतुभूतफलाभिसन्धिद्वारेति विकल्पं मनसि निधायाद्ये नित्यादिप्रवृत्तिमभ्युपगच्छतस्तव सा न विरुद्ध्यत इति

[1] यद्यधिगत—ग, [2] तत्फलानित्यत्वज्ञानस्य—कुं.

ननु ब्रह्मजिज्ञासया सा न विरुद्ध्यते, समुचिता च कर्मप्रवृत्तिरिति ते मतम्। काम्यकर्मप्रवृत्तिर्विरोधिनीति चेन्न; स्वरूपतो नित्यकर्मभिरविशेषात्। न च तत्फलाभिसन्धिरपि विरोधी; तत्रापवर्गेऽपि "सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्," "स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा वयस्यैर्वा," "कामान्नी कामरूप्यनुसञ्चरन्" इत्यादिसर्वकामोपभोगोपगमात्। प्रियाप्रिययुक्तकर्मनिमित्तसंसारगोचरदेहाद्युपभोग्यानि

## रत्नतूलिका

गूढाभिसन्धिर्दूषयति—ननु ब्रह्मजिज्ञासयेति। आशयमविद्वाञ्छङ्कते—काम्यकर्मप्रवृत्तिरिति। आशयमुद्घाटयति—स्वरूपत इति। अनेकपदार्थानुसन्धानमूलत्वस्योभयत्राप्यविशेषादित्यर्थः। तथापि नित्यादिप्रवृत्तेरविरोधमभ्युपगच्छतस्तव काम्यप्रवृत्तिरप्यविरुद्धेति भावः। द्वितीयं निषेधति—न च तत्फलाभिसन्धिरपीति। तथा च सर्वथाप्यनपेक्षितस्य धर्मविचारस्य न प्राथम्यनियम इत्याशयः। [1] द्वितीयमाशङ्कते—प्रियाप्रियेति। प्रियादियुक्तः कर्मनिर्मितः संसारगोचरश्च यो देहादिः तदुपभोग्यानीत्यर्थः। ततश्च मुक्तौ तादृशदेहाभावान्न कर्मफलोपभोगः। "सर्वांश्च लोकानाप्नोति" इत्यादिश्रुतफलानि तु विद्याया एव, न तु कर्मणामिति भावः। कर्मफलत्वेन प्रसिद्धानां स्व्यन्नादीनां विद्याफलत्वकल्पनमयुक्तम्, न च तेषां मुक्तौ श्रवणान्यथानुपपत्त्या तत्कल्पनमिति वाच्यम्; प्रसिद्धकर्मफलत्वापरित्यागेनैव केवलकर्मणां सांसारिकदेहभोग्यफलजनकत्वम्, ब्रह्मविद्या-

[1] द्वितीयमादाय शङ्कते-कुं.

काम्यफलानीति तदभिसन्धिर्विरोधीति चेन्न ; केवलानि तथा भविष्यन्ति, ब्रह्मविद्यासमुदितानि तु "स एकधा भवति" इत्यादिशास्त्रसिद्धसाङ्कल्पिकदेहभोग्यानि भविष्यन्तीत्यविरोधात् ।

अपि च सासङ्गस्यापि कर्मणः स्वावस्थस्याविरोधित्वात् ब्रह्मज्ञाने साधनमनुतिष्ठतोऽपि प्रतिबन्धसंभवात् "ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्" इति सौत्रलिङ्गात् तद्यदि ब्रह्मविद्या जायेत, तथैव सर्वं कर्म धक्ष्यते । अथ न, कर्मफलान्यपि भुञ्जी-

रत्नतूलिका

समुच्चितानां साङ्कल्पिकदेहभोग्यफलजनकत्वमिति व्यवस्थोपपत्तेरिति दूषयति—न केवलानीति ।

काम्यकर्महानस्य ब्रह्मविचारे अनपेक्षितत्वान्न तादर्थ्येन कर्मविचारापेक्षेत्युक्तम् । इदानीं कृतेऽपि कर्मविचारे काम्यत्यागासिद्धेर्न तदपेक्षेत्याह—अपि च सासङ्गस्येति । स्वावस्थस्येति । फलोपधानं विना कर्मस्वरूपेणावस्थितस्येत्यर्थः । इदं च स्वरूपेणाविरोधोपपादनं नित्यादीनामिव ब्रह्मविद्यया सहानुष्ठानसंभवार्थम् । अस्त्वनुष्ठानसंभवस्तथापि फल्गुफलस्य किमर्थमनुष्ठानमित्यत आह—ब्रह्मज्ञान इति । प्रतिबन्धसंभवादिति । ज्ञानप्रतिबन्धकस्यारब्धकर्मणः फलैकनाश्यत्वादिति भावः । ऐहिकमपीति । विद्याफलमैहिकमपि भवति ; असति प्रस्तुतस्य विद्यासाधनस्य प्रतिबन्धे "गर्भस्थ एव वामदेवः प्रतिपेदे",

"अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" ॥

इत्यादिप्रतिबन्धदर्शनादिति सूत्रार्थः । धक्ष्यत इति ।

"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ।"

इति स्मृतेरिति भावः । कर्मफलान्यपीति अपिशब्दो वार्थे । कर्म-

येति विचारितकर्मा काम्यानि च न विजह्यात्। अपि च कर्मफलाभिसन्धेः,

"एतान्यपि च कर्माणि सङ्गं त्यक्त्वा फलानि च।
कर्तव्यानि ........ ......... ............................... ॥"

"फले सक्तो निबद्ध्यते" इत्यादिशास्त्रादन्यतो वा ब्रह्मज्ञानविरोधित्वावगमे तत एव तत्त्यागोपपत्तेः कृतं कर्मविचारेण।

अपि चेच्छामात्रोपनमदपरिमितदिव्यभोगानुगतनित्यनिरतिशयानन्दानुभवं ब्रह्मविद्याफलमधीयानस्य क्लेशात्मकनानाकर्मसंबन्धाधीनफलाभिसन्धेः स्वरसतो हानसंभवेन कर्मविचारानर्थक्यम्।

## रत्नतूलिका

फलानि वा भुञ्जीयेत्यर्थः। उपायान्तरेण काम्यकर्मत्यागसिद्धेर्न कर्मविचारापेक्षेति दूषणान्तरमाह — **अपि च कर्मफलाभिसन्धेरिति**। फलाभिसन्धेर्ब्रह्मज्ञानविरोधित्वावगम इत्यन्वयः। **सङ्गं** अहं कर्तेत्यभिमानम्। "इति मे पार्थ निश्चितं मतमुत्तमम्" इति श्लोकशेषः। **अन्यतो वेति**। अन्येच्छाया अन्यकार्यप्रतिबन्धकत्वं लोके दृष्टम्, यथा पाकेच्छाया गमनप्रतिबन्धकत्वम्, एवं फलेच्छाया विद्याप्रतिबन्धकत्वमिति लोकन्यायतो वेत्यर्थः।

विद्याविरोधित्वज्ञानं काम्यत्यागे उपाय इत्युक्तम्। इदानीमध्ययनकालोत्पन्नं फलयोस्तारतम्यज्ञानमेव काम्यत्यागोपाय इत्याह— **अपि चेच्छेति**। क्लेशात्मकनानाकर्मसंबन्धेनातत्संबन्धित्वेनाधीतं यत्फलं तदभिसन्धेरित्यर्थः।

अपि च कर्मविचारेण तत्फलानित्यत्वाधिगमेऽपि तद्-धिकफलान्तरानवधारणादनवलम्बनो न ततो निर्विद्येत। तथा चाभाणकः—

"अलाभे मत्तकाशिन्या जरठालिङ्गनं वरम्"। इति ॥

न चापाताधिगतानन्तस्थिरफलावलम्बनो निश्चितमल्पमप्यास्वादितजातीयमह्नाय त्यक्तुमुत्सहेत। अपि च निर्वर्तितकर्मविचारो वेदान्तानामपि तदुपदर्शितन्यायेन कथंचित्कर्मैदम्पर्यमवस्यन् न पृथग्विचारमीक्षेतापीत्युक्तम्, कर्तृसंस्कारज्ञानपरतया वा कर्तृप्रशंसया वा पारिप्लवार्थतया वा वेदान्तानामप्रयोजकत्वावगमात्। तथा च दर्शितं "शेषत्वात्पुरुषार्थवादो यथान्येषु" इति "पारिप्लवार्थाः" इति च। तस्मान्न फलद्वारा हानाय कर्मणां विचारापेक्षा।

रत्नतूलिका

पूर्वं "अपि च सासङ्गस्ये"त्यादिग्रन्थे अधिकफलान्तरावधारणमङ्गीकृत्य प्रतिबन्धेन तस्य फलस्यालाभशङ्का कर्मफलवैराग्याभावे हेतुरुक्ता। इदानीं तदनवधारणं हेतुमाह—अपि च कर्मविचारेणेति। इयता प्रबन्धेन कर्मविचारस्योपयोगो नेत्युक्तम्। इदानीं वरघाताय कन्यावरणमिति न्यायेन [1] तद्विघातकत्वमुक्तमनुस्मारयति—अपि च निर्वर्तितेति। पारिप्लवार्था इति चेति। ब्रह्मविद्योपक्रमपठितान्युपाख्यानानि "सर्वाण्युपाख्यानानि पारिप्लवे शंसन्ति" इति विहितपारिप्लवप्रयोगार्थानीति चेन्न; पारिप्लवमाचक्षीत" इत्युपक्रम्य "मनुर्वैवस्वतो राजा" इत्युपाख्यानविशेषाणामेव ग्रहणादिति सूत्रार्थः। महाप्रकृतमुपसंहरति—तस्मान्न फलद्वारेति।

[1] तद्विघातकत्वमित्युक्तमनु-कुं.

**नापि स्वरूपेणोपादानाय। यदि हि जिज्ञासादि ब्रह्मविद्यया समुच्चित्यानुष्ठानायेत्युच्येत, किं पुनस्तथानुष्ठितेन कर्मणा भवतीति वक्तव्यम्। न तावद्ब्रह्मविज्ञानम्[1]; तस्य विचारोपस्कृतप्रमाणफलत्वात्। नापि भक्त्युपासनाशब्दितं ध्यानम्; तस्यापि यथाविज्ञानमेव निष्पत्त्युपपत्तेः, निरन्तराभ्यासेन च तस्य साक्षात्कारपर्यन्तत्वोपपत्तेश्च। नापि मोक्षः; तत्राविद्यानिवृत्त्यंशस्य—**

रत्नतूलिका

अमूर्तस्य कर्मणः प्रकारान्तरेणोपादानासंभवादनुष्ठानमेव तदिति पर्यवसाययति—**यदि हीति।** अनुष्ठितेन कर्मणा किं साधनं भवति, अथवा साध्यो मोक्षः। आद्येऽपि किमुपासनामूलभूतवाक्यजन्यज्ञानं, किं वोपासनम्। तत्रापि किं ध्यानरूपं, किं वा साक्षात्कारपर्यन्तम्। मोक्ष इत्यत्रापि किमविद्यानिवृत्तिः, किं वा ब्रह्मप्राप्तिरिति विकल्पं मनसि निधायाह—**किं पुनरिति।** तत्राद्ये प्रथमं निरस्यति—**न तावदिति।** आद्यद्वितीये प्रथमं निरस्यति—**नापीति।** स्मृतिसन्ततिरेव हि ध्यानम्। तत्र च पूर्वानुभव एवापेक्षितो न तु कर्मेत्यर्थः। द्वितीयं निरस्यति—**निरन्तरेति।** तथा च न तत्रापि कर्मापेक्षेति भावः। **नापीति।** तथा सति कर्मजन्यत्वेनानित्यत्वापत्तिरिति भावः। एवं समुदायदूषणमुक्त्वा, अंशेन विभज्याद्यं दूषयति—**तत्राविद्यानिवृत्त्यंशस्येति।** ननु प्रयाजादीनां फलोपकारित्वेऽपि दर्शपूर्णमासयोः प्राधान्याद्यथा फलस्य स्वर्गादेस्तज्जन्यत्वव्यपदेशः "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादौ, तथात्रापि ज्ञानस्य प्राधान्येन तज्जन्यत्वव्यपदेशो भविष्यती-

[1] ब्रह्मणो ज्ञानम्—ग.

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे"॥
"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा"।

इति ज्ञानैकसाध्यत्वावगमात्। न च ज्ञानस्य स्वप्रधानतया तथा व्यपदेशः; कर्मणामारादुपकारकत्वे "तमेतम्" इत्यादिविद्याविनियोगविरोधात्, कथमपि तेषां मुक्त्युपायत्वे "नान्यः पन्थाः" इत्यादिनिषेधविरोधाच्च। इष्टप्राप्तिस्तु स्वतः सिद्धा न पृथगुपायसाध्या। विद्यासामर्थ्यादविद्यामूलकर्मकृतप्रकृतिसंबन्धावरणभङ्गे स्वतः सिद्धनित्यज्ञानादेव निरतिशयानन्दगुणब्रह्मस्वरूपानुभवस्य परेणोपगतत्वात्।

रत्नतूलिका

त्याशङ्क्य निषेधति—न च ज्ञानस्येति। आराद्दूरेण स्वरूपमतिक्रम्य फलांशोपकारकत्व इत्यर्थः। ननु ज्ञानस्य स्वरूपं फलजनकत्वरूपं चेति रूपद्वयम्। तत्र द्वितीयोपकारेण "तमेत"मित्यादिविद्याविनियोगो भविष्यतीत्यत आह—कथमपीति। एवमपि प्राप्ताप्राप्तविवेकेन फलोपकारकत्वमेवासीत्। तथा च निषेधविरोध इति भावः। अत्रापि प्रधानभूतोपायान्तरमेव निषिध्यत इति कल्पनायां सैव दोष इति हृदयम्। द्वितीयं दूषयति—इष्टप्राप्तिस्त्विति। स्वतः सिद्धिमुपपादयति—विद्यासामर्थ्यादिति।

"तमेत" मितिवाक्येन विद्यायां कर्माणि विनियुज्यन्ते। सा च ध्यानत्व—ध्रुवानुस्मृतित्व—तत्परत्व—दर्शनसमानाकारत्व—प्रीतित्व—रतित्व—भक्तित्वरूपानेकविशेषवती अहरहरनुष्ठानेनाधेयातिशयवती आप्रायणमनुष्ठेया च। एतादृशविद्योत्पत्तिप्रतिबन्धकदुरितनिवृत्तिद्वारा तदुत्पत्तये कर्माण्यपि विद्यया सह यावज्जीवमनुष्ठेयानीति

## कर्मणां विविदिषाविनियोगोपपत्तिः

अत्राह—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन" इति न यज्ञादयो विविदिषायां विनियुज्यन्ते, विषयसौन्दर्यलभ्यत्वादिच्छायाः। रुचिरूपाया अपि वेदान्तविचारादिप्रवृत्तिपर्यन्तायाः कर्मफलदोषदर्शनप्रगुणितानन्तस्थिरफलाभिलाषादेव संभवात्।

अपि च विविदिषा वेदनार्था सती न स्वतन्त्रा कर्मभिरुद्देश्या। ततश्चावान्तरसाध्यौदनोपायप्रवृत्तेः परमसाध्यक्षुदुपशमेच्छाधीनत्ववदिहापि परमसाध्यवेदनेच्छाधीनत्वं विविदिषोपायप्रवृत्तेः स्यादिति तस्यां जातायां तदुपायविधिवैयर्थ्यम्।

### रत्नतूलिका

परमतम्। तदाशङ्कते—अत्राहेति। विविदिषायां कर्मविनियोगाङ्गीकारे जन्मान्तरानुष्ठितैरपि कर्मभिस्तदुत्पत्तिसंभवादिदानीं विद्यया सहानुष्ठानं न स्यात्, तथा च तदर्थं धर्मविचारप्राथम्यं न सिद्ध्येदित्यभिप्रेत्य विविदिषायां विनियोगं निषेधति—**न यज्ञादय इति**। इच्छा द्विरूपा, लौल्यमात्रावसाना प्रवृत्तिपर्यन्ता चेति। तत्राद्यायां विनियोगो निरस्तः। द्वितीयायामपि तं निराकरोति—**रुचिरूपाया अपीति**। दोषदर्शनेन प्रगुणितो द्विगुणीकृतः प्रवृत्तिलक्षणकार्यक्षमत्वमापादित इति यावत्।

विविदिषायां विनियोगसंभवमङ्गीकृत्य वैयर्थ्यमुक्तम्। इदानीं स एव न संभवतीत्याह—**अपि च विविदिषेति**। **वेदनार्था सतीति** स्वातन्त्र्येणोद्देश्यत्वाभावे हेतुगर्भं विशेषणम्। तथा च यदर्थं यत् तत्तदर्थतयैव स्वोपायप्रवृत्तावुद्देश्यमिति दृष्टान्तमुखेनोपपादयति—**ततश्चेति**। विधिवैयर्थ्यमेकं दूषणमुक्तम्। दूषणान्तरमाह—

अजातायां च तदर्थविविदिषोपायप्रवृत्त्यसंभवात्। तथा च वेदनेच्छायां सत्यां तदर्थविविदिषोद्देशेन कर्मविधानं, तद्विधाने च वेदनेच्छासिद्धिरितीतरेतराश्रयत्वम्। विविदिषाया वेदनाभिरुचिरूपाया अपि धर्माभिरुचेरिवातदुद्देशकृतसुकृताधीनत्वापपत्तेश्च। अतः असिना जिघांसतीत्यादिवदिह शाब्दप्रत्ययार्थप्राधान्योज्झमार्थप्राधान्येनेष्यमाणवेदने यज्ञादयो विनियुज्यन्ते।

### मुक्तिहेतुज्ञानस्वरूपविवेकः

तच्च वेदनं मुक्तिहेतुतया कर्मभिरुद्देश्यं न तावद्वाक्यजमेव; "विज्ञाय प्रज्ञां कुर्वीत," "अनुविद्य विजानाति"

### रत्नतूलिका

**तथा चेति।** तथा इतरेतराश्रयत्वं चेत्यन्वयः। ननु बह्वायाससाध्यवैदिकप्रवृत्तौ फलेच्छामात्रं नालम्; लोके सत्यामपि फलेच्छायां प्रवृत्त्यदर्शनात्, अतः सुकृतापेक्षेत्यत आह—**वेदनाभिरुचिरूपाया इति।** सत्यं सुकृतमपेक्षितमिति, किं तु विविदिषोद्देशेन तन्न कर्तव्यम्। तथा च विधिवैयर्थ्यमिति भावः। **धर्माभिरुचेरिति।** तस्यास्तदुद्देशकृतसुकृतसाध्यत्वे तदभिरुचेरपि तथाविधसुकृतसाध्यत्वं स्यात्। एवं तत्र तत्रेत्यनवस्था स्यादिति भावः। **शाब्दप्रत्ययार्थेति।** "विविदिषन्ति"ति शब्दतः प्रत्ययार्थस्येच्छायाः प्राधान्यं प्रतीयते। सामर्थ्यालोचनायां त्विच्छाया इष्यमाणवेदनार्थतया तस्य प्राधान्यमित्यर्थः। **प्राधान्योज्झं** प्राधान्यमुज्झित्वा।

एवं कर्मणां वेदने विनियोगं प्रसाध्य तत्रोपयोगप्रकारं दर्शयितुमुपक्रमते—**तच्च वेदनमिति।** वाक्यजन्यस्योद्देश्यत्वे तस्य वाक्यश्रवणसमनन्तरमेव जातत्वात्तदुद्देशेन कर्मणां यावज्जीवमनुष्ठानं न सिद्ध्येत्, अतस्तन्निराकरोति—**न तावदिति।**

इत्यादितदधिकविज्ञानविधानात्। तच्च सामान्यतो विधीयमानं यावन्तः केचन विशेषाः श्रुत्यादिषु विधीयन्ते तावतोऽनुद्रुत्य पर्यवस्यति "छागो वा मन्त्रवर्णात्" इति न्यायात्। तत्र मननशिरस्कविचारोपस्कृतवाक्यजन्यं ज्ञानं विधित्सितज्ञान-स्वरूपोपकारितया "विज्ञाय प्रज्ञां कुर्वीत", "अनुविद्य विजानाति" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः", श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादावनूद्यमानं न तद्विशेष-रूपतामर्हति। न च "सोऽन्वेष्टव्यः", "श्रोतव्यः" इत्यादिः

रत्नतूलिका

तदधिकेति। विज्ञाय अनुविद्येति विधेयोपकारकं वाक्यजन्यं ज्ञानमनूद्य प्रज्ञां कुर्वीत, विजानातीति तदधिकस्य विधानादित्यर्थः। अस्तु वाक्य-जन्यज्ञानादन्यद्विधेयम्; तथापि तस्यैकरूपत्वे तादर्थ्येन कर्मणामाप्रा-यणमनुष्ठानं न सिद्ध्येदित्युक्तदोषानतिवृत्तिरित्यत आह—तच्च सामा-न्यत इति। प्रज्ञां कुर्वीत, विजानातीति प्रज्ञादिरूपेणेत्यर्थः। विशेषाः ध्यानत्वादयः। छागो वेति। "अग्नीषोमीयं पशु-मालभेत" इति श्रुतम्। तत्र किं यः कश्चन पशुर्यागसाधनम्, उत छाग इति संशये, विधिवाक्ये विशेषस्याश्रवणाद्यः कश्चन पशुरिति प्राप्ते—सामान्यबुद्धेः पर्यवसानाभावेन विशेषापेक्षायां "अग्नीषोमाभ्यां छागस्य वपाया मेदसः" इत्यादिमन्त्रश्रुतविशेषमादाय सामान्यबुद्धिः पर्यवस्यतीति षष्ठे निर्णितम्। तद्वदत्रापि श्रुतविशेषोपसंहारेण सामा-न्यबुद्धिपर्यवसानमित्यर्थः। इत्यादावनूद्यमानमिति। विज्ञाय अनुविद्य अन्वेष्टव्यः श्रोतव्यो मन्तव्य इत्यादिभिरिति शेषः। तथा चानूद्यमानरूपं न विधेयविशेषरूपं भवितुमर्हतीति भावः। अनूद्य-मानत्वमसिद्धमित्याशङ्क्य निषेधति—न च सोऽन्वेष्टव्य इति।

श्रवणादिविधिः स्यादिति शङ्क्यम्; अधीतसाङ्गवेदाधिगतफलवदर्थनिर्णयरागप्राप्तविचारे विधिवैयर्थ्यात्। मननस्य च तत्प्रतिष्ठार्थतयाऽर्थप्राप्तत्वात्। तस्मात् "ओमित्येवं ध्यायथ आत्मानम्" इति ध्यानरूपताविशेष उच्यते। "निदिध्यासितव्यः" इत्यादौ सन्नन्तनिर्देशाद्ध्यानस्य मुक्त्युपायतयेष्यमाणत्वाभिप्रायात्। "सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिप्रतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति क्षणिकस्मरणस्वरूपेण ध्रुवत्वानुपपत्तेर्विजातीयप्रत्ययानन्तरितसन्तातिरूपत्वं विशेषः प्रतिपाद्यते।

" अब्बिन्दुसन्ततिरिव ध्यानं चिन्तनसन्ततिः।
तैलधारावदच्छिन्ना ध्रुवानुस्मृतिसन्ततिः॥ "

रत्नतूलिका

यत्र विधिप्रत्ययश्रवणं सोऽन्वेष्टव्य इत्यादौ तत्र विधित्वे सिद्धे तन्न्यायेनानुविद्य विज्ञायेत्यादावपि विधित्वं सेत्स्यतीति तयोर्ग्रहणमिति ध्येयम्। मननस्य चेति। प्रमेयगतासंभावनानिवृत्तिद्वारा प्रमाणतात्पर्यज्ञानेऽप्रामाण्यशङ्कानिराकरणेन स्थिरीकरणार्थतयेत्यर्थः। ननु ज्ञानमेवाज्ञाननिवृत्तिद्वारा स्वरूपप्रतिष्ठाकैवल्यलक्षणमुक्त्युपायो न तु ध्यानमिति तस्य कथं मुक्त्युपायतया विधानमित्यत आह—निदिध्यासितव्य इत्यादाविति। तथा च सन्नन्तनिर्देश एव तस्येष्यमाणत्वोपपादनमुखेन मुक्त्युपायत्वं गमयतीति भावः। ध्यानध्रुवानुस्मृत्योर्भेदं दर्शयति—अब्बिन्दुसन्ततिरिवेति। अब्बिन्दुसन्ततिरिव विच्छिद्य विच्छिद्य स्मृतिसन्ततिर्ध्यानम्, तैलधारावदविच्छिन्ना स्मृतिसन्ततिर्ध्रुवानुस्मृतिसन्ततिरिति भेदः। अत्र विच्छिन्नाविच्छिन्नस्मृतिसन्ततिसामान्यं ध्यानं, तस्याविच्छिन्नत्वरूपं ध्रुवानुस्मृतित्वं विशेष

"आत्मानमेव लोकमुपासीत", "आत्मेत्येवोपासीत,"

"· · · · मां ध्यायन्त उपासते।
तेषामहं समुद्धर्ता मृत्युसंसारसागरात्"॥

इत्यादिषु तत्परत्वं तदेकनिष्ठालक्षणं विशेषोऽभिधीयते। तात्पर्यपूर्वकानुवृत्तावेव राजानमुपास्ते गुरुमुपास्त इत्यादिप्रयोगात्। "निचाय्य तं मृत्युमुखात्प्रमुच्यते" इत्यादौ दर्शनसमानाकारताविशेषो निरूप्यते, चायङो दर्शनकर्मत्वात्। सा च विशदतरावभासरूपता स्मृतेरपि न विरुद्ध्यते,

"वृक्षे वृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम्।"
"चिन्तयानो हृषीकेशमपश्यत्तन्मयं जगत्॥"

रत्नतूलिका

इति भावः। ननु तत्परत्वं तत्रेच्छावत्त्वं पुरुषस्य धर्मो न तु ज्ञानस्येत्यतस्तदर्थं दर्शयति—तदेकनिष्ठालक्षणमिति। तदेकस्मिन् निष्ठा समाप्तिः। ध्यानस्य इतरव्यापारदशायामपि ध्येयैकविषयकत्वमिति यावत्। तद्रूपो विशेष इत्यर्थः। ननूदाहृतवाक्येषु तद्रूपं न प्रतीयत इत्यत आह—तात्पर्यपूर्वकेति। तथा च उपासीत उपासत इत्यनेन तद्रूपप्रतीतिरिति भावः। चायङ इति। चायृ पूजानिशामनयोरिति धातोर्दर्शनार्थकत्वादित्यर्थः। ननु स्मृतिरूपस्य ध्यानस्य कथं दर्शनसमानाकारतेत्यत आह—सा चेति। सर्वांशेनापि स्वविषयसन्देहादिविरोधित्वमित्यर्थः। विशदतरावभासरूपायां स्मृतौ दर्शनवाचकप्रयोगमुदाहरति—वृक्षे वृक्षे चेति। नन्वेष परमात्मा यं साधकं वृणुत इति परमात्मवरणीयत्वमेव साधकस्य प्रतीयते, न तु

इत्यादिदर्शनात् । "यमेवैष वृणुते तेन लभ्यः" इत्यादौ प्रीतिरूपत्वविशेष उपक्षिप्यते । कथम्—

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन, किं तु परमात्मनो मामयं प्राप्नोत्वित्यनुग्रहलक्षणेन वरणेन। यस्य चायं परमात्मा निरतिशयप्रियः स एव तस्य प्रियतमः सन् वरणीयो भवति। प्रीतिविषयश्च प्रिय इत्युच्यते। तथा च स्मृतिः—

"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।" इति ।
"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते"। इति च ।

सततयुक्तानां परमात्मना सततयोगमाशंसमानानाम् । "आशं-

रत्नतूलिका

परमात्मविषयकप्रीतिः, येनोपासनायाः प्रीतिरूपत्वं लभ्येतेत्याक्षिपति—**कथमिति** । उत्तरमाह—**नायमात्मेति** । "यमेवैष वृणुते" इत्युत्तरांशं व्याख्यातुं तर्ह्युपायान्तराभावात्परमात्मलाभ एव न स्यादित्यभिप्रेत्य पृच्छति—**किं त्विति** । व्याचष्टे—**परमात्मन इति** । वरणेनेत्यनन्तरं लभ्य इति संबन्धः । नन्वेवमप्युपासनायाः प्रीतिरूपत्वे किमायातमित्यत आह—**यस्य चायमिति**। नन्वस्त्वेतावता परमात्मनः प्रियत्वोपक्षेपस्तथापि न विवक्षितसिद्धिरित्याशङ्क्य तत्सिद्धये प्रियशब्दार्थमाह—**प्रीतिविषयश्चेति**। यस्य परमात्मा प्रियः स एव तस्य प्रियो भवतीत्यर्थे स्मृतिं संवादयति—**तथा च स्मृतिरिति**। ननु प्रागेव सततयुक्तत्वे पश्चात्परमात्मप्रापकबुद्धियोगो व्यर्थ इत्यत आह—**परमात्मनेति** । आशंसायां गम्यमानायां

सायां भूतवच्च" इति कर्तरि क्तः। तस्मिन्निरतिशयप्रीतिमता-मित्यर्थः। प्रीतिपूर्वकं ददामीत्यन्वयः। तथा च परमपुरुषानुग्रह-द्वारा तल्लम्भनी प्रीतिर्मुक्त्युपायवेदनावस्थाभेदरूपत्वं नातिवर्तते। "आत्मक्रीड आत्मरतिः" इत्यादौ चानुक्षणं नवीन इवेष्ट-विषये निरतिशयास्वादनरूपरत्यात्मकत्वाविशेष उदीर्यते।

"या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु॥"

"युवतीनां यथा यूनि यूनां च युवतौ यथा।
मनोऽभिरमते तद्वन्मनो मे रमतां त्वयि॥"

इत्यादिषु प्रीतिरत्योः पुरुषार्थतयेष्यमाणत्वावगमात्। भक्ति-रूपत्वं चापरो विशेषः।

"नाहं वेदैर्न तपसा न दानेन न चेज्यया।"

इत्यादिसाधनान्तरं निषिद्धय,

"भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप॥"

### रत्नतूलिका

भविष्यदर्थे भूतार्थविहितप्रत्ययो भवतीति सूत्रार्थः। अनेन प्राप्नुवन् क्तप्रत्ययोऽकर्मकत्वात् कर्तर्येव भवतीति कर्तरीत्युक्तम्। नन्वेवमपि परमात्मनः प्रियत्वे किमायातमित्यत आह--**तस्मिन्निति**। तत्र प्रीतिमत एव सततं तद्योगाशंसा भवति नान्यस्येति भावः। प्रीति-पूर्वकमित्यस्य पूर्वत्रान्वये पौनरुक्त्यमित्यतोऽन्वयमाह—**प्रीतिपूर्वक-मिति**। नन्वस्तु साधकस्य परमात्मविषयप्रीतिस्तथापि तस्या उपासनावस्थाविशेषत्वे किं मानमित्यत आह—**तथा चेति**।

इत्यादेः "तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते" इत्यादिश्रुत्यैकार्थ्यात्,

"पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया।"

"धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता।
समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयि॥"

इत्यादिस्मरणाच्च। स्नेहपूर्वकानुध्यानात्मा सेवापरपर्याया भक्तिः। उक्तं च—

"स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते।
भज इत्येष धातुर्वै सेवायां परिकीर्तितः॥
तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी॥" इति॥

## विकल्पस्याष्टदोषदुष्टत्वम्

न चामून्यन्यान्यन्यानि मुक्तौ साधनानि विधीयन्ते; अष्टदोषदुष्टविकल्पापत्तेः। विकल्पे ह्यन्यतरशास्त्रपरिग्रहे त्रिभङ्ग्यन्तरेणैकैकत्र प्रामाण्यत्यागाप्रामाण्यग्रहणत्यक्तप्रामाण्यग्रहण-

### रत्नतूलिका

मुक्त्युपायबुद्धियोगरूपपरमपुरुषानुग्रहद्वारा परमात्मलाभहेतुत्वात्तदवस्थाविशेषत्वं प्रीतेरिति भावः। श्रुत्यैकार्थ्यादिति। तथा च श्रुतौ वेदनातिरिक्तोपायनिषेधात् स्मृतौ भक्त्यतिरिक्तोपायनिषेधात्तयोरेकार्थत्वे भक्तिर्वेदनस्यावस्थाविशेष इति पर्यवस्यतीति भावः। एवं श्रुत्येकार्थस्मृतेस्तात्पर्यगत्या ध्यानमेव भक्तिरित्युक्तम्। इदानीं भजधात्वर्थसङ्गतिपूर्वकं ध्यानमेव भक्तिरिति स्मृतौ कण्ठत एवोक्तमिति हृदि निधायाह—स्नेहपूर्वकेति॥

त्रिभङ्ग्यन्तरेणेति। ध्यानविधायकशास्त्रस्वीकारे, भक्तिविधायकशास्त्रे प्रामाण्यत्यागः अप्रामाण्यग्रहणं चेति दोषद्वयम्। पुनर्भक्ति-

गृहीताप्रामाण्यत्यागरूपदोषचतुष्टयस्यावर्जनीयत्वात्। त्रिभङ्ग्यन्तरमनपेक्ष्याप्येकैकत्र प्रतिपत्तिबाधोऽनुष्ठानबाधोऽपूर्वबाधः फलबाधश्चेति चत्वारो दोषा इत्यप्याहुः। लघुगुरुयत्नविकल्पायोगाच्च। चशब्दाश्रवणाद्द्वन्द्वानिर्देशाच्च न समुच्चयः। निरपेक्ष-

## रत्नतूलिका

विधायकशास्त्रस्वीकारे, ध्यानशास्त्रे प्रामाण्यत्यागः अप्रामाण्यग्रहणं चेति दोषद्वयम्, भक्तिशास्त्रे च त्यक्तप्रामाण्यग्रहणं गृहीताप्रामाण्यत्याग इति दोषद्वयमिति चत्वारो दोषाः। पुनश्च ध्यानशास्त्रस्वीकारे, तत्रैव त्यक्तप्रामाण्यग्रहणं गृहीताप्रामाण्यत्याग इति दोषद्वयमित्याहत्याष्टौ दोषा इत्यर्थः। **प्रतिपत्तीति।** कर्तव्यताबोध इत्यर्थः। **लघुगुरुयत्नेति।** विच्छिन्नाविच्छिन्नसाधारणस्मृतिसन्ततिरूपं ध्यानमल्पयत्नसाध्यत्वाल्लघु, ततोऽविच्छिन्नस्मृतिसन्ततिरूपा ध्रुवानुस्मृतिरधिकयत्नसाध्येति गुर्वी। एवं दर्शनसमानाकारध्यानादीनां ततोऽप्यधिकयत्नसाध्यतेति गुरुतरत्वमिति भावः। **चशब्दाश्रवणादिति।** यथा "यदग्नये च प्रजापतये च सायं जुहोति" इत्यग्निप्रजापतिसमुच्चयपरे वाक्ये चशब्दः श्रूयते, न तथात्र तस्य श्रवणमिति भावः। **द्वन्द्वानिर्देशादिति।** यथा "दर्शपूर्णमासाभ्याम्" इत्यत्र द्वन्द्वस्य श्रवणं, न तथात्र तस्य श्रवणमिति भावः। एवं साधकाभावान्न समुच्चय इत्युक्तम्। इदानीं बाधकसत्वान्न स इत्याह—**निरपेक्षेति।** "स्मृतिप्रतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः", "निचाय्य तं मृत्युमुखात्प्रमुच्यते" इत्यादिषु ध्रुवानुस्मृत्यादीनां मुक्तौ निरपेक्षसाधनत्वं श्रुतम्। तच्च समुच्चये विरुध्यते। अतो ध्रुवानुस्मृतित्वादयः सर्वेऽपि मुक्तिसाधनतया विधित्सितज्ञानस्य विशेषा एवेति सर्वविशेषविशिष्टनिदिध्यासनविधिरिति

साधनत्वावगमाविरोधाच्च । तथा चोदिताशेषविशेषोपसंहारपरं सूत्रम्—"आवृत्तिरसकृदुपदेशात्" इति ॥

वेदनस्याप्रायणमनुष्ठेयत्वम्

तदेवंरूपं वेदनमहरहरनुष्ठानाभ्यासाधेयातिशयमाप्रायणादनुष्ठेयम्, "प्रायणान्तमोङ्कारमुपासीत" इति श्रुतिदर्शनात् ।

"क्षेत्रज्ञः करणी ज्ञानं करणं तस्य तेन तत् ।

रत्नतूलिका

भावः । उक्तार्थे सूत्रं संवादयति—तथा चेति । आवृत्तिरसकृत् "प्रज्ञां कुर्वीत" इति सामान्यशब्दोक्तं वेदनमसकृदावृत्तिरूपमुपासनम्, कुतः, उपदेशात् "मनो ब्रह्म" इत्याद्युपक्रम्य "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद" इत्यादौ विद्युपास्त्योर्व्यतिरेकेणोपदेशादिति सूत्रस्य श्रौतोऽर्थः । एवं ज्ञानसामान्यवाचिनां शब्दानां विशेषपर्यवसायित्वेनासकृदावृत्तिरूपज्ञानपरत्वं वदतः सूत्रकारस्य विशेषान्तरोपस्थापकेषु सत्सु तत्तद्विशेषपर्यवसायित्वं न्याय्यमित्यभिप्रेतार्थ इति ज्ञायते । अतः श्रुत्यभिप्रायाभ्यां सूत्रस्याशेषविशेषोपसंहारपरत्वमिति भावः ॥

अस्त्वेवं मुक्त्युपायवेदनस्य ध्यानत्वादयो विशेषाः । तथापि कर्मणां तदुपयोगे किमायातमित्यत आह—तदेवं रूपमिति । ध्यानादिरूपमित्यर्थः । तथा चोक्तविशेषाणां कर्मसाध्यत्वमिति भावः । आ प्रायणादनुष्ठाने श्रुतिस्मृती प्रमाणयति—प्रायणान्तमिति । उपासनारूपकरणवान् जीवः करणेन मुक्तिकार्यं निर्वर्त्य कृतकर्तव्यं तदुपासनं त्यजेदिति स्मृत्यर्थः । स्मृतेरन्यपरत्वव्युदासेनोक्तार्थपरत्वं

निष्पाद्य मुक्तिकार्यं वै कृतकृत्यं निवर्तयेत् ॥"

इति स्मृतेश्च । न ह्यत्र देहान्ते मुक्तस्योपासनानिवृत्तिर्विधेया, स्वतः सिद्धेः, किं तु मुक्तेः प्रायणोत्तरकालत्वात्तावदनुष्ठेयमुपासनमिति । तथा च सूत्रम्—"आ प्रायणात्तत्रापि हि दृष्टम्" इति । तदुत्पत्तये च यज्ञादीनि यावज्जीवमनुष्ठेयानि, "स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते" इत्येवंशब्दगृहीतप्रकृतविद्याकर्मणोर्यावज्जीवमनुष्ठेयत्वश्रवणात् । तथा च भगवान्सूत्रकारः— "सर्वापेक्षा च यज्ञादिश्रुतेः",

रत्नतूलिका

दर्शयति—न ह्यत्रेति । मुक्तिकार्यं निष्पाद्य ज्ञानं निर्वर्तयेदित्युक्त्या प्रायणोत्तरकालमुक्तिपर्यन्तमुपासनमनुष्ठेयमिति गम्यत इति तत्प्रमाणत्वमिति भावः । उक्तार्थे सूत्रं संवादयति—तथा चेति । मुक्त्युपायभूतमुपासनमाप्रायणमादेहपातमनुवर्तनीयम्, कुतः, तत्रापि तस्मिन्नर्थेऽपि "स खल्वेवं वर्तयन्यावदायुषम्" इति प्रत्यक्षश्रुतिरस्तीति सूत्रार्थः । तत्र यावच्छब्दस्य साकल्यार्थत्वादहरहरनुष्ठानसिद्धिरिति भावः । अस्तूपासनस्याप्रायणादनुष्ठानम्, तथापि कर्मणां तावत्कालमनुवृत्तौ किं मानमित्यत आह—तदुत्पत्तये चेति । प्रकृतविद्याकर्मणोरिति । विद्यायाः पूर्वग्रन्थे प्रतिपादितायाः परमप्रकृतत्वम्, "धार्मिकान्विदधत्" इति कर्मणां प्रकृतत्वम्, एवंशब्दश्च प्रकृतोभयपरामर्शी, यावच्छब्दश्च साकल्यपर इति जीवनानुवृत्तिपर्यन्तं कर्मणामनुष्ठानसिद्धिरिति भावः । सर्वापेक्षा चेति । कर्मवत्सु गृहस्थेषु यज्ञादिसर्वकर्मापेक्षा, कुतः, यज्ञादिश्रुतेः "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इति इष्यमाणविद्यायां यज्ञादिविनियोगश्रुतेः । अतो गृहस्थेषु तदपेक्षा । यथाश्वो गमनसाधनभूतोऽपि स्व-

**"अग्निहोत्रादि तु तत्कार्यायैव", "सहकारित्वेन च" इति। तदिदं प्रपञ्चितं वाक्यकारेण— "वेदनमुपासनं स्यात्तद्विषये श्रवणात्, उपासनं स्यात् ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च", "तल्लब्धिर्विवेक-**

रत्नतूलिका

परिकरबन्धरूपपरिकर्मापेक्षः एवं विद्यापि, ऊर्ध्वरेतस्सु च स्वाश्रमविहितं कर्मैव परिकर्म भविष्यतीति सूत्रार्थः। **अग्निहोत्रादि त्विति**। अग्निहोत्राद्याश्रमधर्मस्य विद्योत्पत्तिरेव कार्यमिति तत्कार्यायैवानुष्ठेयः। दृश्यते हि "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इत्यादिना विद्योत्पत्तिकार्यत्वमित्यर्थः। **सहकारित्वेनेति**। विद्यासहकारित्वेन तदङ्गतयाप्यनुष्ठेयं यज्ञादिकर्म; "तमेत" मित्यादिना विद्यासाधनत्वेनापि विहितत्वात्। संयोगपृथक्त्वेन विरोधपरिहार इति सूत्रार्थः। **तदिदमिति**। आवृत्तिसूत्रेण कण्ठोक्तमावृत्तज्ञानत्वरूपमुपासनत्वं तदभिप्रेतं ध्रुवानुस्मृतित्वादिकं च तत्तात्पर्यविदा वाक्यकारेण प्रपाञ्चितमित्यर्थः। **वेदनमिति**। मुक्तिसाधनतया सर्वासूपनिषत्सु विहितवेदनमुपासनं स्यात्, कुतः, तद्विषये वेदनविषये उपासनशब्दस्य "मनो ब्रह्मेत्युपासीत," "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद" इत्यादौ श्रवणादित्यर्थः। एवं सूत्रकारेण कण्ठोक्तमुपासनत्वमभिधाय तदभिप्रेतं तस्य ध्रुवानुस्मृतित्वं दर्शयति— **उपासनं स्यादिति**। **दर्शनात्** लोके दर्शनात्। **निर्वचनात्** "सत्त्वशुद्धौ ध्रुवानुस्मृतिः" इति श्रुतिवाक्यादित्यर्थः। एवं सूत्रकाराभिमतं ध्रुवानुस्मृतित्वं वदतो वाक्यकारस्य तुल्यन्यायतया विशेषान्तरोपस्थापकवाक्ये सति वेदनादिशब्दास्तत्पर्यन्ताः स्युरिति दर्शनसमानाकारत्वादिकमपि सिद्ध्यतीति भावः। ननु कर्मणो विद्याङ्गत्वमुपासनस्य शमाद्यङ्गत्वविरुद्धम्; इन्द्रियनिग्रहे सति कर्मानुष्ठानानुपपत्तेरित्याशङ्क्य विरोधं परिजिहीर्षुराह— **तल्लब्धिरिति**। अत्र तच्छब्देन प्रकृता ध्रुवानु-

विमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभवान्निर्वचनाच्च" इति। अत्र शमादीनां काम्यनिषिद्धविषयत्वेन विहितकर्मसमुच्चयोपपत्तिः संभवः। निर्वचनं श्रुतिः। विवेकादीनां स्वरूपं चाह—"जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिर्विवेकः, विमोकः कामानभिष्वङ्गः, आरम्भणसंशीलनमभ्यासः, पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया, सत्यार्जवदयादानाहिंसा-

रत्नतूलिका

स्मृतिः परामृश्यते, द्वन्द्वनिर्देशाद्विवेकादेः समुच्चयः, संभवादित्यनेन विरोधः परिहृत इत्यभिप्रेत्य व्याचष्टे—**अत्र शमादीनामिति**। तथा च [1]शमादेः काम्यनिषिद्धविषयत्वम्, अनुष्ठानं तु नित्यनैमित्तिकादिविषयमिति भिन्नविषयत्वान्न विरोध इति भावः। अप्रमाणेभ्यो निष्कृष्टं वचनं निर्वचनमित्यभिप्रेत्य व्याचष्टे—**निर्वचनं श्रुतिरिति**। न केवलं परिगणनमात्रं कृतमपि तु तेषां स्वरूपमपि तेनैवोक्तमित्याह—**विवेकादीनामिति**। जातिदुष्टकलञ्ज–आश्रयदुष्टपतिताद्यन्न–केशादिनिमित्तदुष्टाहारात् सात्त्विकाहाराणां विवेकोऽत्र विवेकशब्दस्य मुख्यार्थः। तत्फलभूतकायशुद्धिस्त्वौ[2]पचारिक इति ध्येयम्। **कामानभिष्वङ्ग इति**। काम्यन्त इति कामा विषयाः तेष्वभिष्वङ्गः. [3]यो मनोविकारेण [4]विषयमभुक्त्वा स्थातुं न शक्नोति सः, तद्राहित्यमित्यर्थः। "कामात्क्रोधोऽभिजायते" इति वचनात् क्रोधाभावश्चाऽत्र फलितः। **आरम्भणं आलम्बनं** शुभाश्रयः तस्य संशीलनं, इदं च विशिष्टदेशकालकर्तव्यस्य ध्रुवानुस्मृतिरूपस्य ध्यानस्यानुग्राहकं सदा संशीलनं पुनः पुनरभ्यासः। अतः

---

[1] निवृत्तिरूपशमादेः–कुं. [2] पचारिकार्थः–कुं. [3] येन मनोविकारेण–कुं.
[4] विषयं भुक्त्वा–कुं.

नाभिध्याः कल्याणानि, अपकारास्मृतिरनभिध्या, देशकाल-वैगुण्याच्छोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसादः" अतीतं पुत्रमरणादि शोकहेतुः, भावि च भयहेतुः, तदनुस्मृतेरभास्वरत्वं मनसोऽवसादः। किमुक्तं भवति, तज्जं दैन्यमिति, तद्विपर्ययोऽनवसाद इत्यर्थलभ्यम्। तुष्टिरुद्धर्षः। स च देशकालसाद्गुण्यात्प्रियवस्त्वनुस्मृतेश्च मनस उत्सेकः। स च विद्याविरोधी। तद्विपर्ययोऽनुद्धर्ष इत्यर्थलभ्यम्। अत्र

## रत्नतूलिका

साधनकोटौ निवेश इति भावः। शक्तितः पञ्चयज्ञाद्यनुष्ठानं क्रियेति संबन्धः। सत्यं भूतहितम्, आर्जवं मनोवाक्कायानामैकरूप्यम्, दया स्वार्थनिरपेक्षं परदुःखासहिष्णुत्वम्, अहिंसा करणत्रयेण परपीडा-निवृत्तिः, दानं लोभराहित्यम्, एतेषां स्फुटत्वादनभिध्येत्येतद्व्याचष्टे—अपकारास्मृतिरिति। परकृतापकारस्यास्मृतिरित्यर्थः। देशकाल-वैगुण्यादिति। देशवैगुण्यात्कालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च मनसोऽभास्वरत्वमवसाद इत्येकवाक्यतया संबन्धः। तत्र शोक-वस्त्वाद्यनुस्मृतेरित्यंशं विशदयति—अतीतमिति। तथा च शोक-शब्दस्तद्धेतुपर इति भावः। आदिपदग्राह्यमाह—भावि चेति। अत्र पुत्रमरणादीति विशेष्यानुषङ्गः। तज्जं दैन्यमित्यमुमंशमुक्तव्याख्यान-तया योजयितुमाकाङ्क्षामुत्थापयति—किमुक्तं भवतीति। मनस उत्सेक इति। अत्यन्तसन्तोष इत्यर्थः।

"स्वाध्यायशौचसन्तोषतपांसि नियतात्मवान्" ॥

इति केवलसन्तोषस्यापेक्षितत्वेन त्याज्यत्वाभावादिति। अत्रेति। विवेका-

यथाक्रमं निर्वचनानि—"आहारशुद्धौ सत्त्वशुद्धिः", "शान्त उपासीत", "अथ मुनिः", "सदा तद्भावभावितः", "क्रियावानेष ब्रह्मविदां वरिष्ठः", "तमेतं वेदानुवचनेन", "सत्येन लभ्यः", "न येषु जिह्ममनृतं न माया च", "नायमात्मा बलहीनेन लभ्यः", "शान्तो दान्त" इत्यादीनि। तस्मादिष्यमाणवेदनोपायकर्माधिगमाय प्रथमं [1]तावद्विचारापेक्षेति ॥

रत्नतूलिका

दीनां ध्रुवानुस्मृत्यादिसाधनत्वे अप्रमाणेभ्यो निष्कृष्टानि वचनानि प्रमाणभूतवचनानीत्यर्थः। आहारशुद्धाविति विवेकस्य निर्वचनम्। शान्त उपासीतेति। विमोकस्य कामक्रोधराहित्यं शान्तपदेन विवक्षितमिति भावः। "अथ मुनि"रित्यभ्यासे श्रौतं निर्वचनम्। "सदा तद्भावभावितः" इति स्मार्तमिति विवेकः। क्रियाशब्दार्थविशदीकरणायाह—तमेतमिति। "न येष्वि"त्यार्जवस्य। "नायमात्मा" इति दयादेः। बलहीनेन मनोबलहीनेनेत्यर्थः। "शान्तो दान्तः" इत्यनभिध्याया इति बोध्यम्। परमप्रकृतं कर्मविचारप्राथम्यमुपसंहरति—तस्मादिति। इष्यमाणवेदने उपायभूतं यत्कर्म तदधिगमायेत्यर्थः ॥

विविदिषायामेव कर्मणामुपयोगः, तद्द्वारा तु वेदने, सा च जन्मान्तरे विचार्यानुष्ठितैरपि कर्मभिः संभवतीति, न तादर्थ्येनेदानीं कर्मानुष्ठानं नियतम्, अतो न कर्मविचारप्राथम्यानियम इत्यभिप्रेत्याह—

[1] तद्विचारापेक्षेति–क.

### कर्मणां वेदनानङ्गत्वम्

अत्राभिधीयते—आस्तामुपासनं वेदनमन्यद्वा मुक्तिहेतुरिति। न तावदभिमतवेदनोत्पत्तावाहत्य कर्माणि सन्निपतन्ति, स्मृतिमयस्य ध्यानस्यानुभवसंस्कारमूलत्वात्। स्मृतिसन्तत्यविच्छेदे सन्निपातीनि तानीति चेत्, अहो बतेदमप्रबुद्धित्वमाकीर्णकस्य; अनेककारकव्यापारपूर्वापरानुसन्धानवैयग्र्ये ध्येयस्मरणरूपस्यैवोच्छेदात्, आलम्बनसंशीलनसामर्थ्यादेव स्मृतिसन्तत्यविच्छेदोपपत्तेश्च। लोकवदेव ध्यानस्य निरन्तराभ्यासानुनिष्पादिदर्शनरूपापत्तावपि कर्मणामसन्निपातित्वात्।

### रत्नतूलिका

**अत्राभिधीयत इति।** **वेदनमन्यद्वेति।** उपासनादन्यद्वाक्यजन्यापरोक्षज्ञानं वेत्यर्थः। पक्षद्वयेऽपि वेदने तेषां साक्षादुपयोगो निरसनीय इति भावः। मुक्तिहेतुध्याने कर्मणां साक्षादुपयोगः किं दृष्टद्वारा उतादृष्टद्वारा। आद्येऽपि किं ज्ञानस्य स्वरूपोत्पत्तौ, किं वा तत्सन्तत्यविच्छेदे, अथवा [1] दर्शनसमानाकारतायाम्। द्वितीयेऽपि किं श्रेयोमात्रसाधारण्येन, किं वा असाधारण्येनेति विकल्प्याद्यं दूषयति—**न तावदिति।** **आहत्य** साक्षात्। विविदिषाद्वारा तु तदिष्टमिति भावः। प्रथमे द्वितीयमाशङ्कते—**स्मृतिसन्तत्यविच्छेद इति।** **अप्रबुद्धित्वमिति।** बाधके साधकत्वभ्रमात्साधकस्य चाज्ञानादिति भावः। तृतीयं दूषयति—**लोकवदेवेति।** यथा लोके विधुरस्य कामिनीध्यानं निरन्तराभ्यासेन विनापि कर्मभिः साक्षात्काररूपं तद्वदि-

---

[1] दर्शनासमाना.

वेदने कर्माणि विनियुञ्जाना श्रुतिरुपयोगं कमपि पश्यतीति चेत्, अहो बतायं तन्त्रमात्रपरतन्त्रप्रज्ञस्याम्नायविस्रम्भः। वाक्यकारः क्रियाया ध्रुवानुस्मृतिहेतुतामादिक्षदिति चेत्, अन्धगोलाङ्गूलन्यायोऽयमाकीर्णजन्मनः। सुखदुःखाप्तिहानिहेतुमात्रसम्पत्तिरेव धर्माधीनेति किमत्र विशेषविवक्षयेति चेत्, किमेवं पाकादावपि क्षुधादुःखहानसाधने प्रवर्तमानो विचार्यैव धर्मं समुच्चित्याचरतु। वेदनोद्देशेन विधानमत्र विशेष इति चेत्, न; दृष्टहेतुसंभवे वेदने तदुपयोगस्याद्याप्यनिरूपणात्। शास्त्रार्थाधिगमे

## रत्नतूलिका

त्यर्थः। महाविकल्पे द्वितीयमभिप्रेत्य शङ्कते—**वेदने कर्माणीति**। **कमपीति**। दृष्टाभावेऽप्यदृष्ट उपयोगोऽवश्यवक्तव्य इति भावः। **आम्नायविस्रम्भ इति**। न चैतावतोपयोगप्रकारः कथित इति भावः। सामान्याशङ्कां द्वितीयप्रथमे विशेषे पर्यवसाययन् शङ्कते—**सुखदुःखाप्तीति**। अतिप्रसङ्गेन दूषयति—**किमेवमिति**। तथा च पाकप्रवृत्तेः पूर्वं धर्मविचारः, कर्मणां पाकेन सह समुच्चित्यानुष्ठानं च स्यादित्यतिप्रसङ्गः। यदि च जन्मान्तरानुष्ठितधर्मेण तत्सिद्धिरिति नोक्तदोषद्वयावकाशस्तदा प्रकृतेऽपि तुल्यमिति भावः। अत्रोपयोगप्रकारं वक्ष्यमाणं मनसि निधाय द्वितीये द्वितीयमाशङ्कते—**वेदनोद्देशेनेति**। उक्तं मा विस्मार्षीरित्याह—**न दृष्टहेतुसंभव इति**। दृष्टैर्हेतुभिः संभवो यस्य तस्मिन्नित्यर्थः। वेदनविषये दृष्टानां हेतूनांसंभव इति वार्थः।

अदृष्टद्वारा विद्योत्पत्तिप्रतिबन्धककर्मनिवृत्तौ तेषामुपयोग इति हृदि निहितमुपयोगं सदृष्टान्तमाशङ्कते—**शास्त्रार्थाधिगम इति**। कर्मनिवर्त्यं प्रतिबन्धकदुरितं किं सञ्चितं, उतारब्धमिति विकल्प्य नाद्य

दृष्टहेतुकेऽपि तदप्रत्यूहाय देवताराधनाद्यनुसरणादिहापि विद्योत्पत्तिप्रतिबन्धकदुरितोत्सादने तदुपयोग इति चेत्, ननु प्रासङ्गिकनिजस्मृतिमात्रनिह्नुतनिखिलस्मर्तृदुरितराशिं परमात्मानमनुध्यायतः कुतः प्रतिबन्धसंभवः। तथा च स्मृतिः—

"हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः॥
सकृत्स्मृतोऽपि गोविन्दो नृणां जन्मशतार्जितम्।
पापराशिं दहत्याशु तूलराशिमिवानलः॥" इति॥

श्रुतिरपि—"अस्य सर्वे पाप्मानः प्रदूयन्ते", "एवंविदि पापं कर्म न श्लिष्यते" इत्याद्या। तथा च सूत्रम्—"तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ" इति। ततश्चोपायदशाप्रभृति

रत्नतूलिका

इत्याह—ननु प्रासङ्गिकेति। प्रासङ्गिकेत्यनेन तात्पर्यपूर्वकत्वनिवृत्तिः। स्मृतिमात्रेत्यनेन तस्या आवृत्तिरूपोपासनत्वनिवृत्तिः। प्रसङ्गात्स्मृतस्य पापनिवर्तकत्वमित्यत्र स्मृतिं प्रमाणयति—तथा चेति। स्मृतमात्रस्य तन्निवर्तकत्वे प्रमाणमाह—सकृत्स्मृतोऽपीति। तदधिगमे परमात्मनो ज्ञाने उत्तराघानामश्लेषः, पूर्वेषां विनाशः, कस्मात्? तद्व्यपदेशात् "अस्य सर्वे पाप्मानः प्रदूयन्ते" इत्यादिना पूर्वनाशस्य, "एवंविदि पापं कर्म न श्लिष्यते" इत्युत्तराश्लेषस्य च व्यपदेशादिति सूत्रार्थः। ननु श्रवणप्रवृत्तिप्रभृत्युपासनस्य प्रीतिरूपत्वाभावेनोपासकस्य भगवद्वरणीयत्वाभावात् कथं भगवदधीना प्रतिबन्धकनिवृत्तिः स्यादित्यत आह—ततश्चेति। यद्वा—ननु वैषम्यादिपरिहाराय भगवतः कर्मानुष्ठानसापेक्षस्यैव तन्निवर्तकत्वमिति कर्मणां विद्योपयोग इत्यत आह—ततश्चेति। ततश्च मुक्त्युपायप्रवृत्त्या वैषम्यादिपरिहार

भगवज्ज्ञानस्य प्रीतिरूपत्वेनेष्यमाणतया विचारात्मकं ज्ञानं विधेयमित्युपगमात् स्वस्मिन्प्रीतिमतः स्वप्रियत्वेन भगवता वरणीयतया श्रवणादिप्रवृत्तिमात्रेण परमात्मपरिपालनीयस्य तदनुगुणविवेकवैराग्यशमदमादिकं यमनियमादिकं च समेधयतो न दुरितसंभवः ।

"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" ॥

इति स्मृतेः । उक्तं च श्रुतप्रकाशिकायां—"अहं स्मरामि मद्भक्तमित्युक्तप्रकारेण साक्षात्कारविरोधिनिवर्तनादिकं भगवत एव भर इति न स्वरूपप्रच्युतिसंभवः" इति । ननु श्रूयते—"शृण्वन्तोऽपि बहवो यं न विद्युः" इति । स्मर्यते च—

"योगाच्चलितमानसः । अप्राप्य योगसंसिद्धिम्" इति

तच्च लिङ्गं विद्याप्रतिबन्धकभाव इति । सत्यम् ; किं तूपस्थितविपाकेन प्रबलेन कर्मणा तत्प्रतिबन्धः । तच्च विद्यया कर्मणा

रत्नतूलिका

इति भावः । तदनुगुणेति । तथा च प्रासङ्गिकस्मृतिमात्रेणापि दुरितनिवर्तकस्य भगवतस्तात्पर्यपूर्वकासकृत्स्मृतौ तन्निवर्तकत्वं कैमुतिकन्यायसिद्धमिति भावः । आश्रमकर्मानपेक्षस्यैव भगवतः सर्वदुरितनिवर्तकत्वे स्मृतिं प्रमाणयति—सर्वधर्मानिति । इयता प्रबन्धेन विद्याप्रतिबन्धकदुरितमेव नास्तीत्युक्तमिति मन्वानः शङ्कते—ननु श्रूयत इति । आरब्धं प्रतिबन्धकमिति द्वितीयं दूषयति—सत्यमिति । विद्याप्रतिबन्धकमस्तीत्यङ्गीक्रियते, तच्च कर्मनिवर्त्यमिति नाङ्गीक्रियत इत्यभिप्रेत्य सत्यशब्दप्रयोगः । भोगान्तत्वे सूत्रं प्रमाणयति—

चाशक्यसमुच्छेदम्; भोगान्तत्वात्। तथा च सूत्रम्—"भोगेन त्वितरे क्षपयित्वा सम्पद्यते" इति। अत एवारब्धावसाने जन्मान्तरसञ्चितसाधनो गर्भ एव सन्वामदेवः प्रतिपेदे इत्युच्यते। तथा च मन्त्रलिङ्गम् "गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा" इत्यादि।

अपर आह—नित्यं तावदग्नि[1]होत्रादि कर्म स्वच्छन्दविच्छेदे प्रत्यवायहेतुरिति यावज्जीवमनुष्ठेयम्। विद्या चाप्रायण-

रत्नतूलिका

तथा चेति। इतरे त्वारब्धकार्ये पुण्यपापे भोगेन क्षपयित्वा ब्रह्म सम्पद्यत इति सूत्रार्थः। अत एवेति। यत आरब्धस्य भोगेनैव क्षपणमत इत्यर्थः। गर्भे नु गर्भ एव सन् अहं देवानां विश्वा विश्वानि सर्वाणि जनिमानि जन्मानि अन्ववेदामिति मन्त्रार्थः।

विद्याप्रतिबन्धकदुरितनिवृत्तिद्वारा कर्मणां विद्यास्वरूपे उपयोगः, तच्च प्रतिबन्धकमारब्धरूपम्, न च तस्य कर्मनिवर्त्यत्वायोगः; शास्त्रबलेन तस्यापि तन्निवर्त्यत्वोपगमादिति मतान्तरमनुवदति—अपर आहेति। स्वच्छन्दविच्छेद इति। जीवतस्तद्विच्छेदस्य शास्त्राननुमतत्वाद्विच्छेदो भवन् स्वच्छन्दविच्छेद एव भवतीति स प्रत्यवायहेतुरिति भावः। [2]एवमुपकारककर्मणां यावज्जीवमनुष्ठानमभिधाय उपकार्यविद्यायामपि तदाह—विद्या चेति।

---

[1] होत्रादिकं कर्म. [2] एवमुपकारकर्मणां—क. कुं.

मनुष्ठेया, अन्तिमप्रत्ययापेक्षणात् । सा च चन्द्रादित्यप्रकाशवत्तारतम्यवती बहुप्रतिबन्धा च । कर्म च विद्यासहकारित्वेनाम्नायते—

"विद्यां चाविद्यां च यस्तद्वेदोभयं सह" ॥ इति ॥

## रत्नतूलिका

**अन्तिमप्रत्ययापेक्षणादिति ।** "स यावत्क्रतुरस्माल्लोकात्प्रैति" इति प्रायणकालेऽपि प्रत्ययानुवृत्तिदर्शनात्—

"यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्" ।

इत्यादिस्मृतेश्चेति भावः । "तदोकोऽग्रज्वलनम्" इति सूत्रेऽन्तिमप्रत्ययस्याप्यपेक्षाप्रतिपादनादिति भावः । **चन्द्रादित्यप्रकाशवदिति ।** यथा चन्द्रप्रकाशस्यादित्यप्रकाशस्य चोदयप्रभृति प्रतिक्षणं वैशद्यातिशयेन पूर्वपूर्ववर्तिनामुत्तरोत्तरवर्तिनां च तरतमभावः, एवमहरहरभ्यासेन वैशद्यातिशये पूर्वोत्तरवर्तिनां ध्यानानां तारतम्यमित्यर्थः । इदं च यावज्जीवमनुष्ठेयानां कर्मणां तत्तदतिशययुक्ततया अहरहरुत्पद्यमानविद्यास्वरूप उपकारप्रदर्शनाय अभ्यासस्य दृष्टफलप्रदर्शनाय चोक्तमिति ध्येयम् । प्रतिबन्धकदुरितनिवृत्तेर्द्वारत्वायाह—**बहुप्रतिबन्धा चेति ।** अस्तु तारतम्यमस्तु वा प्रतिबन्धः, तथापि कथं कर्मणां विद्यास्वरूपोपकारित्वम्; मानाभावादित्यत आह—**कर्म चेति । विद्यां** तदनुबन्धि शमादिकम् । **अविद्यां** कर्म तदनुबन्धि करणेतिकर्तव्यताजातं च । अत्र चकारोऽनुक्तसमुच्चयार्थः । कथं तद्वेदनमित्यत आह—**सह** एकाधिकारानुप्रवेशेन । अङ्गाङ्गित्वेनेति यावदिति श्रुत्यर्थः । अस्तु सहकारित्वेन श्रवणम्; तथापि फलोपकारित्वेन तत्त्वे जन्मान्तरानुष्ठितैरपि तत्सिद्धेर्न समुच्चित्यानुष्ठानं स्यादित्यतः श्रुतं सहकारित्वं स्वरूपोप-

तस्य यद्यपि न फलोपकारित्वम् ; विदुषः सुकृतदुष्कृतविधूनेन विद्यासामर्थ्यादेव मोक्षोपगमात्, तथापि विद्यास्वरूपोपकारित्वमेव कल्प्यते । तच्च न विविदिषोपजननेनैव, येन विद्याकर्मणी [1]व्यवदधीयाताम् । न खल्वतिदेशोऽयं, येन क्लृप्तोप-

## रत्नतूलिका

कारित्वे पातयति—यद्यपीति । विधूननेनेति, "अश्व इव रोमाणि विधूय पापम्" इत्यादिश्रुतेरिति भावः । तथा च फलदशायामविद्यमानस्य कथं तदुपकारित्वमिति भावः । विद्यासामर्थ्यादेवेति । "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इतीतरासामर्थ्यप्रतिपादनपूर्वकं तत्सामर्थ्यवर्णनादिति भावः । कल्प्यत इति । अन्यथा श्रुतसहकारित्वानिर्वाहादिति भावः । ननु तत्कल्प्यमानं विविदिषाद्वारैव कल्प्यताम्, तथा चोक्तदोषानतिवृत्तिरित्यत आह—तच्च नेति । व्यवदधीयाताम् व्यवधानं प्राप्नुताम् । विविदिषोपयोगाभावस्योक्तत्वादिति भावः । ननु कर्मणां स्वर्गादिरूपे फले अदृष्टद्वारोपयोगः क्लृप्तः, न चात्र तथा संभवति ; विद्याया दृष्टहेतुसाध्यत्वात्, अतो विद्यारूपे फले अन्यदेव दुरितनिवृत्त्यादिकं द्वारं वाच्यम्, तच्चाक्लृप्तमिति कथं तद्द्वारा तेषामुपयोग इत्यत आह—न खल्विति । अतिदेशत्वे "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः" इत्यादावितिकर्तव्यतारूपप्रकाराकाङ्क्षायां यथाग्नेयेन स्वर्गो भावितस्तथा सौर्येण ब्रह्मवर्चसं भावयेदिति प्रथममखण्डोपकारस्यातिदेशः । अनन्तरं तेन वा कथं स्वर्ग इत्याकाङ्क्षायामग्न्यन्वाधानप्रभृतिभिः पदार्थैर्दृष्टादृष्टरूपो य उपकारः कृतस्तस्यातिदेशः । अनन्तरं पदार्थानामित्युप-

[1] व्यवधीयेयाताम्—मुद्रितपाठः.

कारमुखेन सहकारिताश्रीयेत। विधिस्त्वेषः। तदनुसारेणोपकारकल्पने च कारणान्तरप्रसूतेन स्वाकरणप्रयुक्तेन वा दुरितेनारब्धदुरितजन्येन व्याधिना निषिद्धरुच्यादिना वा मलिनचित्तस्य विद्यास्वरूपप्रतिष्ठयोरभावेन तत्तन्निवृत्त्या सर्वदैवाप्रायणानुष्ठेयविद्यास्वरूपोपकारित्वं कर्मणामुपपादयितुं न्याय्यम्। न चारब्धदुरितस्य भोगैकनाश्यतया विद्ययाप्यनिवर्त्यस्य न नित्यकर्मणा निवृत्तिरिति वाच्यम्; आरब्धभोगदुरितानिवर्तक-

## रत्नतूलिका

कारमुखेनैव तत्प्रवृत्तेः क्लृप्तस्यैवोपकारस्य ग्रहणम्। न चात्र अन्यत्रादृष्टद्वारोपकारकत्वेन क्लृप्तानां कर्मणां विद्यासहकारित्वेनातिदेश इति भावः। एष इति। "विद्यां चाविद्यां च" इत्यादिः। किं तर्ह्युपकार एव नापेक्षितः, तथा सत्यकिंचित्कुर्वतां सहकारितैव न स्यादित्यत आह—तदनुसारेणेति। कारणान्तरप्रसूतेन निषिद्धानुष्ठानप्रसूतेनेत्यर्थः। स्वाकरणेति। नित्यनैमित्तिकाननुष्ठानस्य प्रत्यवायहेतुत्वोक्तेरिति भावः। प्रतिष्ठयोरिति। प्रतिष्ठा नाम दार्ढ्यम्। मलिनचित्तस्य सामग्रीमहिम्ना कदाचिद्विद्योत्पत्तावपि सा दार्ढ्यं न प्रतिपद्यत इति भावः। सर्वदैवेति। यदा यदा कर्मानुष्ठीयते तदा तदा तत्तदतिशययुक्तविद्योत्पत्तिप्रतिबन्धकदुरितस्य निवर्त्यस्य संभवात्तन्निवृत्तिद्वारा विद्यास्वरूपोपकारित्वमिति भावः। एतदेवाभिप्रेत्य तत्तन्निवृत्त्येत्युक्तम्। तादृशातिशयद्योतनायाप्रायणानुष्ठेयत्वं विद्याविशेषणमिति बोध्यम्। उपपादयितुं न्याय्यमिति। न तु क्लृप्तोपकाराभावमात्रेण विधिप्रतिपन्नस्य सहकारित्वस्य त्याग इति भावः।

**श्रीरुद्रसहस्रनामजपादिवदमुष्य प्रबलत्वोपपत्तेः। अत एवारब्ध-दोषेण दुश्चरितरुचिर्भवतीति तदुपरमश्चोद्यते—**

**"नाविरतो दुश्चरितान्नाशान्तो नासमाहितः।**
**नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्" ॥**

**इति। नित्यकर्मणोऽपि प्रबलेनारब्धदुरितेनामतिपूर्वके प्रामादिके दुश्चरणे तद्विषयं "एवंविदि पापं कर्म न श्लिष्यते"**

रत्नतूलिका

**श्रीरुद्रसहस्रनामजपादिवदिति।** कर्मविपाकादिग्रन्थेषु तेषामारब्धकर्मफलव्याधिनिवर्तकत्वेन विधानादिति भावः। शास्त्रबलेन प्राबल्यकल्पनं च नित्यकर्मणोऽपि समानमित्याह—**अमुष्येति। अत एवेति।** यतो नित्यकर्मणामारब्धनिवर्तकत्वमत एवेत्यर्थः। **तदुपरमश्चोद्यत इति।** दुश्चरितादविरतः प्रज्ञानेनैनं परमात्मानं नाप्नुयादित्युक्तिर्दुश्चरितादुपरमचोदनार्था; प्रयोजनान्तराभावात्, तदुपरमश्च दुश्चरितरुचिहेतुप्रारब्धे सति पुरुषस्य दुस्सम्पाद इति तन्निवृत्त्युपायविधौ पर्यवस्यति, तदुपायश्च नित्यकर्मैव नान्य इत्युपरमचोदनान्यथानुपपत्त्या तस्यारब्धनिवर्तकत्वमिति भावः। ननु "एवंविदि पापं कर्म न श्लिष्यते" इति कर्मनिरपेक्षं विद्यया ब्रह्मविदि कर्मणामश्लेषः श्रूयते, "अपि चेत्पातकं किंचित्" इति स्मृतावितरकर्मव्यवच्छेदपूर्वकं योगस्यैव पापनिवर्तनाय कर्तव्यत्वं स्मर्यते, अतस्तन्निवर्तनाय न नित्यकर्मापेक्षेत्यत आह—**नित्यकर्मणोऽपीति।** बुद्धिपूर्वकेऽबुद्धिपूर्वके चानवधानतारूपप्रमादो हेतुरिति प्रामादिके प्रमादत इत्युभयत्रापि विशेषणम्। ततश्चारब्धं द्विविधं, नित्यकर्मनिवर्त्यं, तदनिवर्त्यं चेति। तत्र द्वितीयेन यदमतिपूर्वं दुश्चरणं तद्विषयमश्लेषवचनम्, मतिपूर्वक-

इति ; [1]बुद्धिपूर्वकतद्विषयं च—

"अपि चेत्पातकं किंचिद्योगी कुर्यात्प्रमादतः ।
योगमेव निषेवेत नान्यं यज्ञं समाचरेत्" ॥

इति । तस्माद्विद्यासहभावः कर्मणाम्, उपयोगादिति ।

### कर्मणां विद्योपकारित्वमङ्गीकृत्य दूषणम्

अत्रोच्यते—न तावद्यावज्जीवानुष्ठेयानि कर्माणि ; "जरया वास्मान्मुच्यते त्रिंशतं वा वर्षाणि जीर्णो वा विरमेत्" इत्यवधिविधानात् । "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्" इत्यादिसन्न्यासविधानाच्च । न चानधिकृतविषयं तत्; क्लीबोन्मत्तादीनां कर्मस्विव प्रव्रज्यायामनधिकारात् ।

### रत्नतूलिका

तद्विषयं योगनिषेवणवचनमिति विषयभेदान्न कस्यापि विरोध इति भावः। सहेतुकं कर्मसहभावमुपसंहरति—तस्मादिति ।

किं स्वाकरणप्रयुक्तदुरितनिवृत्तये यावज्जीवमनुष्ठेयानि कर्माणि, किंवान्यप्रयुक्ततान्निवृत्तय इति विकल्प्याद्यं दूषयति—न तावदिति । जरया वास्मान्नि[2]त्याग्निहोत्रादेर्मुच्यत, इत्यर्थः । ब्रह्मचर्यादेवेति । अत्र "ब्रह्मचर्यं समाप्य गृही भवेत्" इत्यादिपूर्ववाक्ये यद्ब्रह्मचर्यादेः समापनमुक्तं तन्निवृत्त्यर्थ एवकारः । अनधिकृतेति । कर्मानधिकृत-विषयं सन्न्यासविधानमित्यर्थः । अधिकृतस्य तु याज्जीवं नियमेन कर्माण्यनुष्ठेयान्येवेति भावः । अत्र "काणं कुष्ठ" मित्यनेन शास्त्र-पर्युदस्तत्वं, अनेकाङ्गस्येत्यनेनाङ्गानुष्ठानशक्तस्यैव साङ्गे कर्मण्यधिकार-

[1] अबुद्धि—ग. [2] नित्यादग्नि—घ.

"काणं कुष्ठं तथा कुब्जं खञ्जकं वामनं तथा ।
मूकं च बधिरं चैव सन्न्यासं नैव कारयेत्" ॥

इत्यादिनिषेधात्, सकलकर्मत्यागसंकल्पात्मकसन्न्यासस्याने-काङ्गस्याप्राप्तकर्मभिः क्लीबादिभिरनुष्ठातुमशक्यत्वाच्च । न च "स तानि प्राग्वा त्यज्येत्" इति प्रागुपनयनादप्राप्तकर्मणामपि विधीयमानस्य सन्न्यासस्य न कर्मप्राप्त्यपेक्षेति वाच्यम्; जायमानो वै ब्राह्मणस्त्रिभिरृणवा जायते" इति जन्मनैव कर्मसंबन्धश्रवणात् । यद्यप्यत्र यदृणशब्दं ब्रह्मचर्यादिकमेव, न तत्संबन्धः; जायमानस्यानुपलम्भात्, अथ तद्विधि-संबन्धः, सोऽपि न; जायमानस्य विधिप्रतिपत्त्यसामर्थ्यात्,

रत्नतूलिका

इति क्लीबादीनां तत्रासामर्थ्यं, अप्राप्तकर्मभिरित्यनेन प्रधानानुष्ठाने असामर्थ्यं च दर्शितम् । अनुपनीतस्य [1]कर्माप्राप्तिरसिद्धेत्याह—जायमान इति । जायमानो ब्राह्मणस्त्रैवर्णिकस्त्रिभिर्ब्रह्मचर्यादिभिः ऋष्यादिभ्यः सकाशादृणवान्भवतीति श्रुत्यर्थः । ऋणशब्दार्थपर्या-लोचनायां जायमाने तत्सम्बन्धस्य मानान्तरविरुद्धत्वान्न तद्बलेन कर्म-संबन्धः, किं त्वविवक्षितस्वार्थोऽयमवदानस्तुत्यर्थोऽर्थवाद इत्यभिप्रेत्या-क्षिपति—यद्यप्यत्रेति । ऋणमिति शब्दो यस्य वाचकतया तदृण-शब्दवाच्यं ब्रह्मचर्यादिकमित्यर्थः । विधेः पुरुषस्य च प्रतिपत्तृप्रति-पादकभाव एव संबन्धः; अन्यस्यानिरूपणादित्यभिप्रेत्य दूषयति—सोऽपि नेति । न हि स्तुत्यर्थत्वमात्रेण स्वार्थाविवक्षा; निरालम्ब-नस्तुत्ययोगात् । यत्राप्यत्यन्तविरुद्धार्थता वपोत्खननवाक्यादौ तत्रापि

[1] कर्मप्राप्ति—घ.

तथापि कर्मविध्यधिकारयोग्यतामात्रमविरोधात्प्रतीयमानं न निवार्यते, निरर्थकवाक्यप्रयोगायोगेनावदानस्तुत्यर्थतयापि कथंचिदर्थस्य कल्पनीयत्वात् । तस्मादधिकृतस्यैव कर्मसन्न्यासेन विदुषो न नित्याकरणे प्रत्यवायः । अन्यतः संभवतोऽपि दुरितस्य विद्ययैवाश्लेषविनाशोपगमात् । अपि च नित्यकर्मानिवर्तनीयबलवदारब्धदुरितनिमित्तरोगविगीतरुच्यादेरपि सबीजस्य जपयोगादिनिवर्त्यत्वे तेनैवावश्यकेन सर्वद्वारप्रतिबन्धनिवृत्त्या विद्या-

रत्नतूलिका

मानान्तराविरुद्धार्थं कथंचित्कल्पयित्वा स्तुतिनिर्वाहः । न चात्रात्यन्तविरोधोऽपीत्यभिप्रेत्य परिहरति—तथापीति । अङ्गवैकल्याद्यभावे सति त्रैवर्णिकत्वं योग्यतावच्छेदकमिति भावः । प्रतीयमानमविरोधान्न निवार्यत इत्यन्वयः । प्रथमविकल्पदूषणमुपसंहरति—तस्मादिति । द्वितीयं दूषयति—अन्यतः संभवतोऽपीति । "एवंविदि पापं कर्म न श्लिष्यते" इत्यश्लेषस्य, "एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति विनाशस्य चोपगमादित्यर्थः । नन्वश्लेषविनाशवचनं नित्यकर्मानिवर्तनीयारब्धनिमित्तामतिपूर्वदुश्चरितविषयमित्युक्तमित्यत आह—अपि चेति । आवश्यकेनेति । नित्यकर्मानुष्ठानेऽपि तदनिवर्त्येन बलवता आरब्धेन बुद्धिपूर्वकदुश्चरणादिप्राप्तौ तन्निवृत्तये श्रीरुद्रादिजपो वा योगो वावश्यानुष्ठेयः । तथा च कैमुतिकन्यायेन तेनैव सर्वनिवृत्तौ न कर्मानुष्ठानापेक्षेत्यर्थः । इदमुपलक्षणम्—उक्तन्यायेन विद्यया सर्वद्वारप्रतिबन्धाश्लेषेण वेत्यपि बोध्यम् । अत्र विद्यास्वरूपोत्पत्तिप्रतिबन्धकदुरितस्य जपयोगादिनिवर्त्यत्वेऽपि विद्यापरिपाकप्रतिबन्धनिवृत्तये कर्मानुष्ठानं स्यादिति मन्दाशङ्कानिरासाय विद्यापरिपाकोपपत्त्याविरत्युक्तम् । विशेषहेत्वभावेन सर्वस्यापि तन्निवर्त्यत्वमिति भावः ।

परिपाकोपपत्तौ कृतं कर्मभिः। पापाश्लेषवचनस्य "अपि चेत्पातकं किंचित्"

"उपपातकसङ्घेषु पातकेषु महत्स्वपि।
प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेत्॥"

इत्यादेश्च विषयभेदकल्पने मानाभावात्। तदभावे जन्मान्तरेऽपि प्रतिबन्धक्षयमपेक्ष्य विद्याविपाकोपपत्तेः।

कर्मणां विद्योपकारित्वमेवासिद्धमिति दूषणान्तरम्

अपि चाग्निहोत्रादिकर्मणामनुष्ठितानां विदुषो विद्योपकारित्वे तदीयताप्रयोजकसंबन्धशून्यत्वलक्षणाश्लेषो विरुद्ध्येत।

रत्नतूलिका

एतदभिप्रायेणैव सर्वद्वारप्रतिबन्धनिवृत्त्येत्युक्तमिति बोध्यम्। ननु पापाश्लेषवचनस्य प्रबलप्रारब्धनिमित्तामतिपूर्वकदुश्चरणमात्रविषयत्वम्, "अपि चेत्पातकं किंचित्" इत्यस्य तत्समानन्यायेन "उपपातकसङ्घेषु" इत्यस्य च तन्निमित्तकमतिपूर्वकदुश्चरणमात्रविषयत्वं न तु नित्यकर्मनिवर्तनीयदुरितविषयत्वमिति व्यवस्थोक्तेत्यत आह—पापाश्लेषवचनस्येति। विषयभेदेति। नित्यकर्मानिवर्तनीयविषयत्वकल्पन इत्यर्थः। मानाभावादिति। ततश्च सर्वस्यापि दुरितस्याश्लेषे योगनिवर्त्यत्वे वा सिद्धे तन्निवृत्तये न कर्मापेक्षेति भावः। अस्तु वा व्यवस्था, तथापि पूर्वजन्मान्तरानुष्ठितकर्मसाध्यं तदानीन्तनदुरितक्षयमपेक्ष्यास्मिन्जन्मनि विद्याविपाकोपपत्तेः किमिदानीं समुच्चित्य कर्मानुष्ठानेनेति दोषान्तरमाह—तदभाव इति। तदभावेऽपीत्यन्वयः।

इयता प्रबन्धेन कर्मणां विद्योपकारित्वमङ्गीकृत्य तदन्यथासिद्ध्या न कर्मानुष्ठानमिति दूषितम्। इदानीं तदेवासिद्धमिति दूषयति—अपि चाग्निहोत्रादीति। विरुद्ध्येतेति। तदीयानां कर्मणां तदीय-

तदश्लेषश्च सूत्रितः—"इतरस्याप्येवमसंश्लेषः" इति । श्रूयते च "उभे उ हैवैष एते तरति" इत्यादि ।

न चारब्धप्रतिबद्धफलविषयं तदश्लेषसूत्रं यादृच्छिकसुकृतविषयं वेति नियन्तुं शक्यम्; विशेषहेत्वभावात् ।

रत्नतूलिका

विद्याप्रयोजकता वाच्या । अन्यथा अन्यानुष्ठितैरपि तत्सिद्धावतिप्रसङ्गात् । ततश्चाश्लेषस्तदीयविद्योपकारित्वं चान्योन्यव्याहतमित्यर्थः । एवं पापस्येव [1]पुण्यस्याप्यसंश्लेष इति सूत्रार्थः । उभे पुण्यपापे एष विद्वान् तरतीति श्रुत्यर्थः ।

अश्लेषसूत्रस्य न विद्यासहकारिकर्मविषयत्वम्; "अग्निहोत्रादि तु" इत्युत्तरसूत्रे विद्यासहकारिणामश्लेषनिषेधात्, किंत्वन्यविषयत्वमित्याशङ्क्य निषेधति—न चेति । आरब्धं प्रतिबद्धं च फलं यस्य कर्मणस्तद्विषयत्वमित्यर्थः । विशेषहेत्वभावादिति । "इतरस्यापि" इत्यविशेषेण सुकृतमात्रोपादानादित्यर्थः । न च "अग्निहोत्रादि तु तत्कार्यायैव" इति सूत्रे तेषां तुशब्देनेतरसुकृतवैषम्यद्योतनपूर्वकं विद्यारूपकार्यार्थत्वाभिधानान्नाश्लेष इति वाच्यम्; तेषां विद्योत्पत्तिकालावस्थाने इतरसुकृतानामिवाश्लेषोऽवश्यं वाच्यः, अकर्त्रात्मबोधलक्षणस्याश्लेषहेतोस्तुल्यत्वात् । सूत्रं तु विविदिषाप्रतिबन्धकदुरितनिवृत्त्या विविदिषाद्वारा विद्यार्थानामग्निहोत्रादीनां फलनाश्यतया विद्योत्पत्त्युत्तरकाले अभावान्न तेषां विद्यया अश्लेष इत्येवंपरमिति भावः । इममेवार्थं मूलकारः स्वयं वक्ष्यति—"उत्पन्नया हि विद्यया नश्यन्ति कर्माणि न श्लिष्यन्ते वा, अग्निहोत्रादीनां च ज्ञान-

[1] इतरस्याप्यसं.

**तात्कालिकान्नारोग्यादिफलस्य च कर्मणो भिक्षाटनादिदृष्ट-प्रवृत्तितुल्यतया नाश्लेषन्यायविषयत्वम् । न च "विद्यां च" इत्यादिसहकारित्ववचनं विशेषहेतुः ; विविदिषाविरोधिदुरित-निवृत्त्यापि विद्योपकारितयान्यथासिद्धेः । न च कालविशेष-**

रत्नतूलिका

फलापवर्गित्वादविरोध इत्यभिप्रायः" इति । काम्यविषयमित्यत्र दूषणान्तरमाह—**तात्कालिकान्नेति** । तस्याप्यश्लेषे देहधारणमेव न स्यादिति भावः । विशेषहेत्वभावादिति हेतुरसिद्ध इत्याशङ्क्य निषेधति—**न च विद्यां चेतीति** । तथा च येषां विद्यासहकारित्वं श्रुतं तदतिरिक्तसुकृतविषयमश्लेषसूत्रमिति भावः । अन्यथासिद्धेन सहकारित्वश्रवणेन सूत्रस्य संकोचो न युक्त इत्याभिप्रेत्य दूषयति—**विविदिषाविरोधीति** । तथा च व्यवहितानामपि कर्मणां विद्यासह-कारित्वसंभवेन विद्यासमकालत्वाभावान्न तथा अश्लेष इति वक्तुं शक्यत्वान्न तद्वशेन सूत्रस्थस्येतरपदस्य संकोच इति भावः । ननु कर्मणां विविदिषाविरोधिदुरितनिवर्तनेन विद्यासहकारित्वे विविदिषोत्पत्तेः पूर्वकाल एवानुष्ठितानां तेषां तत्त्वं वाच्यम् , ततश्चानुष्ठानाय प्राप्तस्य कालसामान्यस्य विविदिषोत्पत्तिपूर्वकाले विशेषे संकोचकल्पनं स्यात् , तच्चायुक्तमित्याशङ्क्य निषेधति—**न च कालविशेषेति** । सत्यं संकोच इति, तथापि विद्यां चेत्यादिश्रुतसहकारित्वबलान्न कालसामान्यस्य प्राप्तिः, यस्येदानीं संकोचकल्पनं स्यात् , किं तु "तमेतं वेदानुवचनेन" इत्यादिविविदिषा[1]विनियोगबलात्तदुत्पत्तिपूर्वकाल एवानुष्ठानमिति निर्णये तदेकार्थाद्विद्यां चेत्यादिसहकारित्ववचनात्प्राप्यमाणः कालः संकुचित

[1] विनियोगसत्त्वात्तदु—कुं.

संकोचकल्पनमयुक्तमिति शङ्क्यम्; वेदानुवचनशास्त्रैकार्थ्योपपत्तौ सम्प्रति तत्संकोचाकल्पनात्। तस्माज्ज्ञानार्थप्रवृत्तिप्रतिबन्धकदुरितानिवृत्त्या कर्मणां तदुपयोगे वक्तव्ये तत्प्रवृत्तेरपि तदितरदोषसंशीलनप्रगुणितप्रवृत्तिविषयगुणभूमपरिभावनाप्रकर्षमूलाभिरुचौ सत्यां स्वत एव भावात्तदभिरुचिविरोधिविषयकषायास्वादकारिप्रबलदुरितारोचकचिकित्सायां कर्माणि विनियुज्यन्ते—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इति।

रत्नतूलिका

एव प्राप्नोतीति नोक्तदोष इति परिहरति—वेदानुवचनेति। एवं परमतनिरसनमुपसंहरन् स्वाभिमतं विद्याकर्मणोर्व्यवधानं दर्शयति—तस्मादिति। प्रवृत्तिप्रतिबन्धकदुरितनिवृत्त्या न तु ज्ञानोत्पत्तिप्रतिबन्धकनिवृत्त्या। तथा च न ज्ञानोत्पत्त्यर्थतया समुच्चित्यानुष्ठानमिति भावः। ततोऽपि व्यवधानं दर्शयति—प्रवृत्तेरपीति। तस्मात्प्रवृत्त्युद्देश्याज्ज्ञानादितरस्मिन् दोषसंशीलनेन पुनः पुनर्दोषदर्शनेन प्रगुणितस्य द्विगुणीकृतस्य प्रवृत्तिविषयज्ञानगुणबहुत्वस्य परिभावनाप्रकर्षः संशीलनोत्कर्षस्तन्मूलकाभिरुचौ सत्यामित्यर्थः। स्वत एवेति। न तु तस्यां प्रतिबन्धकदुरितनिवृत्तिरपेक्ष्यत इत्येवकारार्थः। सत्यामभिरुचौ तद्विलम्बेन प्रवृत्तिविलम्बादर्शनादिति भावः। तर्हि कुत्रोपयोग इत्यत आह—तदभिरुचीति। विरोधी यो विषयकषायास्वादः विषयरसविशेषास्वादः, दुरितमेवारोचकं व्याधिविशेषस्तच्चिकित्सायामित्यर्थः।

### विविदिषायां कर्मविनियोगोपपत्तिः

न च वेदनेच्छासदसद्भावयोर्विविदिषोद्देशेन कर्मविधानानुपपत्तिः; वेदनोद्देशेनापि तदनुपपत्तिप्रसङ्गात्। ब्रह्मवेदने सति सिद्धस्यानुद्देश्यत्वात्, असति च तज्ज्ञानाभावेन तदुद्देशायोगात्। यद्युच्येत—श्रुते मते ब्रह्मणि तदुपासनोद्देशेन कर्मविधानमिति, तर्हि निरतिशयसुखाप्तिहेतुतयापाताधिगतब्रह्मवेदने जाताभिलाषस्यैव दुरितवशेन विषयरागाद्यरोचकोपहतस्य

### रत्नतूलिका

न च वेदनेति। विविदिषोद्देशेन कर्मानुष्ठानात्पूर्वं वेदनेच्छास्ति न वा। आद्ये सैव विविदिषेति तस्याः सिद्धत्वात् तदुद्देशेन कर्मानुष्ठानविधिवैयर्थ्यम्, द्वितीये परमसाध्ये वेदने इच्छाया अभावे अवान्तरसाध्यभूतायां विविदिषायामपीच्छा न संभवतीति न तदुद्देशेन कर्मानुष्ठानसंभवः। यथा यागसाध्यापूर्वेच्छाया अभावे यागेऽपि सा नेति तदुद्देशेन तदुपायभूतद्रव्यार्जनानुष्ठानाभावस्तद्वदिति भावः। वस्तुपरिहारं वक्तुं प्रतिबन्दीमालम्बते—वेदनोद्देशनापीति। विविदिषायामुक्तं दोषं वेदनेऽप्युपपादयति—ब्रह्मवेदने सतीति। सिद्धस्य उत्पन्नस्येत्यर्थः। तज्ज्ञानाभावेन ब्रह्मवेदनविषयकज्ञानाभावेनेत्यर्थः। विषयज्ञानाभावे निर्विषयज्ञानस्योपस्थित्यनुपपत्तिरिति भावः। वस्तुपरिहारमाशङ्कते—यद्युच्येतेति। श्रुते मते ब्रह्मणीत्यनेन विषयज्ञानमुपपादितम्। आपातेति। आपाताधिगतं यद्ब्रह्म तद्वेदन इत्यर्थः। अभिलाषजनने हेतुः—निरतिशयसुखाप्तिहेतुतयेति। विषयरागेति। तथा च विषयरागमूलभूतस्य विविदिषाप्रतिबन्धकदुरितस्य निवृत्तिः कर्मणां द्वारमिति भावः। ननु जाता विविदिषा कथं कर्मभिरुद्देश्या स्यात्, कथं वा तत्र दुरितस्य प्रतिबन्धकतेत्यत आह—

प्रवृत्तिपर्यन्ताभिरुचीच्छया कर्मभैषज्यसेवोपपत्तिरिति तुल्यम्। यथाहुः—

" प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥ " इति ॥

देवानां कर्मस्वनधिकारः

एवं सति देवादीनामपि "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणाम्" इत्यादिलिङ्गावगतो ब्रह्मविद्याधिकार उपपद्यते। तथा च सूत्रम्—"तदुपर्यपि बादरायणः संभवात्"

रत्नतूलिका

प्रवृत्तिपर्यन्तेति। इच्छा तावद्द्विरूपा लौल्यमात्रावसाना यथा अरोचकिनः क्षीरादौ प्रवृत्तिफलावसाना, अभिरुचिरूपा च यथा चिकित्सितारोचकस्य तत्रैव, तत्राद्या विषयसौन्दर्यज्ञानाधीनैव, द्वितीया तु भेषजादिसेवामपेक्षते। एवमिहापि ज्ञानस्य मुक्तिहेतुतावगमादेव जाता लौल्यमात्रावसाना वेदनेच्छा कर्मानुष्ठानाहेतुः अभिरुचिरूपा तदुपायश्रवणादिप्रवृत्तिरूपफलावसाना कर्मभिरुद्देश्या। तस्यां दुरितं प्रतिबन्धकमिति न किंचिदश्लिष्टमिति भावः। विविदिषायामेव कर्मणामुपयोगो न तु वेदन इत्यर्थे संमतिमाह—यथाहुरिति। शुद्धितः चित्तशुद्धिद्वारा बुद्धेः प्रत्यक्प्रवणतां प्रत्यगात्मौन्मुख्यं तद्वेदनेच्छामिति यावत्। अनेन विविदिषायामुपयोग उक्तः। कृतार्थान्यस्तमायान्तीत्यनेन विद्यापर्यन्तधावनं नास्तीत्युपपादितं भवतीति।

कर्मणां विविदिषोपयोगे सत्यपरमप्यनुकूलमित्याह—एवं सतीति। तत् ब्रह्म देवानां मध्ये यः प्रत्यबुध्यत स एव तद्ब्रह्माभवत्, ऋषीणां मनुष्याणां मध्येऽपि तथेति श्रुत्यर्थः। उक्तेऽर्थे सूत्रमपि संवादयति—तथा चेति। सूत्रं च तथेत्यन्वयः। तेषां

इति । कर्मसमुच्चये च विद्यया देवादयो नाधिक्रियेरन्; अत्रैवर्णिकतया देवादीनामनग्नित्वात् । "वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्याद्यधिकारनियमात् । अत्र्यार्षेयत्वाच्च कर्मस्वनधिकारात् ।

रत्नतूलिका

मनुष्याणामुपरिष्टाद्ये देवास्तानप्यधिकरोति शास्त्रमिति बादरायण आचार्यो मन्यते, कस्मात् संभवात्, संभवति हि तेषामप्यर्थित्वसामर्थ्याद्यधिकारकारणमिति सूत्रार्थः । अनग्नित्वादिति । तथा च साधनभूताग्नीनामभावे तत्साध्य[1]कर्मण्यधिकाराभावः । ततश्च तत्समुच्चितविद्यायामनधिकार इति भावः । अत्रैवर्णिकत्वे कथमग्न्यभाव इत्यत आह—वसन्त इति । "वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्यः" इत्यादीनि वाक्यानि "य एवं विद्वानग्निमाधत्ते" इति सर्ववर्णसाधारण्येन विहिते आधाने प्राप्तान् ब्राह्मणादीन्निमित्तीकृत्य ब्राह्मणकर्तृक आधाने वसन्त इत्यादिरूपेण कालमात्रविधिपराणीति पूर्वपक्षं कृत्वा, सामान्यवचनस्य वर्तमानापदेशत्वान्नाधानप्रापकत्वम्, ततश्च ब्राह्मणादीनां तत्राप्राप्तत्वान्न तन्निमित्तकालविधानम्; किं तु कर्तृकालविशिष्टाधानविधानमिति द्वितीये "आधानेऽसर्वशेषत्वात्" इत्यत्र सिद्धान्तितम् । तथा चोत्पत्तावाधानस्य त्रैवर्णिकमात्राधिकारिकत्वादर्थादितरेषामधिकारनिवृत्तिः सिद्धेति देवानामाधानाभावादनग्नित्वमिति भावः । कर्मस्वनधिकारादिति । त्रित्वविशिष्टार्षेयवरणोपसंहारसमर्थस्यैव कर्मस्वधिकारो नान्यस्येति षष्ठे "अत्र्यार्षेयस्य हानं स्यात्" इत्यधिकरणे व्यवस्थापनादिति भावः । इत्थं तदधिकरणम्—दर्श-

[1] कर्मण्यनधिकारः–कुं.

## देवानां कर्माधिकारशङ्कानुवादः

**यत्तु मनुष्यकर्तृकाधान एव त्रैवर्णिकत्र्यार्षेयाधिकारिनियमः; "देवा वै सत्रमासत", "विश्वसृजः प्रथमाः सत्र-**

### रत्नतूलिका

पूर्णमासयोः "आर्षेयं वृणीते" इति विधाय पुनः श्रुतम्—"एकं वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते न पञ्चातिवृणीते" इति। तत्र किं दर्शपूर्णमासयोरेकार्षेयद्व्यार्षेययोरप्यधिकारः, उत त्र्यार्षेयस्यैवेति संशये "आर्षेयं वृणीते" इति निर्गुणं वरणं विधाय, एकं द्वौ त्रीनित्यविशेषेण विशेषणात् "न पञ्चातिवृणीते" इत्युक्त्या पञ्चेतिविशेषणस्याप्यनुमतत्वादेकं द्वौ त्रीन् पञ्च वा वृणानोऽधिक्रियत इति पूर्वपक्षे, निर्गुणं वरणं विधाय तत्र एकं द्वौ त्रीनिति विशेषणत्रयविधाने वाक्यत्रयं, "न चतुरो वृणीते न पञ्चातिवृणीते" इति निषेधद्वयबोधकं वाक्यद्वयमिति पञ्च वाक्यानि स्युः। अतस्त्रीनित्येव विधानम्, द्वित्वैकत्वयोस्तदन्तर्गतत्वात्तयोः श्रवणं नित्यानुवादः। चतुरादिप्रतिषेधश्चानुवाद एव; तेषामप्राप्तेः। अतस्त्र्यार्षेयस्यैवाधिकार इति॥

कर्मणि देवानामप्यधिकारोऽस्तीति परोक्तं दूषयितुमनुवदति—यत्त्विति। किमग्न्यभावादनधिकारः, उत यष्टव्यदेवतान्तराभावादिति विकल्प्य नाद्य इत्याह—**मनुष्यकर्तृकाधान** इति। "ब्राह्मणोऽग्नीनादधीत" इत्यादिवाक्यैर्ब्राह्मणादिविशिष्टाधाने विहितेऽर्थाद्भवन् ब्राह्मणाद्यधिकारिनियमो यस्मिन् जातिविशेषे ब्राह्मणादिः संभाव्यते तत्कर्तृकाधान एवेति पर्यवस्यति। न तु देवादिकर्तृकेऽपि। तथा त्र्यार्षेयानियमोऽपीति भावः। कुत एवं निर्णीयत इत्यत आह—**देवा वै सत्रमिति**। यदि त्रैवर्णिककर्तृकाधानस्यैव विहितत्वादित-

मासत" इत्यादिलिङ्गात्, इन्द्रादीनां वृत्रवधादिपापप्रायश्चित्ततया क्रत्वनुष्ठानस्मरणाच्च ॥

देवानां त्रैवर्णिकान्तर्भावाय ब्राह्मणत्वादिविवेचनम्

यद्वा न ब्राह्मणादेर्ब्राह्मण्यादावुत्पत्तिमात्रं ब्राह्मण्यादि, तदभिव्यङ्ग्यजातिविशेषो वा; आदौ ब्रह्मणो मुखबाहूरुपज्जानां पश्चादृश्यशृङ्गविश्वामित्रादीनां च तदभावप्रसङ्गात्। किं त्वदृष्टविशेषः, स च देवादीनामपि संभवति। तथा च लिङ्गं वाजपेयं प्रकृत्य—"तं बृहस्पतिरुदजयत्, तेनायजत, तेनेन्द्रमयाजयत्" इति। वाजपेयश्च ब्रह्मक्षत्राधिकारिको गम्यते—"स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः" इति। श्रूयते च "ब्रह्म बृहस्पतिः क्षत्रमिन्द्रः" इति "मरुतो वै

रत्नतूलिका

रेषामाधाननिवृत्तिस्तदा देवानामग्निमत्त्वाभावेन सत्रे अधिकाराभावाच्चलिङ्गं विरुध्येतेति भावः ॥

एवं देवानां नास्ति त्रैवर्णिकेष्वन्तर्भावः, अथाप्याधाने अधिकारोऽस्तीति न कश्चिद्विरोध इत्युक्तम्। इदानीं तेषामपि तत्रान्तर्भावं वक्तुं ब्राह्मणत्वादिस्वरूपं विवेचयति—यद्वेति। तदभावप्रसङ्गादिति। "ब्राह्मणोऽस्य मुखमासीत्", "स मुखतस्त्रिवृतं निरमिमीत" इत्यारभ्य "ब्राह्मणो मनुष्याणाम्" इत्यादिश्रुत्या सृष्टिकाले ब्रह्मणो मुखाद्ब्राह्मणाः, बाहुभ्यां क्षत्रियाः, ऊरुभ्यां वैश्याः, पद्भ्यां शूद्राश्च जाताः। न च तेषु ब्राह्मणादेर्ब्राह्मण्यादावुत्पत्तिस्तदभिव्यङ्ग्यजातिविशेषो वास्तीति भावः। पश्चादिति। सृष्टेरिति शेषः। जातेरनागन्तुकत्वादिति भावः। अस्तु बृहस्पतेरिन्द्रस्य च वाजपेयेऽधिकारः। तयोर्ब्राह्मण्यादौ किमायातमित्यत आह— वाजपेयश्चेति। श्रूयते चेति।

देवानां विशः" इति च। अतोऽग्निसंबन्धो युक्तः। न च यष्टव्यदेवतान्तराभावाद्यजनानुपपत्तिः; अग्नीन्द्रादिशब्दप्रवृत्तिनिमित्तज्ञानशक्त्यैश्वर्यादिविशेषाणां निरुपाधिकाश्रयतया तत्तच्छब्दवाच्यस्य परमात्मनोऽव्यवधानेन देवताभिराराध्यत्वादित्यादि—

## देवानां कर्मानधिकारसमर्थनम्

तन्न; अग्न्याधानसामान्यस्य ब्राह्मणाद्यधिकारनिबद्धस्य मनुष्यकर्तृकाधान इति विना हेतुं विशेषणायोगात्। अन्यथा असङ्करजन्ममनुष्याधान इति विशेष्य निषादस्थपतेरिष्टि-

## रत्नतूलिका

आहत्य ब्राह्मणत्वादिरिति शेषः। द्वितीयं दूषयति—न च यष्टव्येति। अग्नीन्द्रादीति। अगि गताविति धातोर्जानातीत्यग्निः, इदि परमैश्वर्य इति धातोरिन्द्रशब्दश्च। तावुभौ ज्ञानैश्वर्यप्रवृत्तिनिमित्तकौ। तच्च ज्ञानमैश्वर्यं च परमात्मनो निरुपाधिकम्, तदधीनं त्विन्द्रादेः। अतोऽग्न्यादेरपीन्द्रादिशब्दवाच्यो यष्टव्यः परमात्मास्तीति भावः।

"यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम्॥"

इत्यादिस्मरणात्। अतः तदुपासनालब्धज्ञानादिमन्तः सोपाधिकज्ञानाद्याश्रयास्ते गौणार्थाः। तेन मुख्याग्न्यादियष्टृत्वं तेषामेव। किं चाग्न्यादीनामव्यवधानेन परमात्माराधकत्वम्, इतरेषां त्वग्न्यादिद्वारेति न तेषां यष्टव्याभाव इत्यर्थः॥

ननु तेषामुच्चैरिज्याधिकारदर्शनमेव सङ्कोचहेतुरित्याशङ्क्यातिप्रसङ्गमाह—अन्यथेति। यत्रासङ्करजन्ममनुष्येषु त्रैवर्णिकः संभाव्यते तत्कर्तृके बुद्धिपर्यवसानमित्यस्यापि समानत्वादिति भावः। इष्टा-

विधानादाधानमनवकल्पेत। तथा च "स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्" इत्याष्टमिकाधिकरणविरोधः। लिङ्गमात्रं तु "गावो वा एतत्सत्रमासत" इत्यादिसाधारणमिति गवामप्यधिकारः स्यात्। यथासंभवं च सामर्थ्यस्य कल्पनीयत्वात्। न च वृत्रवधादिनिमित्तं पापमिन्द्रादेः; "न ह वै देवान्पापं गच्छति" इत्यादिश्रुतेः। "त्रिशीर्षाणं त्वाष्ट्रमहनम्" इति प्रकृत्य "तस्य मे तत्र न लोम च मीयते" इति लिङ्गाच्च। यत्पुनरदृष्टविशेष एव ब्राह्मण्यादिदेवानाम-

रत्नतूलिका

पत्तिरित्यत आह—तथा चेति। आष्टमिकेति। षष्ठाध्यायाष्टमपादस्थाधिकरणविरोध इत्यर्थः। इत्थं तदधिकरणं—"स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्याच्चापवृज्येत"। "एतया निषादस्थपतिं याजयेत्" इति स्थपतीष्टिः किमाहितेष्वग्निषु स्यात्, उत लौकिक इति संशये, प्रकृतेराहवनीयादिप्राप्तेराहवनीयस्य चाधानाधीनत्वादसत्यपि स्थपतेराधानविधावियमेवेष्टिः प्रयाजादिकमिवाधानं प्रयोजयेदिति प्राप्ते—वसन्तादिवाक्यैर्ब्राह्मणादिकर्तृकाधानविधिबलात् तत्कर्तृकाधानजन्यसंस्कारस्यैवाहवनीयशब्दार्थत्वनिश्चयान्न तादर्थ्येन निषादस्थपतेराधानानुष्ठानम्; तेन तत्संस्कारानुत्पादात्। अतो लौकिकेऽग्नाविष्टिरिति सिद्धान्त इति। यथासंभवमिति। मन्त्रोच्चारणाद्यभावेऽपि विष्णवतिक्रमणाज्यावेक्षणादेः संभवात्तन्मात्रोपसंहारेणाप्यनुष्ठानसिद्धिरिति भावः। यदि चान्यविधिस्तुल्यार्थतया प्रतीयमाने न तात्पर्यं, तदा प्रकृतेऽपि तुल्यमिति भावः। लिङ्गान्तरं निरस्यति—न च वृत्रवधादीति। तत्र वृत्रवधे सति मे लोमापि न मीयते—न

पीति, तन्न; तस्य जीवसमवायित्वात् । देहेषु च तज्जन्यतावच्छेदकानुगतरूपाभावात् । भावे वा सैव ब्राह्मण्यादिजातिरस्तु । सा च न देवादिषु । मनुष्यत्वादिसाङ्कर्यमधिजग्मुषो ब्राह्मणत्वाद्यवधारणेऽपि देवादिसंशयप्रसङ्गात् । किं तु मनुष्यत्वव्याप्यजातिरेव ॥

यद्यप्यग्नीन्द्रादेर्ब्रह्मक्षत्रादिविभाग आम्नायते, तथापि न ताज्जात्यविवक्षैव; "आग्नेयो वै ब्राह्मणः", "ऐन्द्रो राजन्यः", "मारुतो वैश्यः" इत्यादिसंबन्धभेदनियमनेनान्यार्थत्वात् ।

रत्नतूलिका

हिंस्यते, तज्जन्यपापसंश्लेषो मे नास्तीति श्रुत्यर्थः । जीवसमवायित्वादिति । तथा च तत्समवायिधर्माधर्मयोरिव तस्यातीन्द्रियत्वादाधिकाराप्रतिपत्त्या "ब्राह्मणो यजेत" इत्यादिविधिप्रतिपत्तिर्न स्यादिति भावः । ननु तत्कार्येण देहेन तदनुमीयत इत्यत आह—देहेषु चेति । ब्रह्मणो मुखजातेषु विशिष्टयोनि[1]जन्येषु तपआदिना सम्पादितेषु च देहभेदेषु अनुगतस्यादृष्टविशेषजन्यतावच्छेदकस्यानुपलम्भपराहतत्वादिति भावः । जातिरस्त्विति । तथा चादृष्टविशेषानुमितये सा जातिरवश्यं ज्ञेयेति तयैवाधिकारपरिच्छेदसिद्धेः किमदृष्टविशेषानुमानरूपबकबन्धयत्नेनेति भावः । नन्वस्तु जातिर्ब्राह्मणत्वादीति सा देवादिष्वपि स्यादित्यत आह—सा चेति । मनुष्यत्वादीति । मनुष्यत्वदेवत्वाभ्यां ब्राह्मणत्वादीनां सङ्करं-एकत्र समावेशमधिजग्मुषः—ज्ञातवत इत्यर्थः । तदज्ञाने तु संशयाभाव इष्ट इति परो ब्रूयादिति तद्विशेषणम् ॥

मनुष्यत्वव्याप्यत्वमाक्षिप्य समाधत्ते—यद्यपीत्यादिना । अग्नीन्द्रादेरिति । ब्रह्माग्निः क्षत्रमिन्द्र इत्यादावित्यर्थः । अन्यार्थत्वादिति । ब्राह्मणाद्यनुग्राहकतया गौणार्थत्वादित्यर्थः । तदनुग्राहक

[1] जातेषु—कुं.

अन्यथात्रैव ब्राह्मणराजन्यादिशब्दस्य मानुषे संकोचकल्पनापत्तेः। अत एव "अग्निरेव देवेषु ब्रह्माभवत्, ब्राह्मणो मनुष्येषु, अग्नावेव देवेषु लोकमिच्छन्ते, ब्राह्मणो मनुष्येषु" इत्यत्र ब्राह्मणत्वेन विवक्षितेऽग्नौ ब्राह्मणशब्दो न प्रयुज्यते। चातुर्वर्ण्यसृष्टौ च "अग्निमसृजत" इत्येव ब्रूते, नतु ब्राह्मणमिति। तदेतद्देवानां ब्राह्मण्याद्यभावे लिङ्गम् ॥

तस्माद्ब्रह्मबृहस्पतिरित्यादिप्रयोगो गौणः। पालनेन राजन्यानुग्राहकतया च क्षत्रस्येन्द्रस्य पौरोहित्या[1]ब्राह्मणानुग्राहक-

रत्नतूलिका

गौणस्तच्छब्दप्रयोगो लोके बहुशो दृष्ट इति भावः। ननु ब्राह्मणेनाग्नि राजन्येनेन्द्रस्य विशा मरुतां च सम्बन्धविशेषनियमनेऽपि न तज्जातित्वविरोधः, ब्राह्मणस्य ब्राह्मणान्तरसम्बन्धसंभवादित्यत आह— अन्यथेति। अत्रैव "आग्नेयो वै ब्राह्मणः" इत्यादिवाक्येष्वेवेत्यर्थः। तत्राग्न्यादेरपि ब्राह्मणादित्वे तत्समभिव्याहृतस्य ब्राह्मणादिपदस्य तदतिरिक्तमनुष्यब्राह्मणादिपरत्वलक्षणसंकोचकल्पना स्यादित्यर्थः। अत एवेति। यतो गौणार्थतया न ताज्जात्यविवक्षा अत एवेत्यर्थः। यद्यग्निरपि ब्राह्मणत्वेन वक्तुमिष्टस्तदा देवेषु मनुष्येषु ब्राह्मणो ब्रह्माभवत् ब्राह्मणेषु लोकमिच्छन्त इत्येव वदेत्। अतो[2] न तस्य ब्राह्मणत्वमिति भावः ॥

अन्यार्थत्वं [3]दर्शयन्नुपसंहरति—तस्मादिति। पालनेनेत्यादिना इन्द्रे क्षत्रशब्दस्य गौणत्वमुपपादितं, पौरोहित्यादित्यादिना बृहस्पतौ ब्राह्मणशब्दस्येति [4]विशेषः। नन्वनुगतव्यञ्जकाभावान्न

---

[1] ब्राह्मण्या—ग. [2] न तेषु ब्राह्मण—कुं. [3] वदन्नुपसंहरति—च. [4] विवेकः—च.

त्वाच्च । [1]ब्राह्मणत्वादिव्यञ्जकं तु नैकरूपमिति मुखजाना-मन्यजानां वा तदाविरुद्धम् । एवं च भृगुवचसा वीतहव्यस्य तपसा विश्वामित्रस्य च ब्राह्मण्यजात्यवच्छेद्यरूपपरिणामो वेदो-ज्झमन्यपरिश्रमेण द्विजस्य शूद्रत्वाद्यवच्छेद्यरूपपरिणामश्च कल्प-नीयो नन्दिनहुषादीनामिव जात्यन्तरपरिणामः ; न तु दुरधिगमा-दृष्टविशेष एव ब्राह्मण्यादिः । "ब्राह्मणो यजेत" इत्यादि-

## रत्नतूलिका

ब्राह्मणत्वादिज्ञानसंभव इत्यत आह—ब्राह्मणत्वा(भि)दिव्यञ्जकं त्विति । अनुगतव्यवहारेण सिद्धाया जातेर्नानाव्यञ्जकव्यङ्ग्यत्वेऽपि न दोष इति भावः । ननु सत्याश्रये आगन्तुकस्य कथं जातित्व-मित्यत आह—एवं चेति । वेदोज्झं-वेदमुज्झित्वा—

"योऽनधीत्य द्विजो वेदमन्यत्र कुरुते मतिम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥"

इति स्मृतौ शूद्रत्वप्राप्तिस्तदवच्छेद्यदेहपरिणामादिति कल्पनीयमिति भावः । उक्तदार्ढ्याय निदर्शनमाह—नन्दीति । नन्दिनो देवदेह-परिणामः, नहुषस्य सर्पदेहपरिणामश्च पुराणेषु प्रसिद्धः । अत एव योगैरप्युक्तम् —" जात्यन्तरपरिणामः प्रकृत्यापूरात् " इति, इति भावः । नन्वेतादृशकल्पनाद्वारमदृष्टविशेषो ब्राह्मण्यादिः, स च सत्येव देहे तप आदिनोत्पद्यत इति कल्पनमित्यत आह—न त्विति । अदृष्ट-विशेषस्य कार्यैकोन्नेयत्वात्कार्येषु च नानादेहेषूक्तजातिमन्तरेणानुगतरूपा-भावात्तस्यां च सिद्धायां तयैवाधिकारपरिच्छेदद्वारा विधिप्रतिपत्त्युपपत्तौ

[1] ब्राह्मणत्वाभिव्य.

विषयप्रतिपत्तिप्रसङ्गात्, इति देवानामग्न्यभावादकर्माधिकारो युक्तः। एवमप्यत्र्यार्षेयत्वानुद्धाराच्च ॥

न चास्मदादीनामिन्द्रादिपदशक्येषु वज्रहस्तादिलक्षणेषु हविरुद्देश्येषु तेषां यौगिकेश्वरोद्देशविवक्षायामैन्द्राग्नेयादिशास्त्रमेकार्थमनुगमयितुं शक्यम्। तस्मादार्थवादिकमैतिहासिकं वा कर्मानुष्ठानं यदि देवानामुपपादनीयं, तर्हि भवान्तरविषयं

रत्नतूलिका

नादृष्टकल्पनमिति भावः। उपसंहरति—इति देवानामिति। अस्तु वा ब्राह्मण्याद्युपपादनेन देवानामग्निमत्त्वम्, तथापि न तवेष्टसिद्धिरित्याह—एवमपीति। तथा च न कर्माधिकार इति भावः॥

यदुक्तमिन्द्रादीनामपि इन्द्रादिशब्दार्थः परमात्मा यष्टव्योऽस्तीति न कर्माधिकारानुपपत्तिरिति तद्दूषयति—न चास्मदादीनामिति। इन्द्रादिशब्दा न केवलं योगेनेन्द्रादिषु प्रवर्तन्ते; अवयवार्थस्यैश्वर्यादेर्दैवतान्तरसाधारणत्वात्, किं तु वज्रहस्तादिषु रूढाः, परमात्मनि तु निरुपाधिकज्ञानाद्याश्रये वर्तमानाः केवलं यौगिका एव च वाच्याः। तथा च "ऐन्द्रमेकादशकपालम्", "आग्नेयमष्टादशकपालम्" इत्यादिशास्त्रमस्मदादीन् प्रति रूढ्यर्थाग्निदैवत्यत्वबोधकम्, अग्न्यादीन् प्रति तु यौगिकपरमात्मदैवत्यत्वबोधकमिति शास्त्रवैरूप्यप्रसङ्ग इत्यर्थः। तेषां अग्न्यादिदेवतानामित्यर्थः। तर्ह्यर्थवादादौ तेषां कर्मानुष्ठानश्रवणस्य का गतिरित्याशङ्क्य तां दर्शयन्नुपसंहरति—तस्मादिति। यद्युपपादनीयमित्युक्तिस्तदुपपादनाभावेऽपि न क्षतिः; अर्थवादस्य यथाकथंचित् स्तुत्यर्थत्वोपपत्तेः। इतिहासस्यापि कथंचिद्धर्माधर्मबोधनपरत्वोपपत्तेरित्यभिप्रायः। भवान्तरेति। अग्नित्वप्राप्तेः पूर्वभाविभवविषयमित्यर्थः।

तन्नेतव्यम् । अन्यथा देवानामपि कर्माधिकारे "पुनरेत्यस्मै लोकाय कर्मणे," "कर्मभूमिरियं ब्रह्मन्",

"अस्मिन्कृतं तत्परिगृह्य सर्व-
ममुत्र भुङ्क्ते पुनरेति मार्गम्"

इत्याद्यसामञ्जस्यादिति दिक् ॥

ननु सगुणासु दहरादिविद्यासु कर्मसमुच्चय इष्यते; तत्र चाधिकारो देवानामपीति । उच्यते—न तादर्थ्येन कर्म-

रत्नतूलिका

अन्यथेत्यस्यार्थमाह--देवानामपीति । कर्मणे इमं लोकं पुनरेतीत्युक्त्या लोकान्तरे कर्माधिकारो नास्तीति गम्यते । तथा अस्मिन् लोके कृतं कर्म परिगृह्य अमुत्र स्वर्गलोके भुङ्क्ते इत्युक्त्या तत्र भोगमात्रम्, अत्रैवानुष्ठानमिति गम्यते । तदनाञ्जस्यं स्यादित्यर्थः ॥

इष्यत इति । सिद्धान्तिनापीति शेषः । एवमपि देवानां कर्माधिकारे किमायातमित्यत आह—तत्र चाधिकार इति । सैव ब्रह्मविद्या न ततोऽधिकाऽन्या निर्गुणविद्यास्ति । तत्र तेषाम(न)धिकारे "तद्यो यो देवानाम्' इत्यादिश्रुतिः, "तदुपर्यपि" इति सूत्रं च पीड्येतेति शङ्कितुर्गूढोऽभिमानः । तमनुरुद्ध्यैव येषां कर्मण्यधि-कारस्तेषां तत्समुच्चिता विद्या, अन्येषामसमुच्चितेति परिहरति—उच्यत इति । नन्वेकस्या एव विद्यायाः कथमधिकारिभेदेन वा कर्म-समुच्चयोऽसमुच्चयश्चेत्यभ्युपगम इत्यत आह-- न तादर्थ्येनेति । विद्यार्थत्वेनेत्यर्थः । सति तु विधौ देवानां ब्रह्मविद्यायां श्रूयमाणोऽधि-कारो विद्यार्थतया कर्मानुष्ठानसिद्धये तेषां कर्माधिकारमाक्षेप्स्यतीति तदभावोक्तिरिति ध्येयम् । कथं तर्हि क्वचिद्विद्यासमुच्चय इत्यत

विधिरस्ति । यावज्जीवाद्यधिकारविहितानि तु समुच्चीयन्ते । प्रत्यवायाप्रतिबन्धेन विद्योत्पत्त्युपकारात् । तत्रैवं सति कर्मानधिकारे देवादीनामसमुच्चितैव विद्या स्यात् ॥

अथवा सा देवानाधिकृत सगुणा विद्या । अर्चिरादिपर्वा हि गतिर्विद्योपक्रममादित्यादीनामसंभाविनी । न च क्वचिदगतिवादं विद्याविधिरस्ति, येन विद्याविधिसाधारण्ये

रत्नतूलिका

आह—यावज्जीवेति । प्रत्यवायेनाप्रतिबन्धः प्रत्यवायाप्रतिबन्धस्तेनेत्यर्थः । एवं सतीति । स्वाननुष्ठाननिमित्तप्रत्यवायनिवृत्त्या विद्योत्पत्त्यर्थत्वे सतीत्यर्थः । असमुच्चितैवेति । तत्रानधिकृतानां तदकरणनिमित्तप्रत्यवायाभावेन तन्निवृत्तये कर्मानपेक्षणादिति भावः ॥

पराभिमानानुरोधं परित्यज्य पक्षान्तरमाह—अथवेति । तत्र तेषामनधिकारेऽपि बाधकाभावादिति भावः । प्रत्युत गतिवादोऽनधिकारमेवोपोद्बलयतीत्याह—अर्चिरादीति । अर्चिरहरापूर्यमाणपक्षाद्याः पर्वस्थानीया यस्यां गतौ सेत्यर्थः । तथा च श्रुतिः—"तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासान्" इत्याद्या । विद्योपक्रमं विद्ययोपक्रम्यमाणा "उपज्ञोपक्रमं तदाद्याचिख्यासायाम्" इति नपुंसकम् । न ह्यादित्य उपासीनो गतिपर्वान्तर्गतं स्वमेव प्राप्तुमीष्ट इत्यादित्यादीनामसंभाविनीत्युक्तम् । ननु सामान्यतः सर्वाधिकारिके विद्याविधौ सति गतिवाद एव यस्याधिकारिणो गतिः संभाव्यते तदधिकारिकविद्यायां संकोचनीय इत्यत आह—न च क्वचिदिति । स्यादेवं यदि विद्यामात्रं विधीयते, [1] प्रदे-

[1] प्रदेशान्तरश्रुता-कुं.

गतिवादः संकोच्येत। देवाधिकारवादश्च तत्र तत्र निर्विशेषविद्याविषयो नेष्यते। तस्मादकर्मसमुच्चयो विद्यायाः॥

न चैवं "सर्वापेक्षा" इत्यादिविरोधः। न हि तत्र विद्या विविदिषा वा कर्मकार्यमिति निर्णीयते। किं तर्हि "अत

रत्नतूलिका

शान्तरस्था गतिश्च तत्रापसंह्रियत इत्यभ्युपगमः, न त्वेवम्; किं तु सर्वोऽपि विद्याविधिर्गतिवादसहित एवावगम्यते। अतस्तत्राधिकारप्रतिपत्तिः संभावितगतीनामेव; न त्वन्येषाम्; यथा साङ्गे कर्मणि विहिते अङ्गापसंहारसमर्थस्यैवाधिकारप्रतिपत्तिर्न तु तदनुरोधेनाङ्गविधिसंकोचस्तद्वत्। अतो गतिवादस्य सङ्कोचकाभावान्न देवानां सगुणविद्यास्वधिकार इत्यर्थः। ननु देवानां ब्रह्मविद्याधिकारश्रवणमेव तत्संकोचकमित्यत आह—देवाधिकारवादश्चेति। तत्र तत्र "तद्यो यो देवानाम्" इत्यादावित्यर्थः। सैव मुक्तिहेतुभूता ब्रह्मविद्येति वक्ष्यत इति भावः। परमप्रकृतमुपसंहरति—तस्मादिति॥

ननु "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्यधिकरणे "तमेतं वेदानुवचनेन" इत्यादिना विद्याङ्गत्वेन कर्मविधानाद्विद्योत्पत्तये तेषां समुच्चित्यानुष्ठानमुक्तम्। तथा "अग्निहोत्रादि तु तत्कार्यायैव" इत्यधिकरणे अग्निहोत्राद्याश्रमकर्मणां विद्यारूपकार्यार्थतया अहरहरनुष्ठेयत्वमुक्तम्। तथा "सहकारित्वेन च" इति सूत्रे विद्योत्पत्तिद्वारा विद्यासहकारित्वेनाप्यग्निहोत्रादीन्यनुष्ठेयानीत्युक्तम्। अतः समुच्चयनिराकरणं सूत्रविरुद्धमित्याशङ्क्य निषेधति—न चैवमिति। न हीति। तन्निर्णयेन प्रयोजनाभावादिति भावः। "अत एव चाग्नीन्धनाद्यनपेक्षा" इत्यत्रातश्शब्दो व्यवहितपरामर्शी। सन्निहितयोग्याभावात्। [1] ततश्च

---

[1] तच्च–क. कुं.

एव चाग्नीन्धनाद्यनपेक्षा" इति पूर्वसूत्रे विद्याया अकर्माङ्गतया स्वतन्त्रपुरुषार्थत्वादूर्ध्वरेतसामपि विद्यासम्बन्धश्रवणाद्वा अग्न्याधानादिकर्मानपेक्षायामुदितायामत्यन्ततदनपेक्षाप्राप्ताविदमुच्यते "सर्वापेक्षा" इति। तद्विविदिषाद्वारत्वेऽपि न विरुध्यते ॥

एवं ब्रह्मविद्याधिगमे पुण्यस्याप्यश्लेषेऽभिहिते सर्वापेक्षाविरोधमाशङ्क्य "अग्निहोत्रादि तु तत्कार्यायै" इत्युक्तम्। उत्पन्नया हि विद्यया नश्यन्ति कर्माणि, न श्लिष्यन्ते वा। अग्निहोत्रादीनां च ज्ञानफलापवर्गित्वादविरोध इत्यभिप्रायः ॥

रत्नतूलिका

व्यवहितं "पुरुषार्थोऽतश्शब्दात्" इति सूत्रोक्तं स्वातन्त्र्येण पुरुषार्थसाधनत्वं, "ऊर्ध्वरेतस्सु च शब्दे हि" इति सूत्रोक्तमूर्ध्वरेतसां विद्यासम्बन्धश्रवणं च, विशेषाभावादित्यभिप्रेत्य सूत्रं व्याचष्टे—विद्याया इत्यादिना। सूत्रे अग्नीन्धनादीत्यमुमंशं व्याचष्टे—अग्न्याधानादीति। एवमप्यपेक्षा प्राप्तेति कथं समुच्चित्यानुष्ठाननिरास इत्यत आह—तद्विविदिषेति। तथा च विविदिषाद्वारा तदपेक्षाया जन्मान्तरानुष्ठितकर्मसाधारणत्वान्न समुच्चित्यानुष्ठाननियम इति भावः ॥

"अग्निहोत्रादि तु" इति सूत्राविरोधं परिहरति—एवमिति। अभिहित इति। "इतरस्याप्येवमसंश्लेषः" इति सूत्र इति शेषः। तत्कार्यायैव, न तु तस्याश्लेषो विनाशो वेति सूत्रोक्तार्थे उपपत्तिं दर्शयन् तस्य विरोधसमाधानाभिप्रायं दर्शयति—उत्पन्नया हीति। विद्योत्पत्तेः पूर्वमश्लेषो विनाशो वा वक्तुमशक्यः। विद्यायामुत्पन्नायां कर्मणां फलं सञ्जातमेवेति नाश्लेषविनाशौ। न हि फलापवर्गोऽपि विनाश इति भावः ॥

ननु ज्ञानस्य यत् कार्यं तदेवास्यापि कार्यमित्यर्थ इति मोक्षार्थत्वं कर्मणामुक्तं भाष्ये; भवता तु ज्ञानार्थत्वमुच्यते; तथा च विरोध

भाष्यकृतस्तु—"ज्ञानस्यैव प्रापकं सत् कर्म प्रणाड्या मोक्षकारणमित्युपचर्यते" इत्याहुः। सहकारित्वं तु यद्यपि तुल्यवत्कार्यकारित्वे स्यात्, दर्शादिवद्दण्डचक्रादिवच्च। अङ्गस्यापि फलोपकारित्व एव प्रयाजादिवत्स्वरूपसन्निपातिनो द्रव्यादेर्यागसहकारित्वाव्यपदेशात्। तथापि यावज्जीवादिविधिविहितत्वादाश्रमार्थानि कर्माणीति स्थिते तेषामेव विद्यार्थत्वे विविदिषार्थत्वे वा नित्यानित्यसंयोगविरोधो मा शङ्कीति संयोगपृथक्त्वमात्र-

रत्नतूलिका

इत्याशङ्क्य, सोऽपि भाष्य एव परिहृत इत्याह—भाष्यकृतस्त्विति। "सहकारित्वेन च" इति सूत्रविरोधं परिहरति—सहकारित्वं त्विति। वक्ष्यमाणरीत्या गौणमिति भावः। तदेव वक्तुं मुख्यसहकारिवैलक्षण्यप्रदर्शनाय सहकारिरूपमसहकारिरूपं च निदर्शयन् कर्मणां सहकारित्वमाक्षिपति—यद्यपीत्यादिना। सहकरोतीति सहकारी। तच्च सहकरणं प्रधानतया तुल्यवत्फलजनकत्वेन, अङ्गं सत् प्रधानफलोपकारित्वेन वा स्यात्; तदुभयमपि कर्मणां न संभवति; तेषां मोक्षरूपफलसंयोगे प्रमाणाभावादिति भावः। कर्मणां तु ज्ञानस्वरूपोपकारित्वान्न ज्ञानसहकारित्वमित्यभिप्रेत्य तदनुरूपं दृष्टान्तमाह—स्वरूपसन्निपातिन इति। सूत्रे सहकारित्ववचनमन्यार्थम्, न तु स्वप्रतिपत्त्यर्थम्, अतस्तस्य गौणत्वेऽप्यक्षतिरित्यभिप्रेत्यान्यार्थतां दर्शयति—तथापीति। नित्यानित्येति। नित्यानां कर्मणामनित्यविविदिषादिफलसंयोगो विरुद्धः। न ह्येवं संभवति; अनित्यफलाय नित्यानि कर्माण्यनुष्ठेयानीति। अथवा एकस्य कर्मणोऽनुष्ठात्रा आश्रमार्थतया नित्यः सम्बन्धः, फलार्थतया अनित्यः कादाचित्क इति विरोध इत्यर्थः। एवं शङ्का मा भूदित्यर्थः। संयोगेति। सम्बन्धपृथक्त्वमित्यर्थः।

मुच्यते "सहकारित्वेन च," "विहितत्वात्" इति। ततश्च स्वोत्पत्तिव्यवधानेन विद्यया फले कर्तव्येऽदृष्टद्वारा विविदिषाद्वारा वा तदुत्पत्तिमपेक्ष्योपपद्यते तत्सहकारित्वम्। न तु विद्याफलमपेक्ष्यैव। कर्मणाममृतत्वसंयोगाश्रवणात्॥

धर्मस्कन्धश्रुतेः कर्मणाममृतत्वसंयोगपरत्वाभावः

नच "त्रयो धर्मस्कन्धाः यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्, सर्व एते पुण्यलोका भवन्ति, ब्रह्मसंस्थोऽमृतत्वमेति" इति यज्ञादिधर्मस्कन्धेष्वन्यतमस्य

रत्नतूलिका

एकस्यैव कर्मणो यावज्जीवविधिकल्पित एकः सम्बन्धः "तमेतं" इत्यादिश्रुतिकल्पितोऽन्य इति। तथा च खादिरादिवदुभयसम्बन्धः शास्त्रानुमतो न दोषायेति भावः। पृथक्त्वमात्रं, न तु सहकारित्वमपि, येन तन्निर्देशो गौणो न स्यादिति मात्रशब्दार्थः। अत एव हेतुत्वपरतया सूत्रशेषं दर्शयति—विहितत्वादिति। निर्देशो वा किमालम्बन इत्यतस्तद्दर्शयति—ततश्चेति। प्रयाजादिवदारादुपकारकत्वव्यावृत्तये—स्वोत्पत्तीति। विद्योत्पत्तीत्यर्थः। प्रयाजादीनां तु न यागोत्पत्तिव्यवधानमिति भावः। अदृष्टद्वारेति। विरोधिदुरितनिवृत्तिद्वारेत्यर्थः। तस्या मानान्तरागम्यत्वाददृष्टत्वमिति भावः। स्वर्गादौ क्लृप्तस्यैवात्रापि द्वारत्वसंभवे द्वारान्तरं न कल्प्यमिति भावः। न त्विति। येन समुच्चित्यानुष्ठानशङ्का स्यादिति भावः॥

अमृतत्वसंयोगाश्रवणादिति हेतुरसिद्ध इत्याशङ्क्य निषेधति—न चेति। अन्यतमस्येति। तथा चाश्रमार्थतयानुष्ठितानामेव कर्मणां विद्यालक्षणसहकारिविशेषलाभे मुक्तिहेतुत्वं श्रुतमिति हेतुरसिद्ध

ब्रह्मसंस्थस्य मुक्तिहेतुत्वमुच्यते, ब्रह्मणि संस्था यस्येति संनिकृष्टापेक्षत्वादिति वाच्यम्। "सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति" इति व्यवच्छिद्य व्यपदेशादमीषु ब्रह्मसंस्थ इत्यप्रत्ययात्। अत एव "अथैष ज्योतिः" इत्यादाविव समासान्तर्गतसर्वनाम्नोऽप्युपपाद्यविषयत्वात्। अपि च "धर्मस्कन्धाः" इत्याश्रमा गृह्यन्ते। अन्तरेणाश्रमसम्बन्धं पृथग्विधिविहितकर्मरूपभेदे सति त्रैराश्यकरणायोगात्। तथा च ब्रह्मसंस्थः परिव्राडुच्यते परिशेषादिति युक्तम् ॥

रत्नतूलिका

इति भावः। ननु तेषामन्यतमस्येति कुतो निर्णीयत इत्यत आह—ब्रह्मणि संस्थेति। विग्रहान्तर्गतस्य यस्येति पदस्य सर्वनामत्वादिति भावः। स्यादेवं प्रकृतपरामर्शो यदि व्यवच्छेदकं न स्यात्, प्रकृते तु तदस्तीति दूषयति—सर्व एत इति। अत एवेति। यतो व्यवच्छेदके सति सर्वनाम्नां प्रकृतपरामर्शित्वाभावः अत एवेत्यर्थः। "अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत" इत्यत्र एतच्छब्दस्याथशब्देन विच्छेदान्न प्रकृतज्योतिष्टोमपरामर्शित्वं, किंतु प्रक्रंस्यमानज्योतिरादियागविशेषपरामर्शकत्वमिति यथा व्यवस्थापितं पूर्वतन्त्रे, तथात्रापि सर्वनामत्वाविशेषे विग्रहान्तर्गतानन्तर्गतत्वयोरप्रयोजकत्वादिति भावः। आश्रमा गृह्यन्त इति। "यज्ञोऽध्ययनं दानम्" इति गृहस्थाश्रमो गृह्यते, "तप एव" इति वानप्रस्थाश्रमः; "ब्रह्मचारी" इत्यादिना ब्रह्मचर्याश्रम इति विवेकः। तत्र हेतुमाह—अन्तरेणाश्रमसम्बन्धमिति। पृथग्विधिविहितत्वं कर्मरूपभेदे हेतुः। तथा च बहूनां कर्मणामेकोपाधिमन्तरा त्रैराश्यकरणमनुपपन्नमित्यर्थः ॥

न च तप इत्येव सोऽपि गृह्यते, अरण्यनित्यतासामान्यात्, "तपो नानशनात्परम्" इति श्रवणात्, "अष्टौ ग्रासा मुनेर्भक्ष्याः" इति परिव्राजोऽष्टग्रासीभोजननियमस्यानशनप्रायत्वात्, तस्य च मासे मासे चान्द्रायणसमसङ्ख्यग्रासतया यतिचान्द्रायणत्वप्रसिद्ध्या च तन्नियतस्य यतेस्तपःशब्दोपपत्तेश्चेति

रत्नतूलिका

परिशेषोऽसिद्ध इत्याशङ्क्य निषेधति—न च तप इत्येवेति। सोऽपि—परिव्राडपि। ननु परिव्राजः कथं तपःशब्देनोपस्थितिरित्याशङ्क्य तपःप्रधानेन वानप्रस्थेन धर्मसाम्यादित्याह—अरण्यनित्यतेति। तथा च तत्र तपःशब्दो गौणः, तात्पर्यवशेन वृत्तिद्वयमपि सोढव्यमिति भावः। यथा कायक्लेशरूपतपोनियततया वानप्रस्थे तपःशब्दवृत्तिरेवं परिव्राज्यपि तद्वृत्तिरिति वक्तु तदीयधर्मस्य तपस्त्वमुपपादयति—तपो नानशनादिति। अस्त्वनशनस्य तपस्त्वम्; तथापि यतेस्तद्योगे किमायातमित्यतस्तदुपपादयति—अष्टौ ग्रासा इति। अष्टग्रासीनियमस्य प्रकारान्तरेण तपस्त्वमुपपादयति—तस्य चेति। ग्रासनियमस्येत्यर्थः। चाद्रायणेति। चान्द्रायणं नाम शुक्लप्रतिपद्येको ग्रासः, द्वितीयायां द्वौ, तृतीयायां त्रयः, एवं चन्द्रकलावद्वृद्धिः, पौर्णमास्यां पञ्चदश। एवं कृष्णप्रतिपत्प्रभृति क्रमेण ह्रासश्चेत्येवं नियमात्मकं कर्म। एवं वृद्धौ ह्रासे चैकस्मिन् मासि चत्वारिंशदुत्तरशतद्वयं ग्रासाः सम्पद्यन्ते। प्रतिदिनमष्टौ ग्रासा अपि एकस्य मासस्य तथैव सम्पद्यन्त इत्यष्टग्रासीनियमस्य चान्द्रायणतपोरूपत्वमित्यर्थः। न केवलं सङ्ख्यासाम्यात्, अपि तु तन्नियमस्य चान्द्रायणत्वप्रसिद्ध्यापीत्याह—यतिचान्द्रायणत्वेति।

वाच्यम्; एवं कयापि कल्पनया संभवमात्रेणात्यन्तधर्मभेदेऽपि तप इत्येव गृह्यादेरपि ग्रहणप्रसङ्गात्, बहुकर्मायस्ततया गुरुकुलश्रान्ततया च तस्यापि तपस्वित्वात्। "एतत्खलु वाव तप इत्याहुः, यः स्वं ददाति" इति, "तपो हि स्वाध्यायः" इति च दानादौ तपःशब्दनिगदात् तन्नियतस्य तन्निर्देशोपपत्तेश्च। निर्देशभेदे सति नान्तर्भाव इति तुल्यं यतेरपि ब्रह्मसंस्थ इति स्वधर्मनियतनिर्देशभेदात्॥

एवं च चतुर्ष्वाश्रमेषु त्रय इति निर्देशोऽनाञ्जसो न कल्पितो भवति। अण्डजानि च जरायुजानि च स्वेदजानि चोद्भिज्जानि चेति प्रसिद्धचतुर्विधभूतग्रामे "तेषां खल्वेषां

रत्नतूलिका

अतिप्रसङ्गेन दूषयति—एवं कयापीति। स्वाध्यायनिरतत्वादेर्वानप्रस्थसाधर्म्यस्य ब्रह्मचारिगृहस्थयोरपि संभवात्तपःशब्देन तयोरपि ग्रहणं स्यादित्यर्थः। न केवलं साधर्म्यमात्रेण तयोस्तपःशब्दः, अपि तु तपोयोगोऽप्यस्तीत्याह—बहुकर्मायस्ततयेति। तथा च कायक्लेशलक्षणतपोयोगो वानप्रस्थस्येव तयोरप्यविशिष्ट इति भावः। प्रकारान्तरेण तपस्वित्वमाह—एतत्खुलु वावेति। स्वधर्मेति। यथा गृहस्थस्य यज्ञदानादिना स्वधर्मेणासाधारणनिर्देशः, यथा वा तपसाचार्यकुलवासेन च स्वस्वधर्मेण वानप्रस्थब्रह्मचारिणोः, तथा यतेरपि स्वधर्मेण ब्रह्मसंस्थत्वेन निर्देशो भिन्न इति भावः॥

इदमपरमप्यनुकूलमित्याह—एवं चेति। अन्यथा चतुष्ट्वेन प्रसिद्धेष्वाश्रमेषु त्रय इति निर्देशोऽनाञ्जसः स्यादिति भावः। ननु यथा चतुष्ट्वेन प्रसिद्धे भूतग्रामे त्रित्वेन व्यपदेशस्तथात्र भविष्यतीत्यत आह—अण्डजानि चेति। श्रुतौ जीवजशब्देन जरायुजमुच्यते।

भूतानां त्रीण्येव बीजानि भवन्ति, आण्डजं जीवजमुद्भिज्जम्" इति परिसङ्ख्यानं तु स्वेदजोद्भिज्जौ भूम्युदकोद्भेदप्रभवत्वेनैकीकृत्य कथंचिन्नीयते गत्यन्तराभावात्। तथा च सूत्रं—"तृतीयशब्दावरोधः संशोकजस्य" इति। तस्मात्सर्वकर्मसन्न्यासिनः कार्यान्तराभावेन ब्रह्मणि संस्था समाप्तिस्तदेकनिष्ठा धर्म इति गृह्याद्यतुल्यशीलफलतया पृथक्स्कन्धो निर्दिश्यते

## रत्नतूलिका

भूम्युदकोद्भेदेति। उद्भिद्य जायन्त इत्यवयवार्थ[1]स्योद्भित्प्रभवत्वस्योभयत्र तुल्यत्वम्। यथा भूमिमुद्भिद्य वृक्षादयो जायन्ते, तथा जलमुद्भिद्य यूकादय इति तुल्यत्वात्। अत्र स्थावरोद्भेदाज्जङ्गमोद्भेदे विशेषोऽस्ति, अन्यथा स्वेदजोद्भिज्जयोरन्यत्रापि भेदव्यवहारो न स्यात्, अतस्तमनादृत्याप्यत्रैकीकरणमित्यभिप्रेत्य कथंचिदित्युक्तिः। तृतीयशब्देन "अण्डजं जीवजमुद्भिज्जम्" इति श्रुतौ तृतीयेनोद्भिज्जशब्देन संशोकजस्य–स्वेदजस्यावरोधः--सङ्ग्रह इति सूत्रार्थः। ननु भवत्पक्षे वा चतुर्णामाश्रमाणां वक्तव्यत्वे सति कथं त्रय इत्युपक्रमः? अपि च ब्रह्मणि संस्था–समाप्तिर्येषामिति विग्रहान्तर्गतसर्वनाम्नः सति संभवे प्रकृतपरामर्शित्वमेव युक्तं, न प्रक्रंस्यमानपरामर्शित्वमित्यादिशङ्कां परिहरन्नुपसंहरति—तस्मादिति। अत्र सर्वकर्मसन्न्यासिनो ब्रह्मसंस्था धर्म इत्युक्त्या विग्रहान्तर्गतसर्वनाम्ना प्रक्रान्तानां त्रयाणां परामर्शानुपपत्तिः; तेषां विहिताश्रमधर्माननुष्ठाने प्रत्यवायप्रसङ्गेन ब्रह्मैकनिष्ठाया अयोगादिति दर्शितम्। गृह्याद्यतुल्येति। चतुर्ष्वपि धर्मानुष्ठानेन समानशीलानां समानफलानां च सहोपक्रमः। अत

[1] स्योद्भेदप्र—ख. कुं.

"ब्रह्मसंस्थोऽमृतत्वमेति" इति। तत्र कुतोऽमृतत्वफले कर्म समुच्चीयते ॥

## परीक्ष्य लोकानित्यादिश्रुत्या मुक्तौ कर्मसमुच्चयासिद्धिः

"परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन, तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इति कर्मत्यागेन मुमुक्षोर्ज्ञानार्थप्रवृत्त्युपदेशाच्च। न च कृतेन– कर्मणा अकृतः असाध्यो लोको नास्ति, किं तु सर्व एव कृता इति लोकान्कर्मणा चितान्–प्राप्यान्परीक्ष्य–न्यायैर्निश्चित्यानिर्वेदं कर्मायादिति तदर्थ इति वाच्यम्। अकृत इति कर्मचितानिति च निष्ठार्थबाधेनार्थलक्षणादोषात्।

### रत्नतूलिका

एव "धर्मस्कन्धाः" इति धर्मोपाधिना उपक्रमैक्यमिति सूचितम्। एवमुपक्रम्य तस्य फले कथिते ब्रह्मसंस्थ इति पृथक् शीलस्य पृथक्फलस्य च यतेः पश्चादुक्तिरिति न किञ्चिदसङ्गतमिति भावः। महाप्रकृतं कर्मणां समुच्चयाभावमुपसंहरति—तत्र कुत इति।

"परीक्ष्य लोकान्" इति श्रुतेरयमर्थः—कर्मचितान्–कर्मणा साधितान् लोकान् परीक्ष्य–प्रत्यक्षानुमानागमैरसारानवधार्य ब्राह्मणो निर्वेदं–वैराग्यमायात्–प्राप्नुयात्, कथं कृतेन–कर्मणा अकृतो लोको नास्ति, तस्य च कृतकत्वादेवानित्यत्वम्। अतः किं कर्मणा तत्साध्येन लोकेन वेति विरज्य यदकृतकं पदं तद्विज्ञानार्थं स निर्विण्णो गुरुमेवाभिगच्छेत्। न तु स्वयं कुशलोऽपि ब्रह्मविचारं कुर्यादिति। अस्याः श्रुतेः परोक्तमर्थमाशङ्क्य निषेधति—न च कृतेनेति। निष्ठार्थबाधेनेति। तस्या भूतार्थे विहितत्वादिति भावः। न केवलं शब्दास्वारस्यमात्रम्, अपि

"तदेतत्सत्यम्—

मन्त्रेषु कर्माणि कवयो यान्यपश्यं-
स्तानि त्रेतायां बहुधा सन्ततानि।
तान्याचरथ नियतं सत्यकामा
एष वः पन्थाः सुकृतस्य लोके" ॥

इति प्रक्रम्य—

"एह्येहीति तमाहुतयः सुवर्चसः
सूर्यस्य रश्मिभिर्यजमानं वहन्ति।
प्रियां वाचमभिवदन्त्योऽर्चयन्त्य
एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥"

रत्नतूलिका

तु प्रकरणार्थास्वारस्यं च। इत्थं हि प्रकरणार्थोऽवगम्यते—नित्यं कर्म कर्तव्यम्, तच्च ब्रह्मलोकफलम्, काम्यं तु निन्दितम्, नित्यमपि विद्ययाऽसमुच्चितं ब्रह्मलोकफलं न भवति, किं तु समुच्चितमेव, कैवल्याय तु कर्म त्यक्त्वा ज्ञानमात्रं सम्पादनीयमिति। अतः कर्मणां मोक्षोपायत्वे तद्विरोध इत्याह—तदेतत्सत्यमिति। मन्त्रेषु—ऋगादिषु कवयः—मन्त्रद्रष्टारो वसिष्ठादयो यानि कर्माण्यपश्यन् इति यत् तदेतदवितथम्, तेषां पुरुषार्थत्वाव्यभिचारात् तानि त्रेतायां—त्रयीसङ्गतिलक्षणायां हौत्रादिप्रकारायां युगविशेषे वा बहुधा सन्ततानि—सम्पृक्तानि कर्मभिः, तानि नियतमाचरथ सत्यकामाः—ब्रह्मलोककामाः, वः सुकृतस्य लोक्यते—अनुभूयत इति लोके फले एष पन्थाः—मार्ग इति कर्म कर्तव्यमिति प्रक्रम्येत्यर्थः। तं यजमानं सुवर्चसः—दीप्तिमत्य आहुतयः एह्येहीति आह्वयन्त्यः सूर्यस्य रश्मिभिर्द्वारभूतैर्वहन्ति, एष वः सुष्ठु कृतः पुण्यो ब्रह्मलोक इति प्रियां वाचमभिवदन्त्योऽर्चयन्त्यः—पूजयन्त्यश्चेति श्रुत्यर्थः।

इति नित्यानामाश्रमकर्मणां सत्यशब्दितब्रह्मलोकफलत्वमभिधाय—

"प्लवा ह्येते अदृढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा
जरामृत्युं ते पुनरेवापियन्ति ॥"

इत्यादिना अवरं काम्यं कर्मेति भाष्यदर्शनात्,

"यत्कर्मिणो न प्रवेदयन्ति रागा-
त्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥"

इति तत्रैव लिङ्गदर्शनाच्च काम्यकर्म निन्दित्वा नित्यस्यापि ज्ञानहीनस्य ब्रह्मलोकफलत्वानुपपत्तेः,

### रत्नतूलिका

सत्यशब्दितेति । "तान्याचरथ नियतं सत्यकामाः" इत्यत्र सत्यशब्दप्रतिपादितेत्यर्थः । प्लवाह्येत इति । यज्ञो रूप्यते निर्वर्त्यते यैस्ते यज्ञरूपाः, अष्टादश—षोडशर्त्विजः पत्नी यजमानश्च, एते अदृढाः प्लवाः, तरणसाधनभूता न भवन्तीत्यर्थः । एषु अवरं काम्यं कर्मोक्तम्, एवमेतत्कर्म येऽभिनन्दन्ति—श्रेयस्साधनमिति हृष्यन्ति ते जरां मृत्युं च पुनः पुनरपियन्ति—प्राप्नुवन्तीति कर्तृनिन्दाद्वारा काम्यं कर्म निन्दित्वेत्यर्थः । कुतः काम्यकर्मनिन्देत्यवगम्यत इत्यत आह— अवरं काम्यं कर्मेति । न केवलं भाष्योक्तिमात्रेण निन्दा काम्यविषयेत्यवगम्यते, अपि तूत्तरवाक्यालोचनयापीत्याह— यत्कार्मिण इति । यस्मात्कर्मिणो न प्रवेदयन्ति—तत्त्वं न जानन्ति, कुतः, रागात्—कर्मफलरागात् तेन कारणेनातुराः-दुःखार्ताः सन्तः क्षीणकर्मफलाः स्वर्गलोकाच्चयवन्त इति श्रुत्यर्थः । तत्रैवेति । काम्यनिन्दायामेवेत्यर्थः ।

"तपःश्रद्धे ये ह्युपवसन्त्यरण्ये
शान्ता विद्वांसो भैक्षचर्यां चरन्तः ।
सूर्यद्वारेण ते विरजाः प्रयान्ति
यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥

इति विद्याकर्मसमुच्चयाद्ब्रह्मलोकफलमुपसंहृत्य कैवल्याय कर्मत्यागेन केवलज्ञानविधानतात्पर्यविरोधाच्च ॥

अन्यथा सर्व एव लोकाः कर्मसाध्याः । अतः कर्म कुर्यात् । "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इति किं केन सङ्गच्छेत । न च—

"न तत्र दक्षिणा यान्ति नाविद्वांसस्तपस्विनः"

इति श्रुतेर्ब्रह्मलोकस्य केवलकर्मासाध्यतया समुच्चित्य विद्या विधीयते तद्विज्ञानार्थमिति वाच्यम्; "तपःश्रद्धे ये ह्युप-

रत्नतूलिका

तपःश्रद्धे इति । ये तपः—आश्रमविहितं कर्म, श्रद्धा—उपासना, ते उभे उपवसन्ति—सेवन्ते, शान्ताः—उपरतकरणाः, विद्वांसः—ज्ञानप्रधानाः, भैक्षचार्यां चरन्तः—अपरिग्रहाः, ते सूर्यद्वारेण—सूर्योपलक्षितेन मार्गेण, विरजाः—विरजसः प्रयान्ति, यत्र—यस्मिन्सत्यलोकादौ, पुरुषो—हिरण्यगर्भः अव्ययात्मा—यावत्संसारस्थायीत्यर्थः । एवं प्रकरणार्थमभिधाय परीक्ष्य लोकानित्यस्य तात्पर्यवर्णनपूर्वकं तद्विरोधमाह—कैवल्यायेति ॥

इत्थमेव प्रकरणस्यार्थः, अन्यथा असङ्गतिः स्यादित्याह—अन्यथेति । न च—न तत्रेति । दक्षिणाः—दक्षिणादातारः, गृहस्था इति यावत् । तपस्विनः—इतरे त्रयश्च अविद्वांसः—उपासनारहितास्तत्र—

वसन्त्यरण्ये" इत्येव सिद्धत्वात्। "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुत्यन्तरे कर्मचितलोकेषु परीक्षणीयार्थस्य दर्शितत्वेन कर्मचितान्परीक्ष्येति तद्विरुद्धविषयत्वकल्पनायोगात्। "न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्।" "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः।" इत्याहत्य सहोपासनया कर्मणोऽमृतत्वसाधनत्वनिषेधात्। [1]अक्रय्यतया अमृतत्वस्याप्रसक्तधनसाधनत्वनिषेधायोगात् धनसाध्यकर्मणश्च पृथङ्निषेधात् न धनेनेति दैववित्तस्य विद्याया एव निषेधनीयत्वात्। प्रपञ्चितश्चायं प्राचीनैरकर्मसमुच्चयो मुक्तावित्यास्तां तावत्॥

रत्नतूलिका

सत्यलोके न गच्छन्तीति श्रुत्यर्थः। सिद्धत्वादिति। समुच्चयस्येति शेषः। "परीक्ष्य लोकान्" इत्यत्र लोकेषु परीक्षणीयोऽर्थः स एव ग्राह्यः, यद्विषये श्रुतौ न्यायोपदर्शनं कृतम्। क्षयित्वमेव तथा, न तु कर्मचितत्वम्। "कर्मचितो लोकः" इति तदनुवादेन क्षयित्वनिर्णयाय न्यायप्रदर्शनादित्याह—तद्यथेहेत्यादिना। न हीति। अध्रुवैः—अनित्यैः कर्मभिः, ध्रुवं तत्—ब्रह्म, न प्राप्यते इत्यर्थः। ननु सहोपासनयेत्यसङ्गतम्; न कर्मणेति श्रुतावुपासनाशब्दाश्रवणादित्यत आह—अक्रय्यतयेति। नान्तरिक्षे न दिव्यग्निश्चेतव्य इत्यादौ गत्यन्तराभावादप्रसक्तनिषेधेऽपि प्रकृते न तथेति भावः। तर्हि तत्साध्यकर्मनिषेधोऽस्तु, तस्य "विद्यां च" इत्यादिश्रुत्या "कर्मणैव हि संसिद्धिम्" इत्यादिस्मृत्या चापाततः प्रसक्तिसंभवादित्यत आह—धनसाध्येति। पृथङ्निषेधादिति। न कर्मणेत्यनेनेति शेषः। दैवेति। विद्यायाः श्रुतौ तथा व्यपदेशादिति भावः॥

---

[1] अक्रय्येत्यारभ्य निषेधायोगादित्यन्तो ग्रन्थः ख. पुस्तके न दृश्यते।

तस्माद्विरोधिदुरितनिवृत्त्या विविदिषायामुपकारीणि कर्माणि। दुरितनिवृत्तिद्वारस्य क्लृप्तत्वात्। तमेतमित्यविशेषेण नित्यकाम्यविनियोगेऽपि काम्यानामपि—

"विड्वराहादिदेहेन न ह्यैन्द्रं भुज्यते पदम्"

इति स्वफलभोगोपयोगितया कतिपयदुरितनिवृत्तेरपेक्षणीयत्वात्। तथा च श्रुतिः—"धर्मेण पापमपनुदति" इति ॥

विद्यां चाविद्यां चेत्यादिश्रुतेरकर्मसमुच्चयपरत्वम्

"विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥" इति।

## रत्नतूलिका

अत्यन्तव्यवहितायां विविदिषायामुपयोगं दर्शयन् कर्मणाममृतत्वसम्बन्धाभावमुपसंहरति—तस्मादिति। क्लृप्तत्वादिति। तथा च मुक्तिहेतुत्वे कर्मणां द्वारान्तरं कल्पनीयम्। उपासकस्य कर्मनिवर्त्यदुरिताभावेन तन्निवृत्तिद्वारत्वायोगादिति दूषणमभिप्रेतम्। ननु तमेतमिति श्रुतौ यज्ञेनेत्यविशेषेण ग्रहणात्काम्यानामपि विनियोगसिद्धौ तत्र द्वारविशेषकल्पनं समानमित्यत आह—तमेतमितीति। काम्यानामपि तदपेक्षायामुपपत्तिं दर्शयति—विड्वराहादीति। ग्रामसूकरादिदेहेनेत्यर्थः। तर्कितेऽर्थे प्रमाणं च दर्शयति—तथा चेति। धर्मेणेत्यविशेषेण ग्रहणादिति भावः॥

परेण "विद्यां चाविद्यां च" इति श्रुतिर्ज्ञानविरोधिदुरितनिवर्तनेन ज्ञानोत्पत्तये कर्माणि समुच्चित्यानुष्ठेयानीत्यत्र प्रमाणमित्युक्तम्, तन्निरासायोक्तार्थे तामपि श्रुतिं प्रमाणयति—विद्यां चेति। नन्वत्र कर्मवाचिपदं निवर्तनीयदुरितवाचिपदं च न श्रूयत इत्याशङ्क्य अविद्या-

न ह्यत्रानित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या विवक्षिता ; तस्या मृत्युरूपायास्तत्तरणोपायत्वायोगात् । "मोहो मृत्युः संमतो यः कवीनाम्" इति स्मरणात् । नापि मृत्युरत्र "यमं त्वेके मृत्युमतोऽन्यमाहुः" इति स्मृत्या यमः ; अविद्याशब्दितकर्मकर्तव्यत्वायोगात् । किं तु स्वतः संयोगपृथक्त्वेन वा विहितं कर्माविद्या, अविद्यामूलत्वात् । विविदिषाद्वारकविद्योत्पत्तिविरोधीनि नानाफलानि दुरितानि

रत्नतूलिका

मृत्युशब्दाभ्यां तयोरुक्तिरिति वक्तुं तयोः संभावितार्थान्तरपरत्वं निरस्यति—न ह्यत्रेति । अनित्ये नित्यत्वख्यातिः नित्यत्वज्ञानं, अशुचौ शुचित्वख्यातिः, दुःखे सुखख्यातिः, अनात्मन्यात्मख्यातिश्चाविद्या न विवक्षितेत्यर्थः । तस्या मृत्युरूपत्वे प्रमाणमाह—मोहो मृत्युरिति । यो मोहः स कवीनां मृत्युः संमत इति योजना । एवमविद्याशब्देऽर्थान्तरं निरस्य मृत्युशब्देऽपि तन्निरस्यति—नापि मृत्युरिति । अत्र अस्यां श्रुतावित्यर्थः । अन्यत्र यथातथावास्त्विति भावः । एवमर्थान्तरपरत्वं निरस्य स्वाभिमतमर्थं वक्तुमाकाङ्क्षामुत्थापयति—किं त्विति । स्वत इति । तत्तदाश्रमार्थतयेत्यर्थः । कर्मणोऽविद्याशब्दवाच्यत्वे हेतुमाह—अविद्यामूलत्वादिति । तथा च कार्ये कारणोपचार इति भावः । अत्र मृत्युशब्दस्य विवक्षितमर्थं दर्शयति—विविदिषाद्वारकेति । एतेन—"कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।

कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥"

इत्युक्तत्वाद्विविदिषा प्रवर्तन इत्यनुक्तत्वाच्च ज्ञानविरोधिनिवर्तकानि कर्माणि, न तु विविदिषाविरोधिनिवर्तकानीति परोक्तमलग्नं वेदितव्यम् ; विविदिषाद्वारा ज्ञानोत्पत्तिप्रतिबन्धकदुरितनिवर्तकत्वेऽपि तथा व्यप-

इतराणि च मृत्युः। तथा चायमर्थः--विद्यां-ज्ञानम्, चकारात्त-दनुबन्धं च। अविद्यां-कर्म, चकारात्तदुपकरणं च। यो वेद--अधि-गच्छति। किं ते समुच्चिते, नेत्याह—उभयं, पृथगधिकारत्वात्,

"अन्यदेवाहुर्विद्यया अन्यदाहुरविद्यया"

इति विभागाभिधानात्। एकाधिकारत्वे च साधनरूपैकत्वे तदुभयमित्यनुपपत्तेः, विनापि तेन समुच्चयप्रतिपत्तेस्तदुपादान-वैयर्थ्याच्च ॥

रत्नतुलिका

देशोपपत्तेरिति। इतराणि चेति। सुकृतानि चेत्यर्थः। नाना-फलोपहारेण विविदिषोत्पत्तिविरोधित्वाविशेषादिति भावः। एवं पदार्थमुक्त्वा वाक्यार्थमाह—तथा चायमर्थ इति। तदनुबन्धमिति। शमादिकमित्यर्थः। तदुपकरणं हविरादिकमित्यर्थः। अनुक्तसमुच्चयार्थौ चकाराविति भावः। एवं "विद्यां चाविद्यां च यस्तद्वेद" इत्येताव-द्व्याख्याय उभयमित्येतद्व्याख्यातुमवतारयति—किं ते समुदिते इति। समुदितविरोधितयोभयपदोपादाने हेतुमाह—पृथगधिकारत्वादिति। पृथक्फलत्वादित्यर्थः। तत्र मानमाह—अन्यदेवाहुरिति। विद्यया-न्यत्-पृथक्फलम्, अविद्यया-कर्मणान्यत्फलमित्याहुरिति श्रुत्यर्थः। पृथगधिकारत्वे साधकमुक्त्वा एकाधिकारत्वे बाधकमाह—एकाधि-कारत्वे चेति। फलस्यैकत्वे तत्साधनरूपमप्येकमिति भावः। उभयमित्यनुपपत्तेरिति। "सङ्ख्याया अवयवे तयप्" इति विहितस्य तयप्प्रत्ययस्य "उभादुदात्तो नित्यम्" इति सूत्रेणायजादेशे उभयमिति पदम्। तथा चावयवद्वयविशिष्टसमुदायप्रतीतिस्तेन वाच्या। सा चानुपपन्ना। साधनैकत्वे अवयवद्वित्वाभावादिति भावः। ननु समुच्चितस्य साधनत्वसिद्ध्यर्थमेव तदुपादानमित्यत आह—विनापीति। चकारस्योक्तसमुच्चयार्थत्वस्वीकारेण वा सहेति पदेन वेति शेषः॥

स इति पदम्, हेति निपातः। [1]सहेति वा तदर्थे निपातः; यच्छब्दस्य प्रतिसम्बन्धितच्छब्दापेक्षत्वात्। अव्ययानामनेकार्थत्वाच्च। अविद्यया यावज्जीवादिविधिना विविदिषोद्देशेन चानुष्ठितकर्मणा मृत्युं तीर्त्वा विविदिषाद्वारोत्पन्नविद्ययामृतमश्नुत इति। अनेनान्यदेवाहुरित्यादिपूर्ववाक्योदितफलभेदः स्पष्टीकृतः॥

## रत्नतूलिका

ननु भवत्पक्षेऽपि सहेत्यनर्थकमित्यतोऽन्यथा व्याचष्टे—स इति पदमिति। न तु भवन्मत इव तदेकपदमिति भावः। तदर्थ इति। तच्छब्दार्थ इत्यर्थः। व्याख्यानद्वयेऽपि हेतुमाह—यच्छब्दस्येति। नन्वस्त्वपेक्षा, तथापि सहेति निपातेन तत्पूरणानुपपत्तिः; तस्य यौगपद्याद्यर्थान्तरत्वादित्यत आह—अव्ययानामिति। ननु पृथक्त्वे वाजपेयराजसूयादिवत्परस्परमत्यन्तानपेक्षा स्यात्, तथा च "सर्वापेक्षा" इति सूत्रं "सहकारित्वेन च" इति सूत्रं च विरुध्येतेत्युक्तदोषानतिवृत्तिरित्यतो मन्त्रस्योत्तरार्धं व्याचष्टे—अविद्ययेति। यावज्जीवादीत्यादिपदेन "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यादेः सङ्ग्रहः। इदं च विविदिषाया अनुद्देश्यफलत्वमवलम्ब्योक्तम्। उद्देश्यफलत्वालम्बनेनाप्याह—विविदिषोद्देशेनेति। सर्वापेक्षादिसूत्रविरोधपरिहारं मनसि निधायाह—विविदिषाद्वारोत्पन्नविद्ययेति। पूर्वमन्त्रपर्यालोचनायामेवमेवार्थो वर्णनीय इत्यभिप्रेत्याह—अनेनेति। अन्यथा तत्र फलभेदस्य प्रतिपादनम्, अत्र तु समुच्चयस्येति पूर्वापरविरोधः स्यादिति भावः॥

---

[1] सहेत्येव वा—ङ.

न चैवम्—

"अन्धं तमः प्रविशन्ति येऽविद्यामुपासते।
ततो भूय इव ते तमो य उ विद्यायां रताः॥"

इति केवलकर्मविद्यानिन्दावचनं समुच्चयपरमुपरुध्येतेति वाच्यम्। तत्परत्वासिद्धेः।

"असुर्या नाम ते लोका अन्धेन तमसावृताः।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः"॥

रत्नतूलिका

ननु ततोऽपि पूर्ववाक्ये कर्मसमुच्चयतात्पर्यावगमात्तदनुरोधेनान्यदाहुरित्यादि[1]वाक्यं समुच्चितविद्याकर्मविषयम्; केवलकर्मणः स्वर्गादिफलमिव केवलविद्याया अपि पापनिवृत्त्यादिफलोपपत्तेः, वक्ष्यमाणसमुच्चयोपपादनसौकर्याय कर्मणां मृत्युतरणं फलं, विद्याया अमृतत्वमिति फलभेदप्रदर्शकत्वं वेत्युपपत्तेरित्याशङ्क्य निषेधति—न चैवमिति। अविद्यामुपासत इति छेदः। पूर्वार्धेन केवलस्य कर्मणोऽनुष्ठाने निन्दा, ततः-पूर्वोक्तात् भूय इव-अधिकमिव तमः ते प्रविशन्ति। य उ-ये तु विद्यायां केवलायां रता इत्यर्थकेनोत्तरार्धेन केवलविद्यानिन्देति विवेकः। तत्परत्वेति। समुच्चयपरत्वेत्यर्थः॥

किमर्थं तर्ह्युभयनिन्देत्याशङ्क्य केवलविद्यानिन्दा कोमलज्ञानस्यापक्वकषायस्य कर्मावश्यकत्वपरा, केवलकर्मनिन्दा तु दृष्टान्तार्थेत्यभिप्रेत्य तत्सिद्धये प्रथमं केवलकर्मनिन्दापरं वाक्यं दर्शयति—असुर्या नामेति। श्रुतेरयमर्थः—असुर्या नाम—असुरसंबन्धिनः प्रसिद्धा ये

[1] वाक्यमसमुच्चित—घ. च. कुं.

इति भेददर्शनापेक्षकर्मानुष्ठायिनो निन्दित्वा—

"यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः"॥

इति केवलविद्यया मोक्षेऽभिहिते केवलकर्मरतनिदर्शनेनापक्वकषायस्यैव—

रत्नतूलिका

आत्मविद्याशून्यानां लोकाः—श्वसूकरादिदेहविशेषाः ते अन्धेन तमसा—अहंममाभिमानादिरूपेण आवृताः ये आत्महनः आत्मानं—चिदात्मानन्दरूपं घ्नन्ति—भेददर्शनघनाभिलाषादिना तिरस्कुर्वन्ति ते प्रेत्य तान् लोकानभिगच्छन्तीति निन्दायां हेतुगर्भं विशेषणम्। भेददर्शनापेक्षेति। तस्यैव सर्वानर्थमूलत्वादिति भावः। नन्वपक्वकषायस्य वा कुतो यावज्जीवविहितकर्मणां त्यागप्रसक्तिः, येन तन्निन्दया कर्मावश्यकतापरत्वं स्यादित्याशङ्क्य तत्प्रसञ्जकं दर्शयति —यस्मिन्सर्वाणीति। यस्मिन्—काले सर्वाणि भूतानि आत्मैवाभूत् विजानतः—सर्वस्याप्यविद्यामात्रतया विज्ञानमात्रेणात्ममात्रपरिशेषमभूदित्यर्थः। तत्र—तदा को मोहः—आत्मावरणरूपः, कः शोकः—तन्निमित्तविक्षेपः। विज्ञानस्वरूपमाह —एकत्वमनुपश्यत इति। इति श्रुत्यर्थः। "अन्धं तमः प्रविशन्ति" इत्यादिपूर्वार्धार्थो दृष्टान्तत्वेनोपात्त इत्याह—केवलेति। केवलकर्मरतो यथा अन्धं तमः प्रविशति एवमपक्वकषायः कर्मत्यागीति निदर्शनेनेत्यर्थः। अपक्वकषायस्यैव कर्मावश्यकतापरत्वादिति प्रथम-

"मोहात्तस्य परित्यागस्तामसः परिकीर्तितः।
दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत्।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्"॥

इति स्मृतिदर्शनात् ब्रह्मविद्यापदेशेनालस्यात्कर्मत्यागनिन्दया कषायपाकावधि कर्मावश्यकतापरत्वात्। अनन्तरमेव "अविद्यया मृत्युं तीर्त्वा" इति तदाशयोद्घाटनात्॥

तथा च स्मृतिः—

"तपो विद्या च विप्रस्य नैःश्रेयसकरं परम्।
तपसा कल्मषं हन्ति विद्यया च विमुच्यते"॥

रत्नतुलिका

मन्वयः। तर्हि कषायपाकानन्तरमपि स्यादित्यत आह—कषायपाकावधीति। तेषां कषायपाकार्थतयानन्तरं तदनुष्ठाननियमाभावादिति भावः। कर्मत्यागनिन्दयेति। विद्यारतत्वं—तत्रैव तात्पर्यवत्त्वम्, तच्च कर्मत्यागमन्तरा न संभवतीति तेषां निन्दा त्यागनिन्देति पर्यवस्यतीति भावः। एतादृशत्यागो निन्दित इत्यर्थे गीतावाक्यं दर्शयति —मोहात्तस्येति। तस्य कर्मण इत्यर्थः। विधितः परित्यागो न दोषायेति भावः। यत् त्यजेत्—यस्त्यजेदित्यर्थः। ब्रह्मविद्यापदेशेनेति। केवलविद्याया मुक्तिहेतुत्वस्य पूर्वप्रतिपादनात्तदपदेशेन त्यागप्रसक्तिरिति भावः। कुत एवं व्याख्यायत इत्यत आह—अनन्तरमेवेति। विविदिषाविरोधिदुरितरूपमृत्युतरणे कर्मणामुपयोगकथनेन कषायपाकावधिकर्मावश्यकतातात्पर्याविष्करणादिति भावः॥

निःश्रेयसमेव नैःश्रेयसम्। समुच्चयभ्रान्तिं वारयति—तपसेति। कल्मषं—विविदिषाविरोधिदुरितम्। ननु "तपो विद्या च" इति स्मृतौ

इत्याद्या। न च विद्यानन्तरमुपेयप्राप्तिविरोधि किंचित्कर्मा-न्यद्वा कर्म कर्तव्यमस्ति। विद्यासामर्थ्यादेव कर्माविद्या-विदाहादित्युक्तम्। अन्यथा "अन्यदेवाहुः" इत्यादिफल-भेदोक्तिविरोधात्। योग्यत्वात्सहेत्येव पदं साम्प्रदायिकमाश्रित्य सगुणविद्यासमुच्चयोऽनेन विधीयत इत्यपि भगवत्पादाः। केवलब्रह्मविद्यायां तु दुरितनिवृत्त्यादिद्वारैवं कर्माण्युपकुर्वन्ति।

## रत्नतूलिका

तपःशब्दोदितस्य कर्मणो मुक्तिहेतुत्वमभिधायानन्तरं "तपसा कल्मषं हन्ति" इत्युक्ते कल्मषशब्देनोपेयप्राप्तिविरोधि कल्मषमेवोच्यते, न तु विविदिषाविरोधीति कथं स्मृतेरुक्तार्थे मानतेत्यत आह—न च विद्यानन्तरमिति। कर्मादृष्टं अन्यत् दृष्टं वा नास्तीत्यर्थः। तत्र हेतुः—विद्यासामर्थ्यादेवेति। "निचाय्य तं मृत्युमुखात्प्रमुच्यते" "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते" इत्यादिश्रुतिस्मृतीनां शतशो दर्शनादिति भावः। कर्मरूपाविद्या कर्माविद्या। इत्युक्तमिति। कर्मणां विषयज्ञानोपयोगाभावकथनावसर इति शेषः। तथा च तेषां निःश्रेय-सकरत्वं विविदिषाप्रणाड्याप्युपपद्यत इति भावः। अन्यथेति। दुरितनिवृत्त्या मुक्त्यर्थत्व इत्यर्थः। ननु विद्यां चेति श्रुतेरित्थं व्याख्यानं भाष्यविरुद्धमित्यतस्तात्पर्यमाह—योग्यत्वादिति। वेदे "सह नाववतु" "सर्वान्कामान् सह" इत्यादौ एकपदत्वेनात्रापि तथैव प्रत्येतुं योग्यत्वादित्यर्थः। साम्प्रदायिकमिति। ईशावास्योपनिषदः संहितान्तर्गतत्वेन पदकाले एकपदत्वेनैव विभागस्य परम्पराप्राप्तत्वादिति भावः। निर्गुणविद्याविषये तु अस्मदुक्तरीतिरेव तेषामप्यभिमते-त्यभिप्रेत्याह—केवलेति। दुरितनिवृत्त्यादीत्यादिपदेन विविदिषा गृह्यते। ननु कर्मणामुपेयप्राप्तिविरोधिदुरितनिवृत्ताविव न विविदिषा-

स्मृतावपि—

"कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" ॥

इत्यत्र कषाये विरोधिदुरितमूलरागादौ क्षपित इत्येव पर्याप्तौ तत इति ग्रहणं विविदिषाव्यवधिं दर्शयति ॥

"तदर्थमुक्तं तप एतदिज्या ताभ्यामसौ पुण्यमुपैति विद्वान् ।
पुण्येन पापं विनिहत्य पश्चात्स जायते ज्ञानविदीपितात्मा ॥
ज्ञानेन चात्मानमुपैति विद्वान्"

रत्नतूलिका

विरोधिदुरितनिवृत्तावप्युपयोगः, किं तूपायविरोधिदुरितनिवृत्तावेव, स्मृतौ तथा दर्शनादित्यत आह—**स्मृतावपीति** । कषायः—पापं तन्मूलकविषयरागादिर्वा, तस्य पक्तिः—नाशः, तत्साधनानि कर्माणीत्यर्थः । ज्ञानं च परमा गतिः—तत्साधनम्, उभयत्र कारणे कार्योपचारः । अत्र कर्मभिः कषाये पक्वे ज्ञानं प्रवर्तत इत्युक्त्या तद्विरोधिदुरितनिवर्तकत्वमिति शङ्कितुरभिमानः । **पर्याप्ताविति** । तावतैव साध्यसाधनभावावगमादिति भावः । **विविदिषाव्यवधिमिति** । तत इति न हेतुत्वाभिप्रायम्, किं तु कषाये पक्वे विविदिषा, अनन्तरं ज्ञानमिति विविदिषया ज्ञानकर्मणोर्व्यवधानाभिप्रायमिति भावः ॥

स्मृत्यन्तरेऽप्येवमेवेत्यभिप्रेत्य तदप्युदाहरति—**तदर्थमिति** । तदर्थं—ज्ञानार्थं, तपश्च एतस्य—परमात्मन इज्या च, ताभ्यां-तप इज्याभ्यां पुण्यम्—आश्रमादिविहितं कर्म उपैति विद्वान्—अनुष्ठेयज्ञानवान् पुण्येन पापं—विविदिषाविरोधिदुरितं विनिहत्य पश्चात्—विविदिषानन्तरं ज्ञानेन

इत्यादौ च पश्चाद्ग्रहणमुक्ताभिप्रायम्। अन्यथा तत इति पश्चादिति च वैयर्थ्यात्॥

### एष ह्येवेत्यादिश्रुतितात्पर्यतः कर्मणां विविदिषार्थत्वम्

"एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति" इत्यत्र यद्यप्युन्निनीषा भगवतोऽपवर्गप्रापिपयिषैव, तथापि न तदुपायतयैव कर्मणामनुष्ठापनमीशस्य।

"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"॥

इत्यादिकर्मापवर्गोपायत्वनिषेधात्। न च ज्ञानप्रतिपदोऽर्चिं-

### रत्नतूलिका

विदीपितः—प्रकाशित आत्मा यस्य स जायत इत्यर्थः। उक्ताभिप्रायमिति। विविदिषाव्यवधानाभिप्रायमित्यर्थः। कथमित्थमवगम्यत इत्यत आह—अन्यथेति। तयोः प्रयोजनान्तराभावादिति भावः॥

ननु "एष ह्येव" इति श्रुतौ कर्मणां मुक्त्युपायत्वं प्रतीयत इत्याशङ्क्य तस्यास्तात्पर्यं दर्शयति—एष ह्येवेति। अथापि मुक्तौ कर्मणां न साधनत्वमिति वक्तुं उन्निनीषतीत्यत्रापवर्गं प्रापिपयिषतीत्यर्थमङ्गीकरोति—यद्यपीति। अपवर्गप्रापिपयिषैव, न तु नरकादिनिनीषा; एभ्यो लोकेभ्य इति। परिदृश्यमानलोकेभ्य उन्निनीषाया नरकादिप्रापिपयिषारूपत्वाभावादिति भावः। किं मुक्त्युपायत्वज्ञानजननेन ईश्वरोऽनुष्ठापयति, किंवा अनिलादिवदिति विकल्प्याद्य आह—तदुपायतयैवेति। मुक्त्युपायतयैवेत्यर्थः। तमेव विदित्वा मृत्युमत्येतीति श्रुतौ योजना। कर्मेति। कर्मणामपवर्गोपायत्वस्य "नान्यः पन्थाः" इति निषेधादित्यर्थः। ननु नोपायान्तरनिषेधपरेयं श्रुतिः, किं तु मार्गान्तरनिषेधपरेत्याशङ्क्य निषेधति—न च ज्ञानप्रतिपद इति। ज्ञानं अन्त्यप्रत्ययः प्रतिपत्—प्रथमं यस्य मार्गस्य

रादिकादन्योऽध्वा ब्रह्मगमनाय निषिध्यते, न कर्म साधनान्तरमिति वाच्यम्। "तमेव विदित्वा" इत्यत्रावधारणोपादानात्। तत्र ज्ञानोपक्रमादर्चिरादेरन्य इत्यधिकावापस्यामूलत्वाच्च। मुक्तौ कर्माद्यनुपयोगस्योक्तत्वाच्च ॥

नापि दारुयन्त्रमिव चेतनमाविष्टभूत इवेशः कारयति; अबुद्धिपूर्वकत्वे कर्मनिमित्तसंसारभोगानुपपत्तेः। किं तु समीहितसाधनतया कार्यताबुद्धिजननेन।

"यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम्"

## रत्नतूलिका

तस्मादित्यर्थः। अवधारणेति। अवधारणेन ज्ञानस्योपादानादित्यर्थः। तथा च विषयावधारणयत्नपूर्वकमेकस्योपायस्योपादाने तत्समभिव्याहृतान्यनिषेधस्य कृत्स्नोपायान्तरविषयत्वावश्यम्भाव इति भावः। किं च मार्गनिषेधपरत्वे अधिकावापदोषः स्यादित्याह—तत्र ज्ञानोपक्रमादिति। अधिकेति। पूर्वानुपस्थितस्यार्चिरादिमार्गस्यान्यपदार्थप्रतियोगित्वेन ज्ञानस्येत्यर्थः। उपायनिषेधे तु पूर्ववाक्ये ज्ञानस्योपात्तत्वात्तदितरसामान्यनिषेधे पर्यवस्यतीत्यनधिकावाप इति भावः। ननु कर्मणां मुक्त्यनुपयोगे प्रामाणिके अधिकावापो न दोषायेत्यत आह—मुक्ताविति ॥

द्वितीयं दूषयति—नापीति। दारुयन्त्रमिवेति व्यतिरेकदृष्टान्तः। दारुयन्त्रमाविष्टभूतो यथा कारयति तद्वच्चेतनमीश्वरो न कारयतीत्यर्थः। अबुद्धिपूर्वकं कारयतीत्यत्र दृष्टान्तः—आविष्टेति। समीहितेति। इदं मम समीहितसाधनत्वात्कार्यमिति बुद्धिजननेनेत्यर्थः। नन्वस्तु ज्ञानजननेनेश्वरस्य कारयितृत्वम्, तथापि मुक्तिलक्षणसमीहित-

इति स्मृतिलिङ्गात्। तदयमर्थः—यं कंचिदुन्निनीषन् भगवान् मुक्त्युपायविद्याभिरुचीच्छामुत्पाद्य तादर्थ्येन साधु कर्म कारयति। तस्माद्विरोधिदुरितनिवर्तनेन निःश्रेयसोपायविद्यार्थप्रवृत्त्युपयोगिविविदिषोदयमात्रावसानानि कर्माणि विद्यातः सुदूरमपव्यस्यन्ते ॥

अथाप्यदृष्टद्वारा विद्यावसानान्येव कर्माणि, तथापि न ब्रह्मविचाराव्यवहितपूर्वसमयविचारणीयानि, चित्रादिवदनियत-

रत्नतूलिका

साधनतया कार्यताबुद्धिजननेन तत्किं न स्यादित्यत आह—तदयमर्थ इति। विद्याभिरुचीति। विद्याभिरुचिरूपविविदिषाविषयिणीमिच्छामित्यर्थः। तादर्थ्येन विविदिषार्थत्वेन। तस्माद्विविदिषारूपेण विद्यारूपेण वा मुक्तिरूपेण वा फलेन समीहितसाधनतया कार्यताबुद्धिजननेनेश्वरस्य कर्मानुष्ठापयितृत्वे सम्भवत्यपि विविदिषायां कर्मणां विनियोजकश्रुत्यनुसारेण विविदिषाफलेनैव तदिति तज्जनन एवोपक्षीणानि कर्माणीति न विद्यापर्यन्तं धावन्ति। नतरां मुक्तिपर्यन्तम्। अतो जन्मान्तरानुष्ठितैरपि तैर्विरोधिनिवर्तनद्वारा विविदिषाजननोपपत्तौ न ब्रह्मविचारात्पूर्वं नियमेन तद्विचारसिद्धिरित्यभिप्रेत्योपसंहरति—तस्माद्विरोधीति। विविदिषाविरोधीत्यर्थः। विद्योपयोगिन्यां विविदिषायामपि न साक्षादुपयोगः, अपि तु तद्विरोधिपापनिवर्तन इत्यभिप्रेत्य सुदूरमित्युक्तम् ॥

अदृष्टद्वारेति। विद्याविरोधिदुरितनिवर्तनेऽपि तस्य द्वारत्वादिति भावः। चित्रादिवदिति। "चित्रया यजेत पशुकामः", "उद्भिदा यजेत पशुकामः" इत्यादिविधिभिः पश्वर्थतया विहितयागवदित्यर्थः। अनियतेति। इहजन्मनि जन्मान्तरे वेत्यनि-

फलतयातिक्रान्तजन्मान्तरशताचरितैरपि तैरदृष्टद्वारे सति धर्मक्षपितदुरिततया न्यग्भूतरजस्तमोमलचित्तसत्त्वस्य प्रत्यक्षोपपत्त्यादिमूलविवेकवैराग्यादिशालिनो दृढतमविविदिषायामुज्झितसकलकर्मलिङ्गस्य विचारादिभिरेव विद्योत्पत्त्युपपत्तेः ॥

## रत्नतूलिका

यतत्वमित्यर्थः। त्रिविधं कर्मणां फलम्, किंचिदामुष्मिकं यथा—ज्योतिष्टोमादिफलं स्वर्गादि, किंचिदैहिकं यथा—कारीर्यादिफलं वृष्ट्यादि, किंचिदनियतं यथा—चित्रादिफलं पश्वादीति। तेषां चानियतफलत्वं पूर्वतन्त्रे चतुर्थाध्याये तृतीयपादे "योगसिद्धिर्वार्थस्योत्पत्त्ययोगित्वात्" इत्यधिकरणे व्यवस्थापितमिति भावः। अस्तु विद्यारूपफलस्यानियतत्वम्, ततः किमित्यत आह—अतिक्रान्तेति। अदृष्टेति। तस्य फलैकनाश्यतया यावद्विरोधिदुरितनिवृत्त्यवस्थाननियमादिति भावः। धर्मक्षपितेति। "धर्मेण पापमपनुदति" इति श्रुतेरिति भावः। स्वविवृद्धिहेतु[1]पापनिवृत्तौ सम्यग्ज्ञानप्रतिबन्धकरजस्तमसोर्न्यग्भाव इत्यभिप्रेत्याह—न्यग्भूतेति। न्यग्भूतरजस्तमोमलं चित्तसत्त्वं यस्य तस्येत्यर्थः। रजस्तमसोः सम्यग्ज्ञानविरोधित्वं सत्त्वस्य तद्धेतुत्वं च गीतायामुक्तम्—

"सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च" ॥ इति ॥

प्रत्यक्षेति। तत्तद्वस्तुनाशविषयकप्रत्यक्षेण कारणस्य कार्यरूपेण रूपान्तरमापन्नस्य पुना रूपान्तरेणावस्थानमुपपन्नमित्युपपत्त्या च विवेकवैराग्यादिकं जायत इत्यर्थः। उज्झितेति। त्यक्तयज्ञोपवीतादेः कृतसन्न्यासस्येति यावत्। विचारादिभिरिति। मनननिदिध्यासने आदिपदग्राह्ये। अत्र कर्मानुष्ठाननिवृत्तिरेवकारार्थः ॥

---

[1] पापनिवृत्तौ–क.

अथ विद्यापरिपाकपर्यन्तोपायानुष्ठानौपयिकविविदिषानुच्छेदायैव निवर्तनीयदुरितानन्त्ये तदा तदाङ्कुरत्तत्दुरितनिवृत्तये तत्र सन्न्यासश्रवणादिनियमवत्कर्मणामपि सहाचरणं स्यादिति चेत्, तत्र यदि प्रकृतिसम्बन्धापगमे नित्यविज्ञानेन ब्रह्मस्वरूपगुणविभवानुभवावधिर्विद्याविपाक इत्युच्येत, न तावत्कर्माचरणसंभवः; देहादुत्क्रान्तस्य लिङ्गमात्रानुगतस्य तदयोगात् ॥

## रत्नतूलिका

सिद्धान्त्यभिमतविविदिषाविनियोगाविरोधेनैव कर्मणां विद्यया समुच्चित्यानुष्ठानमाशङ्कते—अथ विद्यापरिपाकेति। अयमर्थः—विद्यापरिपाकस्तावदवश्यापेक्षणीयः। स च नादृष्टमात्रसाध्यः, किंतु दृष्टोपायानुष्ठानसाध्यश्च। तदनुष्ठानं च जन्मान्तरसुकृतैरुत्पन्नाया विविदिषाया विच्छेदे सति न भवति। तदविच्छेदश्च [1]तद्विच्छेदकरदुरितनिवृत्त्यधीनः। तच्च दुरितमनन्तमनियतकालाङ्कुरं च। अतस्तदा तदाङ्कुरत्तत्तन्निवृत्तये विद्यापरिपाकावधि कर्माण्यनुष्ठेयानीति। सन्न्यासेति। विविदिषानन्तरं क्रियमाणसन्न्यासस्य श्रवणनियमस्य च तदा तदाङ्कुरद्दुरितनिवृत्तिमन्तरा फलान्तराभावादिति भावः। तथा च कर्मणां विद्याका[2]लाननुष्ठेयत्वे तयोरपि तथात्वं स्यादिति भावः। किं विद्याया विपाको नित्यविज्ञानेन ब्रह्मस्वरूपाद्यनुभवावधिर्विवक्षितः, किं वा प्रायणावधिः, अथवा दर्शनरूपापत्त्यवधिरिति विकल्प्याद्यं दूषयितुमाशङ्कते—तत्र यदीति। प्रकृतिः—कर्मविद्या, ब्रह्मगुणाः—अपहतपाप्मत्वादयः, विभवः—विशेषणभूतचिदचिद्वर्गः। दूषयति—न तावदिति। तावत्कालमनुष्ठानस्यासम्भवमुपपादयति—देहादिति। तदयोगादिति। कर्मानुष्ठानायोगादित्यर्थः ॥

---

[1] तद्विच्छेदकदुरित—कुं. [2] लानुष्ठेयत्वे—च.

न चोत्क्रामत एव ब्रह्मप्राप्तिः; विदुषः सम्परायकाल एव सर्वकर्महानात्रपि विद्यया ब्रह्मप्राप्तौ देवयानपथिकस्य लिङ्गशरीरस्थित्युपगमात्। नापि प्रायणावधिर्विद्याविपाकः; तदुत्त[1]राघासंभवेन तदश्लेषवचनविरोधात्। नापि दर्शनरूपापत्त्यवधिः; अधिमात्रतीव्रसंवेगानामासन्नतमायां दर्शनरूपापत्तौ

रत्नतूलिका

ननु देहादुत्क्रान्तिपर्यन्तमनुतिष्ठत्येव, अनन्तरं च निरतिशयविकासि ज्ञानमिति, अन्तरालेऽनुष्ठानासम्भवकालाभावान्नोक्तदोष इत्याशङ्क्य निषेधति—न चोत्क्रामत एवेति। सम्परायकाले मरणकाल इत्यर्थः। स्थित्युपगमादिति। अन्यथा देहादुत्क्रान्तमात्रस्य ब्रह्मस्वरूपाद्यनुभवोपपत्तौ मुक्तैर्लोकान्तरगमनसाध्यत्वाङ्गीकारो व्यर्थः स्यात्, अतस्तत्र गमनपर्यन्तं लिङ्गभङ्गो नास्तीति वाच्यमिति भावः। द्वितीयं दूषयति—नापि प्रायणेति। वचनविरोधादिति। "तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" इति वचनविरोधादित्यर्थः। तृतीयं दूषयति—नापीति। अधिमात्रेति। ये सांसारिकदुःखे अत्यन्तासहिष्णुतया झटिति विद्याविपाकमिच्छन्तस्तदुपायमत्यन्तयत्नेनानुतिष्ठन्ति तेऽधिमात्रतीव्रसंवेगा इत्यर्थः। आसन्नतमायामिति। अल्पकालसाध्यायामित्यर्थः। एतच्च परिपक्वविद्याया एव विरोधिपापनिवर्तकत्वं, न तु कोमलाया इत्यङ्गीकृत्योक्तम्। वस्तुतस्तु विद्यामात्रस्यैव तन्निवर्तकत्वमित्युक्तं

[1] राघसम्भवेन—क.

विद्याकर्मणोराप्रायणानुष्ठेयत्वोपगमाविरोधात् । अपि च विद्यात्मक एव परमधर्मे सकलदुरितघस्मरे किं कर्मणेत्युक्तम् । तथा च स्मृतिः—

"इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्" ॥ इति ।

"आत्मलाभान्न परं विद्यते" इति च । अपि च प्राप्ते समुच्चये तादात्त्विकदुरितनिवृत्तिः प्रयोजनमित्युपपत्तिमात्रम् ।

रत्नतूलिका

मा विस्मार्षीरित्याह—अपि च विद्यात्मक इति । सकलदुरितघस्मरत्वे हेतुगर्भं विशेषणं—परमधर्म इति ॥

तत्र याज्ञवल्क्यस्मृतिं प्रमाणयति—इज्याचारेति । "इज्यादीनां कर्मणामयमेव परमो धर्मः । यद्योगेन—बाह्यचित्तवृत्तिनिरोधेन, आत्मदर्शनं—याथातथ्यज्ञानम्" इति विज्ञानेश्वरयोगिना आत्मज्ञानसामान्यपरतया व्याख्यातत्वादिति भावः । आपस्तम्बसंमतिमप्याह—आत्मलाभादिति । अज्ञानेनालब्धवत्स्थितस्यात्मनो ज्ञानेनैव लाभ इति ज्ञानस्य परमधर्मत्वे इदं प्रमाणमिति भावः । उपपत्तिमात्रमिति । न तु समुच्चयस्य प्रापकम्; समुच्चयसिद्धेः पूर्वं विविदिषाविच्छेदद्वारा विद्याविपाकविरोधि दुरितमनन्तम्, तच्च तदा तदाङ्कुरति, कर्मनिवर्त्यं चेत्यस्यैवासिद्धेः । अतः प्रतीतसमुच्चयोपपत्तये सर्वं कल्पनीयम् । यथा ज्योतिष्टोमादेः स्वर्गादिकालान्तरीयफलहेतुत्वे प्रतीते तस्योपपत्तये अस्त्यपूर्वमीश्वरप्रसादो वा द्वारम्, तच्च फलपर्यन्तावस्थायीति कल्प्यते तद्वदित्यर्थः । अस्त्येवात्रापि समुच्चय-

प्राप्तिरेव तु वक्तव्या। यज्ञादिश्रुतिस्तावत्फलपर्यन्तप्रवृत्तिहेतु-तीव्रतमविविदिषासम्पन्नं नाधिकर्तुमलम्; तदेकफलत्वे कर्मणो लब्धफलाधिकारिकत्वायोगात् ॥

न च विद्योपायमनुतिष्ठत एव नवनवा विविदिषा कल्प्या; वैयर्थ्यात्तस्याः प्रवृत्तिहेतोरेवाफलानुवृत्त्युपपत्तेः। न च विषय-रागान्तराये विद्यानुष्ठानसन्धानाय विविदिषान्तरं कल्प्यम्;

## रत्नतूलिका

प्रापकं तमेतमित्यादिवाक्यमित्यत आह—यज्ञादिश्रुतिरिति। किं यज्ञादिश्रुत्या संयोगपृथक्त्वेन विहितैः प्रवृत्तिहेतुविविदिषोत्पाद्यते, अतस्तेषु तत्कामोऽधिकारी, किं वा प्रवृत्तस्य विद्यामनुतिष्ठतोऽपि नवनवा विविदिषा अपेक्षिता, अतस्तत्कामोऽधिकारीति विकल्प्याद्यं दूषयति—फलपर्यन्तेति। फलपर्यन्ता या प्रवृत्तिस्तद्धेतुभूता तीव्रतमा या विविदिषा तत्सम्पन्नमित्यर्थः। तदेवोपपादयति—तदेकफलत्व इति। तथा च तादृशविविदिषायामुत्पन्नायामनन्तरं कर्मानुष्ठाने प्रयोजनाभावाद्विद्यानुष्ठानकाले कर्मणामप्रसक्तेर्न समुच्चयसिद्धिरिति भावः॥

द्वितीयमसिध्या दूषयति—न च विद्योपायमिति। मध्ये विविदिषान्तरकल्पनं किं फलपर्यन्तानुष्ठानसिद्धये, किं वा तस्य विच्छेदे सति सन्धानायेति विकल्प्याद्य आह—वैयर्थ्यादिति। तदेवोप-पादयति—तस्या इति। कर्मभिरुद्दिश्या विविदिषा न लौल्यमात्राव-साना; तस्या विषयसौन्दर्यज्ञानमात्रेण संभवात्, किं तु फलपर्यन्त-प्रवृत्तिहेतुभूताभिरुचिरूपा, सा च फलपर्यन्तमनुवर्तत इति मध्ये विविदिषान्तरकल्पनं व्यर्थमिति भावः। द्वितीयं निषेधति—न चेति।

निरवशेषविमृष्टविषयरागकषायस्यैव ब्रह्मविद्याधिकारात्। साक्षात्कारपर्यन्तविद्यास्वरूपोपकारित्वेऽपि कर्मणां विरोधिनिवृत्तिद्वारस्य व्यवधानेऽपि संभवेन समसमयानुष्ठानानियमात् ॥

### आत्मक्रीड इत्यादिश्रुत्यर्थविवरणम्

"आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः।"
इति न या काचिदेव क्रिया विहितक्रिया वोच्यते, येन रति-

### रत्नतूलिका

विषयरागेणान्तराये—विघ्ने सतीत्यर्थः। निरवशेषेति। अत्र पुनरुद्भवशङ्कापरिहाराय निरवशेषविमृष्टेति विशेषणम्। विषयराग एव कषायः। तत्र कषायत्वोक्तिः विविदिषाहेतुभिः प्राचीनैः कर्मभिस्तत्पाकोऽवश्यवाच्य इत्यभिप्रायेण "कषायपक्तिः कर्माणि" इति वचनस्फोरणार्था। तथा च विवेकादीनामधिकारिविशेषणानां पूर्वपूर्वविशेषणापादितस्यैवोत्तरोत्तरस्य ब्रह्मविद्याधिकारहेतुत्वान्मुमुक्षानुषङ्गसिद्धायां विविदिषायां सत्यां वैराग्यं पूर्वमवश्यमङ्गीकार्यमिति भावः। साक्षात्काररूपापत्त्यवधिर्विद्याविपाक इति तृतीयपक्षे तस्याः स्वल्पकालसाध्यत्वेन विद्याकर्मणोराप्रायणमनुष्ठानं न स्यादिति दूषणमुक्तम्, इदानीमधिककालसाध्यत्वेऽपि न कर्मणां समुच्चित्यानुष्ठानानियम इति सिंहावलोकनेन तत्रैव दूषणान्तरमाह—साक्षात्कारेति। व्यवधानेऽपीति। कालान्तरव्यवधानेऽपीत्यर्थः ॥

या काचिदेवेति दृष्टान्तार्थम्। विहितेति। आश्रमार्थतया विहिताग्निहोत्रादिरूपेत्यर्थः। अन्यथा सिद्धान्ते श्रवणादेरपि विहितत्वान्निषेधानुपपत्तिरिति बोध्यम्। रतिशब्दोदितेति। उपासनारूपज्ञानस्य

शब्दोदितज्ञानसहभावो गम्येत। किं तु श्रवणनिर्वृत्तविज्ञानो मननं कुर्वन्नात्मक्रीड उच्यते। स्वपक्षविपक्षपरिष्कारतिरस्कारानुगुणनानायुक्तिप्रतिसन्धानं हि तर्करसिकचित्तस्य क्रीडनमिव भवति। निदिध्यासनमेव स्वादुतापन्नं रतिरुच्यते। तान्येतानि श्रवणादीनि क्रियान्तरसमुच्चयव्यावर्तनेन फलविवक्षयानूद्यन्ते क्रियावानेष इति ॥

रत्नतूलिका

रत्यात्मकत्वं पूर्वमेवोक्तमिति भावः। ज्ञानसहभाव इति। कर्मणामिति शेषः। विहिताविहितक्रियाव्यतिरेकेण क्रियान्तराभावात् क्रियावानिति किं स्यादिति शङ्कते—किं त्विति। तस्य सन्निहितश्रवणादिरूपक्रियाविशेषे पर्यवसानं वक्तुं श्रवणादीनां सन्निहितत्वस्फोरणायात्मक्रीड इत्यादेरर्थमाह—श्रवणेति। मननस्य श्रवणं विनानुपपत्तेर्मनने शब्दत उपात्ते श्रवणमपि बुद्धौ सन्निहितमित्यभिप्रेत्य श्रवणनिवृत्तविज्ञान इत्युक्तम्। ननु क्रीडाशब्देन कथं मननस्योक्तिरित्यत आह—स्वपक्षेति। क्रीडनमिवेति। तथा च चित्तविनोदकारित्वलक्षणगुणयोगान्मनने क्रीडाशब्दो गौण इति भावः। स्वादुतेति निदिध्यासने रतिशब्दवृत्तौ निमित्तस्य गुणस्य कीर्तनम्। श्रवणस्यापि सन्निहितत्वादाह—तान्येतानीति। तेषामनुवादस्य तत्रापि क्रियापदेनोपादानस्य च प्रयोजनमाह—क्रियान्तरेति। क्रियापदेनोपादाने हि इयमेव क्रिया, नान्या विधया समुच्चित्यानुष्ठेया क्रियास्तीति तद्व्यवच्छेदो भवतीति भावः। अनुवादफलमाह—फलविवक्षयेति ॥

तस्येदं फलमाह—ब्रह्मविदां वरिष्ठ इति। श्रवणनिर्वृत्तौ ब्रह्मवित्। मननप्रतिष्ठायां ब्रह्मविद्वरः, विषयासंभावनादिनिवृत्त्या स्थिरीकृतज्ञानत्वात्। [1] निध्यानपरिपाके च तद्वरीयान्, तस्यैव साक्षात्कारकल्पत्वात् ॥

रत्नतूलिका

अन्यत्र फलविवक्षायामत्रानुवादो ऽनर्थ इत्यतः फलपरत्वेनोत्तरमंशमवतारयति—तस्येदमिति। क्रियावत इत्यर्थः। क्रियावानिति फलविवक्षया त्रयाणामनुवाद इत्यसङ्गतम्; निदिध्यासनानन्तरभाविनो ब्रह्मविद्वरिष्ठत्वस्य तन्मात्रफलत्वौचित्यादित्याशङ्क्य ब्रह्मविद्वरिष्ठत्वमंशतः श्रवणादित्रितयसाध्यम्, अतः सर्वेषामेव तत्फलमित्यभिप्रेत्य श्रवणादिसाध्यां तत्तदवस्थां दर्शयन् ब्रह्मविद्वरिष्ठ इत्येतद्व्युत्पादयति—श्रवणनिर्वृत्ताविति। ब्रह्मविद्वरत्वे हेतुमाह—विषयेति। मननविषयीभूतात्मगतासंभावनानिवृत्त्येत्यर्थः। अत्र ब्रह्मविदस्तद्वरस्य च द्वयोर्विभज्यत्वमिति द्योतयितुं "द्विवचनविभज्योपपदे तरबीयसुनौ" इति सूत्रविहितेयसुन्प्रत्ययः कृतः। वरीयस्त्वे हेतुमाह—तस्यैवेति। परिपक्वध्यानस्येत्यर्थः। साक्षात्कारकल्पत्वादिति। तदपेक्षया ईषन्न्यूनत्वादित्यर्थः। तत्सदृशत्वादिति यावत् ॥ नन्वेतावता कथं तस्य ब्रह्मविद्वरिष्ठत्वमुच्यते; ततोऽप्यतिशयस्य साक्षात्कारस्याभावात्। किं च ब्रह्मवित्त्वस्य श्रवणसाध्यत्वे, तद्वरत्वस्य मननसाध्यत्वे, तद्वरीयस्त्वस्य निदिध्यासनसाध्यत्वे च कस्याः क्रियाया इदं फलं स्यात्,

[1] ज्ञान—क.

एतदन्ता च दुर्लक्ष्यव्यवधिसाक्षात्कारफलावधिश्रवणादि-क्रियैका पर्यवसन्नेति तावतैव प्राप्तफलतया क्रियावानिति प्रशंसापरमतुप्प्रत्ययेन कर्तव्यसमाप्तिं सूचयित्वा तेषामेष वरिष्ठोऽभिधीयते, आत्मरतेः क्रियान्तराभावात् ।

"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥"

इति स्मरणात् ॥

रत्नतूलिका

अपि [1]चैतद्वचनेन किं फलम्, प्रवृत्तिनिवृत्त्यनुपयोगात्, स्तुतिमात्रस्य व्यर्थत्वादिति शङ्कानिरासायाह—एतदन्ता चेति । ध्यानपरिपाकान्ता चेत्यर्थः । दुर्लक्षः दुःखेन ज्ञातुं शक्यो व्यवधिर्व्यवधानं परिपक्वध्यानेन यस्य साक्षात्कारस्य तद्रूपफलावधिरित्यर्थः । अनेन तयोर्व्यवधानज्ञानाभावाद्ध्याने जाते साक्षात्कारो जातप्राय इति तद्वतो ब्रह्मविद्वरिष्ठत्वमुच्यत इति नोक्तदोष इत्युक्तं भवति । एतदन्ता श्रवणादिक्रिया एकैवेत्युक्त्या क्रियारूपभेदेऽपि फलैक्यादेकक्रियात्वे तस्या इदं फलमित्युक्तं भवति । तदुक्त्या किं फलितमित्यत्राह—तावतैवेति । साक्षात्कारकल्पध्यानमात्रेणेत्यर्थः । प्रशंसापरेति । यया श्रवणादिक्रियया आप्तव्यं फलमाप्तं सा प्रशस्तेति मतुबोऽर्थः । तेन कर्तव्यान्तरनिवृत्तिः सूचिता भवतीत्यर्थः । तेषामिति । ब्रह्मविदादीनां मध्य इत्यर्थः । एवं क्रियाशब्दः श्रवणादिक्रियापरः, तद्वत्त्वानुवादेन ब्रह्मविद्वरिष्ठत्वोक्त्या कर्तव्यान्तराभावः फलतीति श्रुतेः स्वाभिप्रायो दर्शितः । तत्रैव स्मृतिप्रदर्शनव्याजेन परोक्तमनुपपन्नमित्यभिप्रेत्याह—यस्त्वात्मरतिरिति । अत्र विशेषणत्रयेण श्रवणादिमा-

[1] चैतावद्वचनेन—च.

## यतः कर्माभावात् स खल्वित्यादि वाक्यस्य निर्गुणविद्याऽविषयत्वम्

"स खल्वेवं वर्तयन्यावदायुषम्" इति न निर्गुणविद्याविषयम्; लोकविशेषसम्पत्त्यनुबन्धात्प्रकृतदहरविद्याविषयत्वोपपत्तेः। अन्यथा "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इति विद्यार्थसन्न्यासविधिविरोधात्। न च तदाश्रम-

### रत्नतूलिका

नभिधीयते। तथा च "तस्य कार्यं न विद्यते" इति कण्ठत एवाभिधानात्परोक्तमनुपपन्नमिति भावः॥

ननु "स खल्वेवं वर्तयन्यावदायुषम्" इत्येवंशब्देन "आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्त्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः" इत्याद्युक्तविद्याकर्मणोः परामर्शादाप्रायणं तयोः समुच्चित्यानुष्ठानं वाच्यमित्यत आह—स खल्वेवं वर्तयन्निति। लोकविशेषेति। "ब्रह्मलोकमभिसम्पद्यते" इत्यादिनेति शेषः। निर्गुणविद्यायां "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते" इत्यादि[1]निषेधेन लोकविशेषसम्पत्त्यनुपपत्तेरिति भावः। इत्थमवश्यं वाच्यमित्याह—प्रकृतेति। निर्गुणविद्याविषयत्वे प्रकरणादुत्कर्षः स्यादिति भावः। लोक्यत इति लोकः—आत्मा। एतमेवेत्येवकारेण भूरादिलोकव्यावृत्तिः। विद्यार्थेति। लोकेच्छा—लोकप्राप्तीच्छा। तत्प्राप्तिश्च ज्ञानमात्रादेवेति सन्न्यासस्य विद्यार्थतया विधानमिति भावः। न च तदाश्रमेति। [2]सन्न्यासाश्रमतया विहितेत्यर्थः।

---

[1] निषेधे—क. [2] अत्र सन्न्यासाश्रमाङ्गतयेति स्यात्.

कर्मसमुच्चयो विद्यायाः स्यादिति शङ्क्यम्; विद्याङ्गसन्न्यासे शमदमादिव्यतिरेकेणानुष्ठेयकर्माभावात् "ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" इति श्रवणात् ।

"मुक्तेश्च बिभ्यतो देवा मोहेनापिदधुर्नरान् ।
अतस्ते कर्मसूद्युक्ताः प्रावर्तन्ताविचक्षणाः ॥
अतः सन्न्यस्य सर्वाणि कर्माण्यात्मावबोधतः ।
हत्वाविद्यां धियैवेयात्तद्विष्णोः परमं पदम् ॥"

इति भाल्लविश्रुतेः ।

"सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी ।"

## रत्नतूलिका

विद्याङ्गेति । सन्न्यासो द्विविधः विद्याङ्गभूतः आश्रमरूपश्चेति । तत्राश्रमरूपे कुटीचकादावनुष्ठेयकर्मसत्त्वेऽपि विद्याङ्गे पारमहंस्ये न तत्सत्त्वमिति भावः । उक्तेऽर्थे श्रुतिस्मृती दर्शयति—ते ह स्मेति । श्रुतौ पुत्रैषणाया वित्तैषणाया इति साधनैषणाव्यावृत्तिः । "पुत्रेणायं लोको जय्यः" इति श्रुत्या पुत्रस्याप्येतल्लोकजयसाधनत्वावगमात् । वित्तैषणाया इति वित्तसाध्यकर्मव्यावृत्तिः । लोकैषणाया इति साध्यलोकमात्रव्यावृत्तिः ॥

मुक्तेरिति । नराणामिति शेषः । मोहवशात्कर्मसु प्रावर्तन्त इति कर्माणि निन्दित्वा तस्य त्यागो मुक्तिहेतुरित्याह—अतः सन्न्यस्येति । आत्मावबोधतः अविद्यां हत्वेति सम्बन्धः । परमपुरुषप्राप्तिर्ज्ञानेनैव, न त्वर्चिरादिमार्गेणेत्यभिप्रेत्याह —धियैवेति । तद्विष्णोः परमं पदमियादिति भाल्लविश्रुतेरर्थः । मनसा सन्न्यासः—तदनुकूलसङ्कल्प-

"मोक्षस्य सर्वोपरमः क्रियाभ्यः ॥"
"स्नानं त्रिषवणं प्रोक्तं यतीनां तु त्रिदण्डिनाम् ।
न तत्परमहंसानां युक्तानामात्म[1]दर्शिनाम् ॥"
"नैव धर्मी न चाधर्मी न चैव हि शुभाशुभी ।"
"त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ॥"

"सत्यानृते सुखदुःखे वेदानिमं च लोकममुं च परित्यज्यात्मानमन्विच्छेत्" इत्यादिस्मृतेश्च । दृष्टार्थभिक्षाचरणादिषु च नियमानिष्टेः ॥

रत्नतूलिका

त्यागः । क्रियाभ्यः सर्वोपरमः—सर्वप्रकारेणाप्युपरमः । अथवा सर्वेत्यविभक्तिनिर्देशः, सर्वाभ्यः क्रियाभ्य उपरम इति । अत्र "अर्थस्य मूलं निकृतिः क्षमा च" इति पूर्वपादान्मूलमित्यनुषङ्गेण उपरमो मोक्षस्य मूलमित्यर्थः पर्यवस्यति । युक्तानां—योगवताम् । तथा च परमहंसानां स्नानमपि निषिद्धम् । किमु वक्तव्यं तत्पूर्वकर्मानुष्ठानं निषिद्धमित्यत्रेति भावः । (शुभाशुभी) शुभं—सुखं, अशुभं—दुःखं, ते यस्य स्तः स इत्यर्थः । सत्यानृते इति स्मृतेरयमर्थः—सत्यं वक्तव्यमिति यो नियमस्तं, तथा—

"तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते"

इत्यादिके विवाहादिरूपे विषये अनृतं वक्तव्यमिति यो नियमस्तं च परित्यज्य, सुखं—मृष्टभोजनादिजन्यं, दुःखं—शीतवासादिजन्यं, वेदान्—स्वाध्यायाध्ययनं, इमं लोकममुं च—लोकद्वयसाधनीभूतं कर्म च परित्यज्यात्मानमन्विच्छेदिति । ननु भिक्षाचरणे अभिशस्तवर्जनत्रैवर्णिकाद्यन्नसङ्कल्पस्य विहितत्वात्तेन समुच्चयः किं न स्यादित्यत आह—दृष्टार्थेति । तन्नियमस्याश्रमसन्न्यासादिविषयत्वमिति भावः ।

---

[1] वेदिनाम्—ङ.

तच्छास्त्रैरिति स्मृत्युपपत्तिः

"तच्छास्त्रैर्विप्रतिषिद्धम्" इति सत्यादिवर्जनं प्रतिषिद्धमिति चेन्न; तस्य स्वयमेव विहितत्वात्। "सर्वतः परिमोक्षमेके" इति प्रक्रम्य सत्यादिवर्जनमुक्तमेकीयमतमिति चेत्, न; "तस्य मुक्तमाच्छादनं विहितम्" इत्युक्त्वा सर्वतः परिमोक्षवचनस्य वासोमात्रविषयत्वात्, प्राक्सत्यादेः स्वयमविहिततया

रत्नतूलिका

सत्यादिवर्जनमिति। तस्यापि प्रकृतत्वेन तच्छब्देन परामर्शादिति भावः। तस्य स्वयमेवेति। तथा च पूर्वापरविरोध इति भावः। अथ वा विहितप्रतिषेधाद्विकल्प इति भावः॥

ननु सर्वतो विधेर्निषेधस्य च परिमोक्षमेके वदन्ति, न तस्य कर्तव्यं वर्जनीयं वास्तीति सामान्यतः सर्ववर्जनमेकीयमतत्वेनोपन्यस्य, तदेव "सत्यानृते" इत्यादिना उदाहरणैः प्रपञ्च्य, ननु सर्ववर्जने किं त्राणमित्यपेक्षायां "बुद्धे आत्मनि क्षेमप्रापणम्" इत्यात्मज्ञानमेव त्राणमित्युपन्यस्य, "तच्छास्त्रैर्विप्रतिषिद्धम्" इत्येकीयमतनिरासान्न पूर्वापरविरोधदोष इत्यभिप्रेत्याशङ्कते—सर्वतः परिमोक्षमिति। अत्र सर्वशब्दो न विहितप्रतिषिद्धमात्रपरः; तेषामनुपस्थितत्वात्, किं तु पूर्ववाक्ये वासस उपात्तत्वात्तत्सर्वतापर इति परिहरति—न; तस्य मुक्तमिति। तस्य-परिव्राजः, मुक्तं-अन्येनानुपयुक्ततया त्यक्तं, यद्वस्त्रं तदाच्छादनं विहितमित्याच्छादनविशेषमुक्त्वा "सर्वतः परिमोक्षमेके" इत्युक्ते सर्वेषां वाससां परिमोक्षमेके उपदिशन्ति। न किंचिदपि वासो बिभृयान्नम

तद्वर्जनस्यैकीयमतत्वानुपपत्तेश्च । अपि च यदि सत्यादिवर्जनं तत्पदेन परामृश्य विप्रातिषिद्धमुच्यते । "सत्यं परं परं सत्यम्" इत्यादिना सत्यादीनि ज्ञानसाधनपर्वाण्यनुक्रम्य "तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्" इति नैष्कर्म्य-लक्षणस्य सन्न्यासस्योत्कर्षाभिधानं सत्याद्यवरसाधनहानेन परसाधनभूतसन्न्यासोपादानफलं न स्यात्, [1] तदुपादानमात्रस्य साधनत्वाभिधानादेवोपपत्तेरुत्कर्षोक्त्यनपेक्षत्वात् ॥

रत्नतूलिका

एव चरेदिति वासोमात्रपरिमोक्ष एव प्रतीयत इति भावः । एकीय-मतत्वानुपपत्तेरिति । वासःपरिमोक्षस्य त्वेकीयमतत्वेनोपन्यास उपपद्यते । वाससः पूर्ववाक्ये स्वेनैव विहितत्वादिति भावः । पूर्वापर-विरोधप्रसङ्गान्न तच्छब्देन सत्यादिवर्जनस्य परामर्श इत्युक्तम् । इदानीं सत्यादिवर्जनमेकैकं पराकर्तुं प्रथमं सत्यवर्जनस्य परामर्श इत्याह— अपि चेति । सत्यादीनीत्यादिशब्देन सत्यतपोदमशमादीनां परिग्रहः । ननु "न्यास एवात्यरेचयत्" इति सन्न्यासस्य सत्यादिरूपसाधनापेक्षया अतिरिक्तत्वलक्षणोत्कर्षाभिधानं नेतरसाधनहानफलम्, येन सत्यादि-वर्जनस्य शास्त्रविप्रतिषेधोक्तिमुखेन सत्यादीनां ज्ञानसाधनतयोपादेयत्व-प्रतिपादनपरस्मृतेः श्रुतिविरोधादप्रामाण्यं स्यात्, किं तु सन्न्यासस्यापि ज्ञानसाधनत्वप्रतिपादनफलम्, अतो न श्रुतिविरोध इत्यत आह — तदुपादानमात्रस्येति । तस्य सन्न्यासस्य [2] उपादानमात्रस्येत्यर्थः । अत्र मात्रशब्देन इतरसाधनहानव्यावृत्तिः । उत्कर्षोक्त्यनपेक्षत्वा-दिति । तथा [3] चानन्यथासिद्धेनोत्कर्षाभिधानेन सत्यादिसाधनान्तर-हान एव श्रुतेस्तात्पर्यमवगम्यत इति भावः ॥

---

[1] उपपादन—कुं. [2] उपपादन—कुं. [3] चान्यथा—क.

परमहंसस्य विधितो विधिनिषेधातिक्रमे दोषाभावः

न चैवं सत्यानृतादिविधिनिषेधातिक्रमे स्वैरचारी निरयमेवापद्येत, दूरे तस्य निःश्रेयसाधिगम इति वाच्यम्; विषयरसवशंवदहृदयो हि तादर्थ्येन सत्येव विधिनिषेधसम्बन्धे स्वच्छन्देन तमतिक्रामन्प्रत्यवेयान्निरयं चर्च्छेत् । विधित एव तु विधिनिषेधसम्बन्धमतिक्रान्तस्य दृष्टानुश्रविकनिखिलविषय-वितृष्णस्य संसारमहाविषभेषजब्रह्मविद्यैकप्रयोजननिखिलवाङ्-

रत्नतूलिका

निरयमेवेति । न तु तस्याभ्युदयोऽपीत्येवकारार्थः । नन्वात्म-ज्ञानाग्निना सर्वोऽपि प्रत्यवायो धक्ष्यत इत्यतः कैमुतिकन्यायेनाह—दूर इति । तथा च विधिनिषेधातिक्रमजनितप्रत्यवायमलीमस[1]चित्त-सत्वतया ज्ञानमेव नोत्पद्यत इति भावः । सत्येवाधिकारे स्वेच्छया विधिनिषेधातिक्रमे प्रत्यवायो भवेत्, न तु शास्त्रवशेन तदतिक्रम इति परिहरति—विषयरसेति । स्वच्छन्देन तदतिक्रमे हेतुर्विषयरसेत्यादि । तादर्थ्येन—विषयार्थत्वेन, तमतिक्रामन्निति सम्बन्धः । विधित एवेति । "ते ह स्म पुत्रैषणायाश्च" इत्यादिशास्त्रत एवेत्यर्थः । विधिनिषेध-किङ्करत्वाभावेऽपि न निरयहेतुः स्वैरचारः; तस्य विषयरागाधीनत्वा-दित्यभिप्रेत्याह—दृष्टानुश्रविकेति । दृष्टो विषय ऐहिकः, आनु-श्रविकः पारलौकिक इति भेदः । अवकाशाभावादपि न स्वैरचार इत्यभिप्रायेणाह—संसारमहाविषेति । यथा महानर्थपरिहारैकप्रयोजनो न कंचिदपि विषयमीक्षते तथात्रेति दर्शयितुं संसारमहाविषेत्याद्युक्तम् ।

---

[1] चित्तसत्वतया--कु.

मनःकायप्रवृत्तेः परमहंसपरिव्राजकस्योक्तदोषाप्रसङ्गात् । तस्य प्राणयात्रादिदृष्टार्थप्रवृत्ताववर्जनीयतया [1] संभवतोऽपि प्रामादिकवृजिनस्य ब्रह्माधिगमकालानलशाल्मलीतूललवमात्रस्याकिंचित्करत्वात् ॥

## सत्यादिवर्जनेऽपि शमादेरवर्जनीयता

न चैवमपि सत्यादिपर्वाम्नातस्य शमादेरप्यनपेक्षाप्रसङ्गः ; सर्वविषयवितृष्णस्य स्वत एव भवतस्तस्यावर्जनीयत्वात् । विक्षेपनिवृत्त्या ज्ञानस्वरू[2]पसन्निपातितया तदङ्गत्वनियमाय प्रतिप्रसवाच्च ॥

## रत्नतूलिका

ननु यदि विधिनिषेधाभ्यां सम्बन्धस्तर्हि प्रामादिकपापस्य कथं परिहार इत्यत आह—तस्येति ॥

अनपेक्षाप्रसङ्ग इति । "तानि वा एतानि" इत्यत्र तच्छब्देनैतच्छब्देन च प्रकृतं शममपि परामृश्यावरत्वबोधनादिति भावः। अवर्जनीयत्वादिति। तथा च तद्विषये अवरत्वबोधनेऽपि श्रुतिर्न तस्य हानाय प्रभवति ; अशक्यत्वादिति भावः। प्रतिप्रसवाच्चेति। अवरत्वप्रतिपादनमुखेन यस्तेषां साधनत्वेनोपादाननिषेधस्तस्य सङ्कोचादित्यर्थः। सङ्कोचसिद्धये शमस्यावश्यकतामाह—विक्षेपनिवृत्त्येति। तथा च विक्षेपनिवर्तकत्वेन सन्न्यासतुल्यत्वेन शमादेरप्यन्तरङ्गत्वात् "तानि वा एतानि" इत्यादौ शमादिव्यतिरिक्तस्यैव परामर्श इति भावः। एवं सत्यवर्जनं न शास्त्रविप्रतिषिद्धमित्युच्यत

---

[1] संबन्धतोऽपि–क.    [2] पानुपातितया–क.

### विदुषः सुखदुःखाभिनन्दनद्वेषत्यागस्यानिषेध्यता

**नापि सुखदुःखवर्जनं शास्त्रविप्रतिषिद्धमुच्यते; सुखदुःखयोरारब्धनिमित्तजन्मनोः स्वरूपेण हातुमशक्यतया तदभिनन्दनद्वेषत्यागस्य सर्वशास्त्रसम्प्रतिपन्नस्य निषेधायोगात् ॥**

### विदुषो वेदहानस्य प्रामाणिकत्वं वेदापरित्यागस्मृतेरन्यत्र सावकाशत्वं च

**अथोच्येत—**

**"स्वाध्याय एवोत्सृजमानो वाचम्",**
**"यथोक्तान्यपि कर्माणि परिहाप्य द्विजोत्तमः ।**
**आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ॥**
**सर्वं तु सन्न्यसेद्विद्वान् वेदमेकं न सन्न्यसेत् ।"**

**इत्यादिशास्त्रैर्विप्रतिषिद्धं वेदहानमुच्यत इति, न;**

### रत्नतूलिका

इत्युक्तम् । इदानीं सुखदुःखवर्जनमपि नेत्याह—**नापीति** । तस्य सर्वशास्त्रसम्मतत्वं वक्तुं तत्स्वरूपं विवेचयति—**सुखदुःखयोरिति** । **तदभिनन्दनेति** । सुखे अभिनन्दनं, दुःखे द्वेषः । तथा चापस्तम्बस्मृतौ सुखदुःखपदयोर्लक्षणया तदभिनन्दनद्वेषपरत्वमिति भावः । **सर्वेति** । "नाभिनन्दति न द्वेष्टि" इत्यादिस्मृतेः "मत्वा धीरो हर्षशोकौ जहाति" इत्यादिश्रुतेश्चेति भावः ॥

यैर्विप्रतिषेधस्तदुदाहरणपूर्वकं वेदवर्जनमेव तच्छब्देन परामृश्यत इति शङ्कते—**अथोच्येतेति** । **परिहाप्य**—त्यक्त्वा । प्रत्यक्षश्रुतिविरोधान्न स्मृतेस्तथा तात्पर्यवर्णनं युक्तमित्यभिप्रेत्य दूषयति—**नेति** । वेदाङ्गानीत्यत्र वेदांश्चाङ्गानि चेति द्वन्द्वसमासो द्रष्टव्यः,

"कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः ।
यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः ॥"

इति बाष्कलश्रुतौ,

"यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यतिः"

इति कठश्रुतौ,

"नाध्येतव्यं न वक्तव्यं न श्रोतव्यं कदाचन ।"

इति दक्षस्मृतौ च वेदत्यागस्य विहितत्वात् । "स्वाध्याय एवोत्सृजमानो वाचम्" इत्यादेश्च प्रणवोपनिषदादिविषये कुटीचकादिविषये वा सावकाशत्वात् ॥

कुटीचकस्वरूपं तस्य स्वाध्यायावश्यकता च ।

"कुटीचको नाम पुत्रादिभिः कुटिं कारयित्वा" इत्यादि प्रस्तुत्य "जपस्वाध्यायध्यानतत्परः" इत्यादिस्मरणात् ॥

रत्नतूलिका

कठश्रुत्यैकार्थ्यादित्यभिप्रेत्य तामुदाहरति—**यज्ञोपवीतमिति** । तर्हि स्मृतेः का गतिरित्याशङ्क्य कर्मविशेषे कर्तृविशेषे वा सावकाशत्वमाह—**स्वाध्याय एवेति** । तथा च स्वाध्याय एव प्रणवादावेव वाग्विसर्गः, अन्यत्र मौनव्रतः स्यादिति स्मृतेरर्थ इति भावः ॥

कुटीचकरूपकर्तृविशेषे सावकाशत्वोपपादनाय तत्स्वरूपं तस्य स्वाध्यायतत्परत्वं च स्मृतिसिद्धमित्याह—**कुटीचको नामेति** ॥

## विदुषो लोकहानस्य श्रुतिसम्मतत्वम्

नापि लोकहानं विप्रतिषिद्धमुच्यते ; साध्यसाधनभूतपुत्रवित्तलोकैषणाव्युत्थानस्य श्रुतिचोदितत्वात्, "अनिहोऽनमुत्रश्चरेत्" इति स्ववचनविरोधाच्च। आत्मान्वेषणस्य च मुक्तिहेतुतया सकलश्रुत्यादिसिद्धस्य शास्त्रविप्रतिषेधोक्त्यसंभवात्, "बुद्धे क्षेमप्रापणं शास्त्रविप्रतिषिद्धमुच्यते" इत्यत्र वक्ष्यामः। तस्माज्ज्ञानसन्न्यासे [1]परमहंसाख्ये कर्माभावान्न तत्समुच्चयो विद्यायाः ॥

### रत्नतूलिका

साध्यसाधनेति । अत्र पुत्रवित्तयोः साधनत्वं लोकस्य साध्यत्वमिति विवेकः। साधनैषणाव्युत्थाने साध्यलोकहानमनुक्तसिद्धमित्युपपत्तिं सूचयितुं [2]पुत्रैषणाव्युत्थानमप्युपात्तमिति वेदितव्यम्। एवं श्रुतिविरोधमुक्त्वा स्ववचनविरोधमप्याह—अनिह इति । इहार्थाः कृष्यादयः, परलोकार्थाश्च जपहोमादयो यस्य न सन्ति सः अनिहः अनमुत्रश्च । तथा च लोकहानस्य शास्त्रविप्रतिषिद्धत्वे तद्विरोधः स्यादित्यर्थः। इत्यत्र वक्ष्याम इति । "ब्रह्म वेद ब्रह्मैव भवति", "तरति शोकमात्मवित्", "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इत्यादिशास्त्रानुमतत्वात् "बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत" इत्येतत् "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इत्यादिशास्त्रविप्रतिषिद्धमिति वक्ष्यत इत्यर्थः ॥

ज्ञानसन्न्यासो ज्ञानार्थः सन्न्यासः । न तत्समुच्चय इति । तथा च "स खल्वेवं वर्तयन्यावदायुषम्" इत्या[3]देर्न निर्गुणविद्या-

[1] अत्र पारमहंस्याख्ये इति स्यात्. [2] पुत्रवित्तैषणा—कुं. [3] देर्निर्गुण—कुं.

## सन्न्यासस्य कर्मावबोधानन्तर्यानन्वयेऽप्यदोषः

न चैवं सति "बुद्ध्वा कर्माणि यत्कामयेत तदारभेत" इति मौनस्य कर्मावबोधानन्तर्यनियमानन्वयः, अनुष्ठेयकर्माभावादिति वाच्यम्; [1]लक्षणाय "चत्वार आश्रमाः मौनं गार्हस्थ्यम्" इत्यादिविभागोद्देशेन समभिव्याहृतस्यापि मौनस्य सर्वकरणव्यापारोपरमात्मकस्य नैष्कर्म्यसन्न्यासस्य कर्मावबोधानन्तर्यानन्वयेऽपि विरोधाभावात् ॥

### रत्नतूलिका

विषयत्वमिति सुष्ठूक्तमिति भावः। मौनस्य—सन्न्यासस्य। अनुष्ठेयेति। समुच्चित्य कर्मानुष्ठानाय कर्मावबोधानन्तर्यं ब्रह्मविचारस्य वाच्यम्। अन्यथानन्तर्यमदृष्टार्थं स्यात्। तथा च "बुद्ध्वा कर्माणि" इत्यादिस्ववचनविरोध इति भावः। अत्र "चत्वार आश्रमाः" इत्याश्रमाणामुद्देशो न कर्मानन्तर्यप्रतिपादनार्थः, किं तु तत्तदाश्रमासाधारणधर्मरूपलक्षणकथनार्थः, तथा च सहोद्देशस्यान्यथासिद्धत्वात्तत्र कर्मावबोधानन्तर्यान्वयाभावेऽपि न कश्चिद्दोष इत्याह—लक्षणायेति। तत्रानन्वयोपपादनाय तस्य कर्मसहभावेऽयोग्यतां प्रदर्शयितुं तत्स्वरूपमाह—सर्वकरणेति॥

यदि विविदिषावाक्यबलात्कर्मणां विद्यया समुच्चित्यानुष्ठानं तर्हि तद्वाक्यविहितानां सर्वेषामेव तद्वाच्यम्, न त्वेकस्य, तेषां समुच्चितानामेव विनियोगात्, तच्चाशक्यम्, अतो न तद्बलात्समुच्चित्यानुष्ठानसिद्धि-

---

[1] लक्षणया—कुं.

### विविदिषावाक्येन वेदानुवचनादीनां समुच्चयसाधनम्

अपि च न वेदानुवचनादीनि विद्यायां विकल्प्यन्ते, अष्टदोषापातात्, समुच्चीयन्ते तु, पृथक्पदोपात्तसकलसाधनोपरक्तैकभावनाविधानात्। अत एव कथं नाम सर्वावच्छिन्नैक-

### रत्नतूलिका

रिति दूषणं वक्तुं तेषां समुच्चयं साधयति—अपि चेति। अष्टेति। पक्षद्वयेऽपि प्रत्येकं प्रामाण्यत्यागाप्रामाण्यस्वीकारत्यक्तप्रामाण्यस्वीकारस्वीकृताप्रामाण्यत्यागरूपदोषचतुष्टयापत्तावष्टदोषापातादित्यर्थः। नन्वगत्या विकल्प एव व्रीहियवादिवन्नयाय्यः। "वेदानुवचनेन यज्ञेन दानेन" इति भिन्नकारकविभक्त्यवगतनिरपेक्षसाधनत्वबाधेन समुच्चयावगतौ मानाभावादित्यत आह—समुच्चीयन्ते त्विति। तत्र हेतुमाह—पृथक्पदोपात्तेति। एकभावनाविधानादिति। फलसम्बन्धेनेति शेषः। यथा "यजेत स्वर्गकामः" इत्यादावेकेन यजेतेति पदेनाग्नेयादियागोपरक्ता भावना राशीकृत्योपादाय फलसम्बन्धेन विधीयन्ते यागेन भावयेदिति यत्तत्स्वर्गमिति, तथात्रापि विविदिषन्तीत्यन्तिप्रत्ययेनान्यत्र विहिता वेदानुवचनादिनानाकरणोपरक्ता भावना राशीकृत्योपादाय विविदिषालक्षणफलसम्बन्धेन विधीयन्ते वेदानुवचनादिना भावयेदिति यत्तद्विविदिषामिति। तथा च पृथक्कारकविभक्तिश्रवणेऽपि तत्तत्करणोपरक्तानां भावनानामेकेनान्तिप्रत्ययेन युगपदेकफलसम्बन्धेन विधानात्समुच्चयसिद्धिरिति भावः। करणोपरागेण नानाभूतानामप्येकफलोपरागेणैक्यमित्येकभावनाविधानादित्युक्तम्। "यजेत स्वर्गकामः" इत्यादौ यजिभावनयोः समानपदोपादानेन सम्बन्धप्रतीतेर्यागोपरक्तभावनानुवादेन फलसम्बन्धमात्रं विधीयत इति युक्तम्। प्रकृते तु वेदानुवचनादीनां भिन्नपदोपात्तानां

भावना विधीयेतेति फलभेदे विधिप्रत्ययोपादानमर्थवत्, विविदिषाया विधेयसाधनसमभिव्याहारादेवापेक्षितफलभाव-

रत्नतूलिका

कथं विधेयभावनासम्बन्धप्रतीतिः, येन [1]तदुपरक्तभावनानुवादेन विविदिषारूपफलसम्बन्धमात्रविधानं स्यादित्यत उक्तम्—पृथक्पदोपात्तेति। अयमाशयः—विविदिषन्तीति फलपदे तावद्विधिप्रत्यय उपादीयते। तेन फलोपरागेण भावनायाः प्रतीतावपि तेन रूपेण विध्यन्वयायोग्यतयाऽऽक्षिप्तकरणोपरागेण विधानं वाच्यम्। तत्रान्तिप्रत्ययशक्त्या यावद्भावनोपस्थितौ यावत्करणोपरक्ता एवोपतिष्ठन्ते। तत्र वेदानुवचनादिपदसन्निधानेन तदुपरक्तभावनारूपे विशेषे प्रत्ययो व्यवस्थाप्यते। तथा च भिन्नपदोपस्थितेरन्वय[2]बोधेऽनपेक्ष्यत्वेऽप्याक्षिप्तकरणसामान्यस्य [3]विशेषव्यवस्थायास्तदधीनत्वात् पृथक्पदोपात्तसकलसाधनोपरक्तैकभावनाविधानं युक्तमिति भावः। अत एवेति। यतः फलोपाधिना एकभावनाविधानमत इत्यर्थः। अर्थवदिति। इतरथा वेदमनुब्रूयात् यजेतेति च विधेयक्रियापद एव तदुपादानं स्यादन्यत्र तथा दर्शनादिति फलपदे तदुपादानं निष्फलं स्यादिति भावः। ननु विविदिषापदे विधिप्रत्ययोपादानं तस्याः साध्य[4]रूपापत्त्या फलत्वप्रत्ययार्थम्, न तु फलोपरागेण भावनाया ऐक्य[5]प्रतिपत्त्यर्थमित्यत आह—विविदिषाया इति। विधेयं यत्साधनं वेदानुवचनादि तत्समभिव्याहारादेवेत्यर्थः। यथा पशोर्विधेयोदुम्बरतादिसाधनसमभिव्याहारादेव फलत्वप्रतीतिः पूर्वपक्षे तथेति भावः। समभिव्याहारमात्रेण तत्त्वप्रतीतौ हेतुगर्भमपेक्षितेति फलविशेषणम्। तथा च

---

[1] तदुपात्तभावना—कुं. [2] बाधेऽपेक्ष्य—कु. [3] विशेषे व्यव—कुं. [4] रूपोपस्थित्या—घ. च. कुं. [5] प्रतीत्यर्थ—घ. च. कुं.

प्रत्ययोपपत्तेः। अन्यथा वाक्यभेदप्रसङ्गात्। न चारुणादिवदिह विशिष्टविधिः; विविदिषायाः फलत्वेनाविधेयत्वात्। प्राप्तफलभावनायां च भिन्नकरणविभक्तिनिर्दिष्टानेकविधाने वाक्यभेदापरिहारात्। न हि फलकर्तव्यताप्युपदेशगम्या, किं तु

रत्नतूलिका

विहितस्य फलापेक्षायां योग्यतया विविदिषैव फलमिति कल्प्यत इति भावः। अन्यथेति। सर्वावच्छिन्नैकभावनाविध्यनङ्गीकार इत्यर्थः। वाक्यभेदेति। विविदिषोद्देशेनानेकसाधनविधाने ग्रहोद्देशेन [1] संमार्गविधान इव विविदिषन्तीति यत्तद्यज्ञेन, विविदिषन्तीति यत्तद्वेदानुवचनेनेति वाक्यभेदः। अनेकसाधनोद्देशेनैकफलसम्बन्धविधानेऽपि वेदानुवचनेन भावयेदिति यत्ताद्विविदिषां, यज्ञेन भावयेदिति यत्ताद्विविदिषामिति ग्रहैकत्वोद्देशेन संमार्गविधानवद्वाक्यभेदः स्यात्। तत्परिहारस्तूक्तप्रकारेणैव निर्वहणीय इति भावः। ननु "अरुणया पिङ्गाक्ष्यैकहायन्या क्रीणाति" इत्यत्र पृथक्कारकविभक्तिश्रवणेऽपि यथा न वाक्यभेदस्तथात्रापि स्यादित्याशङ्क्य वैषम्येण परिहरति—न चारुणादिवदिति। युक्तं तत्रारुणादिमता क्रयेण सोमं भावयेदित्यरुणादिविशिष्टक्रयविधानादवाक्यभेद इति, क्रयस्य विध्यर्हत्वात्; प्रकृते तु न तथेत्याह—विविदिषाया इति। तथा च विशिष्टविध्यसंभवात्प्राप्तायां भावनायां वेदानुवचनादिविधानं परिशिष्यते। तच्च पूर्वोक्तदूषणग्रस्तमित्याह—प्राप्तेति। फलभावनायाः प्राप्तत्वेनाविधेयत्वादनेकेषां गुणानां विधेयक्रियावशीकाराभावेन तत्र तत्र विधेः पर्यवसानं वाच्यम्, तच्चावृत्तिं विना न सिध्यतीति वाक्यभेद इति भावः। वाक्यभेदमेव द्रढयितुं फलभावनाया अविधेयत्वमाह—न हीति।

---

[1] एकसंमार्ग–घ. कुं.

उपायकर्तव्यतैव। यथाहुः—"वेदैवासौ मयैतत्कर्तव्यमिति। उपायं तु न वेद। तस्योपायः कथनीयः" इति। आह च वार्तिककारः—

"सर्वत्रावास्थितो न्यायो भावनांशद्वये विधिः"। इति।

"फलांशे भावनायाश्च प्रत्ययो न विधायकः" इति च। फलविधिरिति तु तत्सम्बन्धितारूपेण तदुपायविधिरेवोच्यते, विधेर्भावार्थविषयत्वात् ॥

### वेदानुवचनादिसमुच्चयप्रकारः

न हि दर्शादिवत्समुच्चित्य साधनता वेदानुवचनादीनाम्, येन पृथक्साधनविभक्तिनिर्देशो विरुध्येत। दण्डचक्रादेरिव

### रत्नतूलिका

उक्तेऽर्थे शाबरभाष्यसंमतिमाह—यथाहुरिति। भावनाया अंशद्वयं करणांश इतिकर्तव्यतांशश्च, तत्र विधिः, न तु भाव्यांश इत्यर्थः। ननु फलविधिव्यवहारस्य का गतिरित्यत आह—फलविधिरिति त्विति। तथा चौपचारिको व्यवहार इति भावः। औपचारिकत्वे हेतुमाह—विधेरिति। भावार्थाधिकरणे तथा व्यवस्थापनादिति भावः॥

ननु समुच्चये निरपेक्षसाधनत्वबोधकपृथग्विभक्तिश्रवणविरोध इत्यत आह—न हि दर्शादिवदिति। आग्नेयादिवदित्यर्थः। यथा आग्नेयादीनां पृथगुत्पन्नानां पृथक्फलाकाङ्क्षासत्त्वेऽपि अधिकारवाक्ये करणविभक्त्यन्तेन समस्तेन पदेनोपादाने सापेक्षमेव साधनत्वं प्रतीयत इति समुच्चित्य साधनता न तथात्रेत्यर्थः। दण्डेति। तेषां पृथक्पृथक्कार्यान्वयव्यतिरेकप्रयोजकान्वयव्यतिरेकप्रतियोगित्वेन तथैव

**साधनानां तेषां समुच्चयविधानात् । अत एव फलान्तरापनयमात्रेणा[1]नपेतसाधनरूपाणामेव यज्ञादीनां विविदिषासंयोगविधौ क्लृप्तमेव द्वारमुपजीव्यते, नापूर्वमारब्धदुरितनिवृत्त्यादि द्वारं कल्प्यते ॥**

**वेदानुवचनादिसमुच्चयसाधनप्रयोजनम्**

**न च तानि सर्वाणि ज्ञानमनुतिष्ठतानुष्ठातुं शक्यन्ते ।**

**वेदानुवचनादिसमुच्चये प्रकारान्तरशङ्कासमाधाने**

**न चाचार्यकुलादिषु भिन्नकालप्रयोगस्थानामेव तेषां विद्यासमुच्चय इति वाच्यम्; तथापि चातुराश्रम्यानियमानुपपत्तेः ।**

**रत्नतूलिका**

साधनत्वमिति भावः । **अत एवेति ।** यतः साधनानामेव तेषां समुच्चयेन विधानमत इत्यर्थः । मात्रपदव्यवच्छेद्यमाह—**अनपेतेति । क्लृप्तमेवेति ।** स्वर्गादिफलजननं तेषां यद्वारं क्लृप्तमपूर्वं फलविरोधिदुरितनिवृत्तिरीश्वरप्रसादो वेत्यादि तदेव विविदिषालक्षणफलेऽपि द्वारमुपजीव्यते । तत्रत्यसाधनरूपस्यैवात्रापि पुरस्कारादित्यर्थः । एवकारव्यवच्छेद्यं दर्शयति —**नापूर्वमिति ।** यदर्थं समुच्चयः साधितस्तद्दूषणं दर्शयति—**न च तानीति ।** वेदानुवचनोपलक्षितानां ब्रह्मचर्याश्रमधर्माणां यज्ञदानोपलक्षितगृहस्थधर्माणां तपसोपलक्षितवैखानसधर्माणां च विद्यानिष्ठेनैकेन पुरुषेणानुष्ठातुमशक्यत्वादित्यर्थः । युगपदनुष्ठानासंभवेऽपि तत्तदाश्रमदशायामेकेन पुरुषेण विद्यया समुच्चित्यानुष्ठानं संभवतीत्याशङ्क्य निषेधति —**न चाचार्यकुलादिष्विति ।** भवेदेवं यदि चतुर्णामाश्रमाणां विद्यामनुतिष्ठता नियमेनानुष्ठानं स्यात्, न त्वेतदस्तीति दूषयति —**तथापीति ।** तत्र मानमाह—

[1] नपेक्षित—ख.

"यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा" इति प्रव्रज्याऽनियमश्रुतेः। "वनी भूत्वा प्रव्रजेत्"

"वनेषु तु विहृत्यैवं तृतीयं भागमायुषः।
चतुर्थमायुषो भागं त्यक्त्वा सङ्गान् परित्यजेत्॥"

इत्याद्याश्रमक्रमनियमस्य कषायपाकसंभवाभिप्रायत्वात्। तथा च लिङ्गम्—"यदहरेव विरजेत्तदहरेव प्रव्रजेत्",

"भावितैः करणैरेभिर्बहुसंसारयोनिषु।
आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे॥
संसारमेव निस्सारं दृष्ट्वा सारदिदृक्षया।
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः॥"

इत्यादि। न च वेदानुवचनश्रुतिश्चातुराश्रम्यविषया, विशेषनियमायोगात्॥

### रत्नतूलिका

यदि वेतरथेति। अनियमश्रुतेरिति छेदः। नन्वाश्रमक्रमप्रतिपादकश्रुतिस्मृत्योः का गतिरित्यत आह—वनी भूत्वेति। तथा चेति। आश्रमादिक्रमनपेक्ष्य वैराग्यमात्रस्याधिकारिविशेषणत्वकीर्तनादिति भावः। बहुषु संसारयोनिषु भावितैः समीचीनवासनावासितैरित्यर्थः। शुद्धात्मा शुद्धमना इत्यर्थः। सारदिदृक्षया—सारभूतब्रह्मदिदृक्षयेत्यर्थः। ननूक्तरीत्या समुच्चये सिद्धे यस्मिन्पक्षे विद्यया समुच्चित्यानुष्ठानं वेदानुवचनादीनां संभवति तद्विषयेयं श्रुतिर्नियम्यत इत्याशङ्क्य निषेधति—न च वेदानुवचनश्रुतिरिति। सत्यं समुच्चय इति, न चैतावता चातुराश्रम्यविषयत्वं श्रुतेः; मानाभावात्। तत्तज्जन्मस्वनुष्ठितानां वेदानुवचनादीनामपि विविदिषाद्वारा विद्यास्वरूपोपकारित्वसंभवेन श्रुतेरैकाश्रम्यविषयत्वस्याप्युपपत्तेरिति भावः॥

### सूत्रकाराशयविरोधात्कर्मणां ज्ञानेऽसमुच्चयः

अपि च सूत्रकारः—"स्तुतयेऽनुमतिर्वा" इति विदुषो न कर्म नियम्यते, "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इति विद्यास्तुतये कर्मानुमतिरेव, तथापि "न कर्म लिप्यते नरे" इति वाक्यशेषेण विद्या स्तुता भवतीत्याह; "कामकारेण चैके" इति च "किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः" इति विदुषः कर्मत्यागमेव दर्शयति; "उपमर्दं च" इति च "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इति विद्यया भेदाश्रयकर्मोपमर्दमधीयत इति वदन् विरोधादसमुच्चयं मन्यते ॥

### रत्नतूलिका

सूत्रकारतात्पर्यविरोधादपि न समुच्चय इत्याह—अपि च सूत्रकार इति। सूत्रं व्याचष्टे—विदुष इति। सूत्रे अनुमतिर्वेति वाकारस्य एवकारार्थत्वमभिप्रेत्य तद्व्यावर्त्यं दर्शयति—न कर्मेति। कुर्वन्नेवेति विषयवाक्यप्रदर्शनम्। स्तुतौ अनुमतौ चापेक्षितकर्मसमर्पणं विद्येति कर्मेति च। श्रुतौ वाक्यशेषस्य स्तुतित्वप्रतीतये अपेक्षितं पूरयति—तथापीति। कामकारेण चेति। एके—विद्वांसः कामकारेण—इच्छया प्रजादिषु फलान्तरसाधनेषु प्रयोजनाभावं परामृशन्तस्त्यजन्तीति सूत्रार्थः। विषयवाक्यमाह—किं प्रजयेति। येषां नः अयमात्मा प्रत्यगात्मैवायं लोकः, ते वयं प्रजया किं करिष्यामः, तत्साध्यस्यास्य लोकस्यात्मरूपस्य सिद्धत्वादिति श्रुत्यर्थः। "उपमर्दं च" इत्यत्रापेक्षितं करणं कर्म क्रियापदं चाध्याहृत्य सूत्रं व्याचष्टे—विद्ययेति। भेद आश्रयो हेतुर्यस्य कर्मण इति विशेषणमभिन्नप्रत्यगात्मविद्यायाः कर्मणां च स्वरूपतो विरोधद्योतनाय। यत्र—यदा

## कर्मोपमर्दे परकीयशङ्कानुवादः तत्परिहारश्च

यत्तु ब्रह्मविद्या कर्माङ्गं मा भूदिति समस्तसांसारिकदुःखमूलपुण्यापुण्यकर्मणो विद्ययोपमर्दोऽनेन सूत्र्यत इति, तन्न; कर्माङ्गावबद्धब्रह्मविद्यायाः कर्मसमृध्यर्थत्वाङ्गीकारात्। स्वरूपेणाविरोधे तस्यास्तदङ्गताया एवोपपत्तेरत्यन्तस्वातन्त्र्यायोगात्।

### रत्नतूलिका

अस्य-विदुषः सर्वमात्मैवाभूत् तत्—तदा केन कं पश्येदिति विषयवाक्यार्थः ॥

एवं विद्यायाः स्वरूपेण कर्मविरोधित्वान्न तयोः समुच्चय इति स्वेन व्याख्यातम्, परेण तु स्वरूपविरोध[1]मनङ्गीकृत्य विद्यया कर्मणामुपमर्दो नाश इति व्याख्यातम्, तद्दूषयितुमनुवदति—यत्त्विति। तदधिगमसूत्रविरुद्धस्यात्र कथने प्रयोजनमाह—कर्माङ्गं मा भूदिति। मुक्तिहेतुभूतविद्यया तद्विनाशे उपपत्तिं सूचयितुं सांसारिकदुःखमूलेति विशेषणम्। अन्यथा तादृशकर्मसत्त्वे [2]विद्यया मुक्तिविरोधः स्यादिति भावः। अनेन काम्यकर्मणामुपमर्द इति सूचितम्। समृध्यर्थत्वाङ्गीकारादिति। तथा च न विद्यया काम्यानामुपमर्द इति न तस्याः कर्माङ्गत्वविरोध इति भावः। नन्वङ्गावबद्धया तया कर्मसमृध्यर्थत्वादेव तदुपमर्दाभावेऽपि [3]इतरथा स भविष्यतीत्यत आह—स्वरूपेणेति। यथा सिद्धान्ते प्रत्यगात्मस्वरूपज्ञानस्य स्वरूपेण सर्वकर्मोपमर्दकत्वं न तथा सगुणविद्यायाः, तथा च विद्यया काम्यानामप्युपमर्दो नेति विद्यायास्तदङ्गत्वमित्याह—तस्या इति। एवकारव्यवच्छेद्यं दर्शयति—अत्यन्तेति। अङ्गस्यापि सतः

---

[1] मङ्गीकृत्य—कुं. [2] विद्याया—क. [3] इतरथा—क.

"क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे"

इत्याम्नायत इति चेत्, प्रशंसैषा विद्याया भविष्यति ॥

अपि च तव समुच्चित्यानुष्ठेयानामग्निहोत्रादीनामङ्गं विद्या भविष्यति, अविरोधात्। मुक्तावदृष्टद्वारत्वस्योभयत्रापि तुल्यतया नियमहेत्वभावात्। एवं च "यदेव विद्यया करोति"

रत्नतूलिका

प्रधानफलेन फलवत्त्वलक्षणं स्वातन्त्र्यमस्तीति तद्व्यावृत्तये अत्यन्तेति विशेषणम्। विद्याकर्मणोः स्वरूपेण विरोधाभावेऽपि श्रुतिबलाददृष्टद्वारा निवर्त्यनिवर्तकभावोऽङ्गीकर्तव्य इत्यभिप्रेत्य शङ्कते—क्षीयन्त इति। परत्वेन प्रसिद्धा हिरण्यगर्भादयोऽपि यस्मादवरभूतास्तस्मिन्परमात्मनि दृष्ट इत्यर्थः। कर्तृसंस्कारद्वारा विद्यायाः कर्माङ्गत्वे सिद्धे "शेषत्वात्पुरुषार्थवादः" इति न्यायेन प्रयाजादिष्विव फलश्रुतिः प्रशंसा भविष्यतीति परिहरति—प्रशंसैषेति ॥

स्वरूपविरोधाभावेन विद्यया न कस्यापि कर्मण उपमर्दः, अतस्तस्याः कर्माङ्गता स्यादित्यापाद्य दूषणमुक्तम्, इदानीमेषामग्निहोत्रादीनां विद्यया समुच्चित्यानुष्ठेयतया विद्ययोपमर्दाभावस्तवापीष्टः, "अग्निहोत्रादि तु तत्कार्यायैव" इति सूत्रात्तेषामङ्गं विद्या भविष्यतीति दूषयति—अपि च तवेति। अविरोधादिति। "क्षीयन्ते च" इत्यादेरपि तव तद्विषयत्वाभावादिति भावः। ननु समुच्चित्यानुष्ठेययोर्विद्याकर्मणोर्मध्ये यस्य मुक्तिरूपे फले दृष्टं द्वारं तदर्थमितरद्भविष्यतीति कर्मणामेव विद्याङ्गत्वमितीदं विनिगमकं सिद्धान्ते विद्याया दृष्टद्वारा मुक्तिहेतुत्वेन संभावितमपि तव न सिध्यतीत्यभिप्रेत्याह—मुक्ताविति। विद्यायाः कर्माङ्गत्वे अपरमप्यनुकूलमित्याह—एवं चेति। अन्यथा

इति नासार्वत्रिकी कल्पिता[1] भवति। अथ विद्यायाः श्रुतामृतत्वसाधनभावमवभज्यारादुपकारेण कर्माङ्गत्वकल्पनाद्वरं कर्मणामेव विद्याङ्गत्वमङ्गीकृतम्, विद्यासाधनताश्रवणात्, प्रतिबन्धनिवृत्त्या ज्ञानस्वरूपोपकारसम्भवाच्चेति चेत्, तथापि

रत्नतूलिका

यदेवेति यच्छब्दस्य प्रकृतोद्गीथमात्रविषयत्वे प्रकरणेन श्रुतिसङ्कोचः प्रसज्येत, यदेव करोतीति विहितकर्ममात्रस्य यच्छब्देन प्रतीतेः। ततश्च "असार्वत्रिकी" इति सूत्रमप्यनारम्भणीयमिति भावः। श्रुतेति। "ब्रह्मविदाप्नोति परम्", "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इत्यादाविति शेषः। ननु—

"कर्मणैव हि संसिद्धिमास्थिता जनकादयः।"

इत्यादौ कर्मणोऽपि मुक्तिसाधनत्वावगमः समान इत्याशङ्क्य विद्यायाः कर्माङ्गत्वे अधिकं दूषणमाह—आरादुपकारेणेति। वस्तुतस्तु संसिद्धि-ज्ञानलक्षणां चित्तशुद्धिलक्षणां वा आस्थिता इति व्याख्यातुं शक्यमिति भावः। श्रवणादिति। विविदिषावाक्य इति शेषः। विद्यायाः कर्माङ्गत्वे आरादुपकारित्वकल्पनं स्यादिति तदत्र नास्तीत्याह—प्रतिबन्धनिवृत्त्येति। एवमुत्सूत्र[2]हेत्वभिधानेऽपि सूत्रं न समर्थितमिति दूषयति—तथापीति। तथा च सौत्रहेतुं समर्थयमानेन त्वयापि यादृशं ज्ञानं सर्वकर्मोपमर्दकं तादृशं मुक्तिहेतुः। तच्च न कर्मणा समुच्चित्यानुष्ठेयमिति वक्तव्यमिति भावः। विद्यया समुच्चित्यानुष्ठेयत्वेनोभयसम्प्रतिपन्नाज्ज्ञानान्तरेण कालतो विरोधादपि न तेषां

---

[1] न सा कल्पिता—ग.    [2] हेत्वभावेऽपि—क.

सौत्रोपमर्दन्यायानुपपत्तिः । अपि च "शान्तो दान्तः" इत्यादिसर्वकरणव्यापारोपरमरूपशमाद्यङ्गकत्वाज्ज्ञानाद्विद्यायास्तद्विरोधिव्यापारात्मककर्मैककाल्यानुपपत्तिः । न च निषिद्धकाम्यविषयत्वे शमादीनामविरोधः, नित्यादिविषयप्रवृत्त्या भिन्नविषयत्वादिति शङ्क्यम् ; नियमहेत्वभावात्, विद्यार्थे सर्वकर्मत्यागस्य चोदितत्वाच्च ॥

तत्त्वसाक्षात्कारोदये पुनर्विद्याकर्मणोराप्रायणमननुष्ठेयता

अपि च विद्याकर्मणी नाप्रायणमनुष्ठेये । न ह्युत्पन्नैव विद्या पुनः पुनरुत्पाद्यते । न च फलाय विद्यान्तरमुत्पादनीयम् ;

रत्नतूलिका

समुच्चित्यानुष्ठानमित्याह—अपि च शान्त इति । सर्वेति । बाह्यान्तरकरणेत्यर्थः । विरोधोपपादनाय—व्यापारात्मकेति विशेषणम् । ननु "विद्यां चाविद्यां च यस्तद्वेद" इत्यादिना समुच्चित्यानुष्ठानविधानमेव विशेषनियमहेतुरित्यत आह—विद्यार्थे इति । विद्यालक्षणे प्रयोजन इत्यर्थः । "पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च" इत्यादिश्रुतौ "मोक्षस्य सर्वोपरमः क्रियाभ्यः" इत्यादिस्मृतौ चेति शेषः ॥

यादृशी अविद्यानिवर्तनक्षमा सा नाम विद्या, तस्यां प्रायणात्पूर्वमेव जातायामपि पुनस्तदुत्पादनायोपायानुष्ठानं कर्मानुष्ठानं च व्यर्थम् ; उत्पन्नाया उत्पत्त्ययोगात्, इति दूषयति—अपि च विद्याकर्मणी इति । नन्वाप्रायणमनुष्ठिताया एव विद्याया मोक्षरूपफलसाधनत्वं गम्यते, अतः "क्षेत्रज्ञः करणी" इत्यादिशास्त्रबलादाप्रायणकालमपि विद्यान्तरमुत्पादनीयमिति न तदनुष्ठानवैयर्थ्यमित्याशङ्क्य निषेधति—न च फलायेति । असंभावनादिनिवृत्तिस्तत्त्वविज्ञानस्य परिशुद्धिः ।

तत्त्वविज्ञानपरिशुद्धौ सकृदुदिततत्त्वसाक्षात्कारादेवाविद्यावरण-निवृत्तौ निरङ्कुशनिरतिशयब्रह्मानन्दानुभवसम्भवात्। सा चैवा मुक्तिरिति तदवसानं श्रवणादिमयं विज्ञानमनुष्ठेयमित्युच्यते। "क्षेत्रज्ञः करणी ज्ञानं करणम्" इत्यादौ निवर्तयेदिति चानपेक्ष्यत्वमुच्यते, न त्वाप्रायणमावृत्तिर्विधीयते, विपरीतलक्षणाहेत्वभावात्। न चैवमावृत्तिन्यायविरोधः; परविद्याविषये साक्षात्कारावधि साधनावृत्तेरिष्टत्वात्॥

रत्नतूलिका

सकृदुदिततत्त्वसाक्षात्कारादेवेत्यनेन वाक्यजन्यमप्रतिबद्धं निर्विशेषविज्ञानमत्र मुक्तौ हेतुः, नोपासनमिति दक्ष्यमाणमभिप्रैति। किं "क्षेत्रज्ञः करणी" इति स्मृतौ मुक्तिनिष्पत्त्यनन्तरं निवृत्तिविधानादर्थादाप्रायणमनुष्ठानसिद्धिः? किंवा निवर्तयेदित्यस्यावृत्त्यर्थतेति विकल्प्याद्य आह—सा चैवेति। मुक्त्यपेक्षया सेति स्त्रीलिङ्गनिर्देशः। ननु देहपातपर्यन्तं तत्त्वसाक्षात्कारानुवृत्तेस्तन्निवृत्त्यसंभव इत्यत आह—अनपेक्ष्यत्वमिति। उदिते साक्षात्कारे जीवत एव मुक्तिलक्षणं फलं सम्पन्नमिति तदनन्तरं न विज्ञानापेक्षेति भावः। द्वितीयं दूषयति—न त्विति। विपरीतेति। निवृत्तिवाचकस्य प्रवृत्तिफलकावृत्त्यर्थो विपरीतः, तस्मिन् लक्षणायामनुपपत्त्यादिरूपहेत्वभावादित्यर्थः। न चैवमिति। सकृदुत्पन्नज्ञानस्यैव मोक्षोपायत्व इत्यर्थः। किं परविद्याविषये तद्विरोधः? उतापरविद्याविषय इति विकल्प्याद्य आह—परविद्याविषय इति। तथा "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादावसकृच्छ्रुतानां श्रवणादीनां दृष्टापरोक्षरूपफलायावृत्तिरेव तस्य न्यायस्य विषय इति न विरोध इति भावः। द्वितीय

अपरविद्यायामाप्रायणमुपासनावृत्तिः कर्मान्वयश्च

उपासनात्मकं च विज्ञानमाप्रायणानुष्ठेयं चोद्यते "स खल्वेवं वर्तयन्" इत्यादौ। यत्रेदं "प्रायणान्तमोंकारमभिध्यायीत" इति निगद्यते अदृष्टफलस्यान्त्यप्रत्ययसापेक्षत्वात्कर्मफलवत्, तद्धि प्रयाणकाले प्रतिपत्तव्यभावनाविज्ञानमपेक्षते; "यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः सहात्मना यथासङ्कल्पितं लोकं नयति", "तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य" इत्यादिश्रुतेः। "तदोकोऽग्रज्वलनं

रत्नतूलिका

आह—उपासनात्मकं चेति। यत्रेति। उपासनाविषय इत्यर्थः। श्रुतेऽर्थे उपपत्तिमाह—अदृष्टफलस्येति। लौकिकप्रमाणेनादृष्टं यत्फलं तस्येत्यर्थः। ननु कर्मफले अदृष्टफलत्वं वर्तते, अन्त्यप्रत्ययसापेक्षत्वं नेति व्यभिचार इत्याशङ्क्य तत्रापि साध्यमस्तीत्येतदेव दृष्टान्तत्वेनोपादत्ते—कर्मफलवदिति। उभयत्र साध्यं साधयति—तद्धीति। एतद्देहपातानन्तरं प्राप्यस्य देहान्तरस्य लोकान्तरस्य वा भावनामयं यद्विज्ञानं तदपेक्षत इत्यर्थः। तत्र प्रमाणं दर्शयति—यच्चित्त इत्यादि। यत् चित्तं यस्य स यच्चित्तः। यदित्यनेन सविषयस्य परामर्शः। तेन चित्तेन सह प्राणमायाति, तेजसा—भूतसूक्ष्मेण सहात्मना—जीवेन सहेति श्रुत्यर्थः। लिङ्गं—लिङ्गशरीरस्य मनःप्रधानत्वात्तथा व्यपदेशः। अस्य मनो यत्र नितरां सक्तं तत्र सक्तो जीवः कर्मणा तदेवायातीति "तदेव सक्तः" इति श्रुत्यर्थः। तस्य—विज्ञानात्मनो हृदयमागतस्य ओकः—आयतनं हृदयं, तस्याग्रज्वलनं—

तत्प्रकाशितद्वारः" इत्यादिसूत्राच्च । विद्यायामन्त्यप्रत्ययश्च प्रत्ययात्मकोपासनान्नातिरिच्यते । यत्रेदमुच्यते—"स यावत्क्रतुरस्माल्लोकात्प्रैति",

"अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥"

इत्यादि । तत्र च विद्याफलेऽपि कर्मसमुच्चयो न निवार्यते ॥

## आचारतः परविद्यायां कर्मसमुच्चयशङ्कापरिहारौ

न च—"यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि",
"इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥"

## रत्नतूलिका

भावनामयं ज्ञानं भवति । तेन प्रकाशितद्वारः—प्रकाशितमार्गः सन् गच्छतीति [1]सर्वसाधारण्येन प्रतिपत्तव्यभावनायाः सूत्रे उक्तत्वादित्यर्थः । एवमप्युपासनाया आप्रायणमनुष्ठाने किमायातमित्यत आह—विद्यायामिति । तत्र मानमाह—यत्रेदमिति । यत्र अन्त्यप्रत्ययविषय इत्यर्थः । यावच्छब्दः साकल्यवाची । तथा च क्रतोरुपासनस्य साकल्यमाप्रायणमनुवृत्तिरेव ; यावत्क्रतुः प्रैतीति प्रायणसमभिव्याहारादिति भावः । मामेव स्मरन्निति तात्पर्यपूर्वकस्मरणमुपासनं गम्यते । मद्भावमिति । मत्स्वरूपं याति—मत्स्वरूपो भवतीत्यर्थः । इदं चोपासनायाः क्रमभुक्त्यर्थत्वादुक्तमिति ध्येयम् । ननु तत्र कर्मसमुच्चयः स्यादित्याशङ्क्येष्टापत्तिरित्याह—तत्र चेति ॥

परविद्यायां कर्मसमुच्चये आचारं प्रमाणमाशङ्क्य निषेधति—न च यक्ष्यमाण इति । हे भगवन्तः अहं यक्ष्यमाणोऽस्मीति

---

[1] सर्वासा—घ.

इत्याद्याचारदर्शनात् परविद्याकर्मसमुच्चय इति वाच्यम् ; "विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे",

"न पपाठ गुरुप्रोक्तां कृतोपनयनः श्रुतिम् ।
न ददर्श च कर्माणि शास्त्राणि जगृहे न च ॥"

इत्यादिविपरीतदर्शनात् । तथा च सूत्रम्—"तुल्यं तु दर्शनम्" इति । न च त्यागवचनानि साभिसन्धिकर्मविषयाणि, काम्यकर्मणो मोक्षैकफलब्रह्मविद्याविरोधित्वादिति वाच्यम् ; विद्याप्रक्रम एव तत्त्यागेन विदुषस्तदप्रसक्तेः । अनुष्ठानवचनानां यावज्जीवादिचोदितनित्ययज्ञाध्ययनादिविषयत्वौचित्यात् । अत एव विदुषो भरतस्य नित्यानाचरणमेव दर्शयति—न पपाठेत्यादि ।

## रत्नतूलिका

ब्रह्मविदः केकयस्य प्राचीनशालादीन् प्रति वचनमिति आचारदर्शनमिति भावः । विपरीतदर्शनादिति । तथा चाचारो न समुच्चयासमुच्चययोः प्रमाणमिति भावः । समुच्चये असमुच्चये चाचारदर्शनं तुल्यमिति सूत्रार्थः । विपरीतदर्शनस्यान्यथासिद्धिमाशङ्क्य निषेधति—न च त्यागेति । "न ददर्श च कर्माणि" इत्यादीनीत्यर्थः । सामान्यश्रुतेर्विशेषविषयत्वे हेतुमाह—काम्यकर्मण इति । तत्त्यागेनेति । वैराग्यवत एव विद्यार्थश्रवणाद्यधि[1]कारादिति भावः । अत एवेति । यतः प्रसक्तनित्यादिविषयत्वमननुष्ठानवचनानामत एवेत्यर्थः । श्रुतिं गुरुमुखप्रोक्तां न पपाठेति नित्याध्ययनस्य त्यागश्रवणादिति भावः । संस्काररहितविप्राकृतिर्विचेष्टितं तं

[1] कार इति—कुं.

"तं तादृशमसंस्कारविप्राकृतिविचेष्टितम् ।
क्षत्ता सौवीरराजस्य [1]विष्टियोग्यममन्यत ॥"

इत्यादिलिङ्गाच्च ॥

विदुषः कर्माचरणस्य पक्षभेदेनान्यथासिद्धत्ववर्णनम्

अपि च केकयस्य तावदपरब्रह्मविदो युक्तं कर्माचरणम्; परविदोऽपि वा तस्य लोकसङ्ग्रहप्रयोजनत्वात् ।

"लोकसङ्ग्रहमेवापि संपश्यन्कर्तुमर्हसि ।"

इत्यादिस्मरणात् । "इयाज केशिध्वजः" इत्यादौ च नायमर्थो ज्ञानव्यपाश्रयोऽधिगतब्रह्मानुभव इति, किं त्वपेक्षितं फलमुपाय-

रत्नतूलिका

भरतं विष्टियोग्यं—ये वेतनादिकं विना राज्ञा कर्मणि नियुज्यन्ते ते विष्टयः, तद्योग्यममन्यतेति स्मृत्यर्थः ॥

इयता सन्दर्भेण *परविद्याविदः कर्मानुष्ठानरूपाचारोऽस्ति, स च विपरीताचारदर्शनान्न समुच्चये प्रमाणमित्युक्तम्, इदानीं स एव नास्ति । विद्यमानोऽपि वान्यथासिद्धो न कर्मणां विद्यार्थतावगमे हेतुरिति दूषयति—अपि च केकयस्येति । परविदोऽपि वा तस्येति व्यधिकरणे षष्ठ्यौ । तस्य कर्माचरणस्येत्यर्थः । लोकसङ्ग्रहेति । लोकस्य—जनस्यानुष्ठातृत्वेन सङ्ग्रहः । महतामपि कर्मानुष्ठाने सतीतरेषां तदावश्यकताबुध्या तदनुष्ठानं संभवतीति । अथवा लोकेन सङ्ग्रहः । यथा लोका नास्तिकत्वेन न मन्यन्ते तथेत्यर्थः । केशिध्वज इति इयाज सोऽपीत्यत्र तच्छब्दार्थकथनम् ।

---

* परविद्यां प्राप्तवत इत्यर्थः ।

[1] काश्यै पशुमकल्पयत, इति पाठान्तरम्.

प्रवृत्तेराश्रयो भवतीति ज्ञानव्यपाश्रयो विविदिषुरुच्यते। तस्येदं प्रयोजनं ब्रह्मविद्यामधिष्ठाय सन्तं तत्प्रतिबन्धकं मृत्युं–दुरितं तरितुमिति। खाण्डिक्याय ज्ञानोपदेशस्तु तस्य शास्त्रन्याय-नैपुण्येनाप्युपपद्यते। अथ वा ज्ञानमेव व्यपाश्रयोऽस्य न कर्मादि, ततो लब्धव्याभावात्। स तथाभूतोऽपि ब्रह्मविद्यां समूलकर्मनिर्माथिनीमप्याधिष्ठाय—नियम्याभिभूय प्रवृत्तफलं मृत्युं–पाप्मानं अविद्यया- लोकसङ्ग्रहार्थमप्यनुष्ठितेन कर्मणा तदनुष्ठानायासजनितदुःखफलेन तरितुमियाज यज्ञानित्यर्थः।

## रत्नतूलिका

**विविदिषुरुच्यत इति।** ज्ञानं व्यपाश्रित्य फलत्वेनोद्दिश्येति फलितोऽर्थः। पौनरुक्त्यपरिहारेणोत्तरार्धमवतारयति—**तस्येदमिति।** तस्य कर्मानुष्ठानस्येत्यर्थः। **ब्रह्मविद्यामधिष्ठाय**— प्रतिबध्य सन्तं मृत्युमित्यक्षरार्थः। ननु तस्य विविदिषुत्वे उपदेष्टृत्वानुपपत्तिरित्यत आह—**खाण्डिक्यायेति।** अपरोक्षज्ञानस्योपदेशे अनपेक्ष्यत्वादिति भावः। अस्तु वा विद्वत्त्वं केशिध्वजस्य, तथापि तस्य कर्मानुष्ठानं न विद्योत्पत्तये; अपि तु तदनुष्ठानायासजनितदुःखानुभवेन पापनिवृत्तय इति पक्षान्तरमाह—**अथ वेति।** किमर्थं तर्हि कर्मानुष्ठानमित्यत आह—**तथाभूतोऽपीति।** अस्मिन् व्याख्याने ब्रह्मविद्यामधिष्ठाय इयाजेति पूर्वत्र संबन्धः। अपिर्भिन्नक्रमः, ज्ञानव्यपाश्रयोऽपीति। ननु पापनिवृत्तिः प्रकारान्तरेण दुःखानुभवेनापि भवतीति नानुष्ठाननियम इत्यत आह—**लोकसङ्ग्रहार्थमपीति।** नन्वहमविद्यया—विहितकर्मणा मृत्युं—विद्याप्रतिबन्धकदुरितं तर्तुकाम इत्यर्थः

"अहं ह्यविद्यया मृत्युं तर्तुकामः करोमि वै ।
राज्यं यागांश्च विविधान्भोगैः पुण्यक्षयं तथा ॥"

इति तस्यैव भोगनिमित्तपुण्यक्षयवचनसमभिव्याहारात्,

"जातिस्मरोऽप्यसौ पापक्षयकाम उवाह ताम् ।"

इति भरताख्याने दर्शनाच्च ।

"कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।"

इति यदि ते ज्ञानिनः, कर्मणैव हि सह संसिद्धिं गताः लोकसङ्ग्रहं कुर्वन्तो न कर्मात्याक्षुः । अथ न; कर्मणा निरभिसन्धिकृतेन संसिद्धिं—सत्त्वशुद्धिलक्षणां गता इत्यर्थः ।

"योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ।"

इत्यादिदर्शनात् । तस्मात्तवाविधेयश्रवणमननाङ्गत्वायोगेन

रत्नतूलिका

किं न स्यादित्यत आह—तस्यैवेति । केशिध्वजस्यैवेत्यर्थः । समभिव्याहारादिति । तथा च यथा भोगेनारब्धफलस्य पुण्यस्य क्षयस्तथा कर्मानुष्ठानायासजदुःखानुभवेन पापक्षयः फलमिति पर्यवस्यतीति भावः । ज्ञानिन इति पक्षे सहार्थतृतीया, पक्षान्तरे हेतुतृतीयेत्यभिप्रेत्य व्याचष्टे—कर्मणैव हीति । सङ्गं—फलाभिसन्धि त्यक्त्वा आत्मशुद्धये—सत्त्वशुद्धय इति स्मृत्यर्थः । इयता प्रबन्धेन कर्मणां समुच्चित्यानुष्ठानं नास्तीत्यतो न कर्मविचारप्राथम्यानियम इत्युक्तम्, इदानीमस्त्वनुष्ठानं, तथापि न तद्विचारप्राथम्यानियमः; ब्रह्मविचारप्रवृत्त्यनन्तरं कृतेन कर्मविचारेणापि तदुपपत्तेरिति युक्त्यन्तरं समुच्चिन्वन्नुपसंहरति—तस्मादिति । श्रवणाङ्गत्वे कर्मणां तेन सह समुच्चित्यानुष्ठानाय श्रवणप्रवृत्तेः पूर्वमेव कर्मविचारः स्यादित्यतस्तन्निराचष्टे—तवाविधेयेति । यददृष्टफलं तस्यैवारादुपकारकमङ्गं भवति ।

विधेयनिदिध्यासनाङ्गतया समुच्चित्योपादानस्यापि कर्मणां शमादिवदनन्तरविचारेऽप्युपपत्तेर्न तद्विचारप्राथम्यनियमः ॥

धर्मविचारप्राथम्ये हेत्वन्तरनिरासः

अथोच्येत—तमेतमित्यादिवाक्यार्थस्य क्रियाकर्मसाध्यसाधनभावस्य तार्तीयीकविचारगोचरस्य यज्ञादिपदार्थाज्ञाने दुर्ज्ञानतया तज्ज्ञानाय कर्मविचारप्राथम्यमिति, तथापि तृतीयलक्षणस्यैवं कर्मविचारानन्तर्यं स्यात्, तत्रैव क्रियाकर्मसाध्यसाधनभावचिन्तनात्। यद्युच्येत—विषयफलयोरपि विद्यांशतया सकलस्यापि ब्रह्मविचारस्य साध्यविचारत्वेन तत्साधनयज्ञादिपदार्थज्ञानाय कर्मविचारप्राथम्यं प्राप्यत इति। एवं सति सर्वापेक्षादिविचारोऽपि फलविचारानन्तरमेव स्यात्, साध्यपदार्थज्ञानस्य तावदवसानत्वात् ॥

रत्नतुलिका

दृष्टफलस्य तादृशाङ्गं विनाप्युपपत्तेरिति भावः। शमादिवदिति। यथा शमादेर्विद्यया सहानुष्ठेयत्वेऽपि तृतीयाध्याये विचार्यता तथेत्यर्थः ॥

एवं कर्मणां फलतो हानाय स्वरूपेणोपादानाय च कर्मविचारप्राथम्यमिति पक्षद्वयं निरस्तम्। इदानीं तमेतमित्यादिवाक्यार्थज्ञानहेतुभूतयज्ञादिपदार्थज्ञानाय तद्विचारप्राथम्यमिति पक्षं शङ्कते—अथोच्येतेति। विचारयोः परस्परोपजीव्योपजीवकभावसिध्यर्थं—तार्तीयीकविचारगोचरस्येति विशेषणम्। विषयफलयोरपीति। सविषयकविद्याया विषयज्ञानमन्तरा दुर्ज्ञानतया विषयस्यांशता, फलावच्छिन्नक्रियाया एव विजिज्ञासस्वेत्यादौ धातुवाच्यतया फलस्याप्यंशतेति भावः। आद्यद्विकस्य विषयप्रतिपादकत्वादुत्तरद्विकस्य साध्यविद्यास्वरूपतत्साध्यफलप्रतिपादकत्वाच्च सकलस्यापीत्युक्तम्। साध्येति।

अपि च न सविषयफलाया विद्यायाः कर्मसाध्यत्वमेव ब्रह्मविचारशास्त्रस्य तात्पर्यविषयोऽर्थः प्रतिपत्तव्यः, येन कर्मविचारपश्चाद्भावो नियम्येत। मुक्तिविद्यासाध्यसाधनभावो हि तदर्थः। तच्चोभयमत्रैव व्युत्पाद्यत इति न कर्मविचारापेक्षा। न च प्रधानार्थसंस्पृष्टसंस्पर्शिनोऽपि पदार्थैकदेशस्य कर्मणो विज्ञानाय तद्विचारप्राथम्यनियमः; प्रधानादिव्यावृत्तविषयतया विद्याज्ञानाय साङ्ख्यादेरपि तत्प्रसङ्गात्। अपि च यज्ञादिपदानां लोकविदितार्थत्वे न तद्विचारापेक्षा, अविदितार्थत्वे च नतराम्,

## रत्नतूलिका

यज्ञाद्यपेक्षया साध्यभूतो विविदिषावाक्ये यः पदार्थः सविषयफलविद्यारूपस्तज्ज्ञानस्येत्यर्थः। तथा च यथा यज्ञादिरूपपदार्थज्ञानाय कर्मविचारप्राथम्यं तथा वेदनरूपपदार्थज्ञानाय कृत्स्नविचारप्राथम्यमपि स्यादिति फलितोऽर्थः॥

अपि चाथशब्देन ब्रह्मविचारस्य हेत्वानन्तर्यमुच्यते, तच्च विचारात्मकशास्त्रस्य तात्पर्यविषयीभूतो योऽर्थस्तदुपयोग्यानन्तर्यमिति वक्तव्यम्, कर्मविचारश्च न तथेत्याह—अपि च नेति। ननु ययोः साध्यसाधनभावः शास्त्रप्रतिपाद्यः तन्निरूपणानन्तर्यमथशब्दार्थोऽस्तु, न तु विवेकाद्यानन्तर्यमिति यदि कस्यचिद्व्यसनं तं प्रत्याह—तच्चोभयमिति। तथा चास्य शास्त्रस्य तदानन्तर्यं वक्तुमशक्यमिति भावः। उपसंहरति—इतीति। ननु ससाधनविद्याज्ञानाय कर्मविचारप्राथम्यं स्यादित्याशङ्क्य निषेधति—न च प्रधानार्थेति। साध्यसाधनभावो वाक्यार्थो मुक्तिर्वा प्रधानम्, तत्संस्पृष्टा विद्या, तत्संस्पर्शि कर्म, तस्यापीत्यर्थः। तत्प्रसङ्गात् ब्रह्मविचारात्पूर्वं विचारप्रसङ्गादित्यर्थः।

**विद्याप्रकरणे विधेयस्य *प्रकरणान्तरन्यायेनान्यत्वे सति भिन्नविषयविचारानिरूप्यत्वात्। अन्यथा "एष वाव प्रथमो यज्ञो यज्ञानाम्" इत्यादिवाक्यार्थज्ञानोपयोगिपदार्थज्ञानाय तद्विचारप्राथम्यं नियम्येत॥**

रत्नतूलिका

**विधेयस्येति।** अत्र यद्यपि विविदिषाकामो विद्याकामो वा वेदमनुब्रूयाद्यजेतेत्यादिविधिर्न श्रूयते, तथापि विद्याविविदिषयोर्यज्ञादीनां च साध्यसाधनभावस्यालौकिकतया अपूर्वत्वाद्विधिर्वाच्यः, तथा चाप्रसिद्धार्थत्वात्कर्मान्तरं स्यात्। तथा च भिन्नविषयस्य कर्मविचारस्य तत्रानुपयोग इति भावः। प्रसिद्धार्थत्वे त्वन्यत्र क्लृप्तसाधनभावानामेव यज्ञादीनां तेन रूपेण तृतीयान्तपदैरुपस्थितत्वात्तत्करणावच्छिन्ना भावना फले विधीयत इति न कर्मान्तरत्वमिति बोध्यम्। ननु प्रसिद्धार्थत्वेऽपि विशिष्य ज्ञानाय तद्विचारप्राथम्यं वाच्यमित्याशङ्क्य बाधकमाह—**अन्यथेति।** तथा च वाक्यार्थज्ञाने पदार्थज्ञानं हेतुः, न तु हेतुतः कार्यतश्च विशिष्य तज्ज्ञानमिति भावः। तद्विचारप्राथम्यं कर्मविचारप्राथम्यमित्यर्थः। तथा च "सङ्ख्यायुक्तं क्रतोः प्रकरणात्स्यात्" इति तृतीयाध्यायतृतीयपादस्थाधिकरणात्पूर्वं कृत्स्नोऽपि धर्मविचारः प्रसज्येतेति भावः॥

ननु पदार्थप्रसिद्धिमात्रेण वाक्यार्थप्रतीतावपि न तस्याः पर्यवसानम्, अनुष्ठानौपयिकत्वमिति यावत्, ततश्च तदर्थं कर्मविचार-

---

* जैमिनीयद्वितीयाध्यायचतुर्थपादे "प्रकरणान्तरे प्रयोजनान्यत्वम्" इति पूर्वकर्मासन्निधिरूपप्रकरणान्तरेण कौण्डपायिनामयनगतमासाग्निहोत्रस्य नित्याग्निहोत्राद्भेदो वर्णितः, तन्न्यायेनेत्यर्थः।

अथ यज्ञादिपदार्थानां व्युत्पन्नत्वेऽपि विना विशेषविज्ञानं विनियोगप्रतिपत्त्यपर्यवसानमिति चेत्, किं चातः? सञ्जाततीव्रविविदिषस्य सर्वकर्मसन्न्यासेन ब्रह्मज्ञानप्रवृत्तस्य तदनपेक्षत्वात्। विविदिषोद्देशेनानुष्ठेयस्वरूपविज्ञानं तत्साधनत्वविज्ञानं चोभयविचारसाध्यमिति चेत्, तथापि न पौर्वापर्यनियमः, विशेषहेत्वभावात्। व्याख्येयवेदाक्षरपाठक्रमस्य वैधाध्ययनधर्मत्वेनान्यप्रयुक्तविचारे [1]संक्रमयितुमशक्यत्वात्। न चाधीत-

## रत्नतूलिका

प्राथम्यमित्याशङ्कते—अथ यज्ञादीति। किं सञ्जाततीव्रविविदिषस्यानुष्ठानाय विशिष्य कर्मज्ञानमपेक्षितम्, किं वेतरस्येति विकल्पं हृदि निधाय पृच्छति—किं चात इति। अपर्यवसानेन च किं भवतीत्यर्थः। आद्य आह—सञ्जातेति। तदनपेक्षत्वात् पर्यवसानानपेक्षत्वादित्यर्थः। न द्वितीयः; तस्य केवलकर्मानुष्ठायिनो ब्रह्मविचारे प्रवृत्त्यभावेन न कर्मविचारप्राथम्यमिति भावः। ननु स्वर्गादिफलोद्देशेन कर्मानुष्ठातुर्ब्रह्मविचारप्रवृत्त्यनपेक्षायामपि विविदिषोद्देशेन तदनुष्ठातुर्ब्रह्मविचारे प्रवृत्तिर्वाच्या; कर्मणां विविदिषासाधनत्वस्योत्तरमीमांसावसेयत्वादित्याशङ्कते — विविदिषोद्देशेनेति। ननु पाठक्रम एव विशेषहेतुरित्यत आह—व्याख्येयेति। वेदस्याखण्डस्य क्रमाभावादक्षरैरित्युक्तम्। एवमपि यद्यध्ययनविधिर्विचारमपि प्रयुञ्जीत तदाध्ययनक्रमेणैव विचारः स्यात्, तच्चोभयोरप्यनिष्टमित्याभिप्रेत्याह—अन्यप्रयुक्तेति। ननु विचारद्वयस्य युगपत्कर्तुमशक्यतया क्रमापेक्षायामन्यार्थप्राप्तोऽपि क्रम आद्रियते, तदतिक्रमे कारणाभावादित्याशङ्क्य निषेधति—न चाधीतेति। असिद्धो हेतुरिति दूषयति—

[1] संक्रामयितु-ग.

क्रमेण धर्मं जिज्ञासते, प्रथमाह्निके कारणाभावादिति वाच्यम्; वेदान्तेषु नित्यनिरतिशयफलसंभावनौत्कट्येन तदुपायजिज्ञासाप्राथम्योपपत्तेः। एतेन चेतनानां त्रिवर्गे प्रथमप्रावण्यसंभवादर्थस्वभावादेव धर्मविचारप्राथम्यमिति निरस्तम्; संभवमात्रेण प्राथम्यानियमानुपपत्तेः। त्रिवर्गप्रवणचित्तस्य विचारितकर्मणोऽपि ब्रह्मविचारस्यानारम्भ्यत्वात् कुतूहलाद्वा बहुश्रुतत्वबुध्या वा तदारम्भेऽपि कर्मविचारस्य सतोऽप्यहेतुत्वेनानपेक्ष्यत्वात्। त्रिवर्गकामस्यापि त्रैवर्गिकमिदमन्यदन्यथेति विचारात्प्रागनिर्णयेन कदाचिद्ब्रह्मविचारप्राथम्यसंभवाच्च। यत्तु विचारद्वयविषयकर्मब्रह्मविद्ययोर्हेतुहेतुमत्तया पौर्वापर्यनियमे सति

रत्नतूलिका

वेदान्तेष्विति। तदौत्कट्यं च कर्मकाण्डे ज्ञानफलानित्यत्वस्यानाम्नानात्, ज्ञानकाण्डे च कर्मफलानित्यत्वस्य "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिनाम्नानाच्चेति भावः। एतेनेति। वक्ष्यमाणेनेत्यर्थः। त्रिवर्गे धर्मार्थकामेषु। येन हेतुना धर्मविचारप्राथम्यमुक्तं तेनैव हेतुना ब्रह्मविचारानारम्भोऽपि स्यादिति दूषणान्तरमाह—त्रिवर्गप्रवणचित्तस्येति। ननु त्रिवर्गप्रवणचित्तस्य मुमुक्षया प्रवृत्त्यसंभवेऽपि हेत्वन्तरात्प्रवृत्तिः संभवतीत्यत आह—कुतूहलाद्वेति। अनपेक्ष्यत्वादिति। तथा च सूत्रे अथशब्देन तदानन्तर्योक्तिर्व्यर्था स्यादिति भावः। अनिर्णयेनेति। ब्रह्मकाण्डेऽपि "जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा" इत्यादित्रैवर्गिकफलस्यापि श्रवणादिति भावः। हेतुहेतुमत्तयेति। विविदिषाद्वारा वा प्रतिबन्धनिवृत्तिद्वारा वा कर्मविद्यायास्तद्धेतुतेति भावः। शेषिणोः क्रमेण शेषयोः क्रम इत्यत्र पूर्वतन्त्रसिद्धं

तच्छेषविचारयोरपि तथा स्यात्, "मुख्यक्रमेण चाङ्गानां तदर्थत्वात्" इति, तन्न; जन्मान्तरविचारितानुष्ठितकर्मणामपि प्रतिबन्धकदुरितनिवृत्तिद्वारा विद्याहेतुत्वोपपत्तेः। न चातीतभवकर्मविचारोऽपीदानींतनब्रह्मविचारप्रवृत्तिहेतुः, येन तदनन्तरा ब्रह्मजिज्ञासा चोद्येत, तस्य चिरान्तारितत्वेन तदानन्तर्याभिधानवैयर्थ्यात्॥

रत्नतूलिका

न्यायं दर्शयति—मुख्यक्रमेण चेति। मुख्यक्रमेणाङ्गानां क्रमः, तेषां मुख्यार्थत्वात्। ततश्च प्रधानप्रत्यासत्त्यनुग्रहाय मुख्याधीनः क्रमोऽनुसर्तव्य इति सूत्रार्थः। अस्य च "सारस्वतौ भवतः" इति विहितयोः स्त्रीपुंदैवत्ययोर्यागयोर्मध्ये याज्यापुरोनुवाक्यापाठक्रमेण प्रथममनुष्ठीयमानस्य स्त्रीदैवत्यस्य निर्वापः प्रथमम्, पश्चात्पुंदैवत्यस्येति विषय इति भावः। तमेतमित्यादिवाक्ये कर्मणामेव विद्यार्थत्वं प्रतीयते, तच्चानुष्ठानेन सिध्यति, अनुष्ठानं च तज्ज्ञानाधीनम्, ज्ञानं च विचारसाध्यमिति कर्मविद्याविचारयोर्ब्रह्मविद्याविचारहेतुता वाच्या, तच्चानुष्ठानं जन्मान्तरीयमपि भवतीति कथं कर्मज्ञानस्य विद्यायां हेतुत्वम्, कथं वा तद्विचारस्य ब्रह्मविचार इत्यभिप्रेत्य दूषयति—तन्नेति। ननु यथातीतानामपि कर्मणां किंचिद्द्वारा विद्याहेतुत्वं तथा तद्विचारस्यापीत्याशङ्क्य निषेधति—न चातीतभवेति। कर्मणां हेतुत्वे प्रामाणिके सति प्रतिबन्धकनिवृत्तिर्द्वारं कल्प्यते। न चात्र तथेति वैषम्यमिति भावः। इदमुपलक्षणम्—अतीतकर्मविद्यापि [1]तदानींतनब्रह्मविद्यायां न हेतुरित्यपि बोध्यम्। ननु हेतुत्वाभावेऽपि परम्परया प्रयोजकत्वेनापि पूर्ववर्तित्वमस्तीत्यत आह—तस्येति। अधिकारपरिच्छेदाय

[1] इदानीं—च. कुं.

यत्पुनरुद्गीथादिविषये कर्मसमृध्यर्थोपासनानि कर्माश्रितानीति तद्विचारेणेह क्रियमाणा पूर्ववृत्तां धर्मजिज्ञासामपेक्षत इति, तच्छास्त्रार्थानवबोधनिमित्तं मत्तप्रलपितमरमणीयम् । न ह्युद्गीथाद्युपासना ब्रह्मविचारशास्त्रार्थः, किं तर्हि? कर्मार्था सा प्रथमतन्त्र एव विचार्या [1]सती [2]ब्रह्मज्ञानेन मानसत्वादिसामान्यात्तन्निरूपणेन शक्यत्वाच्चेह प्रासङ्गिकी विचार्यते । न च तदपेक्षितापि धर्मजिज्ञासा प्रधानब्रह्मजिज्ञासाप्रवृत्तिहेतुः,

रत्नतूलिका

अथशब्देन हेत्वानन्तर्यमुच्यते, पूर्ववृत्तं चेज्जन्मान्तरसाधारणं तदा तदानन्तर्यकथनं व्यर्थम् । तदुक्तावपि 'अहं कृतकर्मविचारः, अतोऽत्राधिक्रिये' इत्यधिकारज्ञानासंभवादिति भावः ॥

कर्मसमृध्यर्थोपासनानीति । "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्येवमादीनीत्यर्थः । अपेक्षत इति । उद्गीथादिरूपाश्रयज्ञानाभावे तदुपासनानुपपत्तेरिति भावः । शास्त्रार्थानवबोधेति । इदं शास्त्रे प्रतिपादितम्, इदं प्रासङ्गिकमिति विभागाज्ञानप्रयुक्तमित्यर्थः । तदेव विशदयति—न हीति । तर्हि प्रथमतन्त्र एव सा विचार्यतामित्यत आह—प्रथमतन्त्र एवेति । मानसत्वादीत्यादिपदेन ब्रह्मविषयकत्वं गृह्यते । तन्निरूपणेनेति । ब्रह्मनिरूपणेनेत्यर्थः । शक्यत्वादिति । अन्यथा उद्गीथे तद्दृष्टेः कर्तुमशक्यत्वादिति भावः ।

---

[1] सती सा—ङ. [2] ब्रह्मज्ञाने—ग.

तत्रानपेक्ष्यत्वात् । न चोद्गीथाद्युपासनानां ब्रह्मदृष्टिरूपाणां ब्रह्मज्ञानाधीनत्वादिहैव सङ्गतिर्युक्ता, न प्रथमतन्त्र इति शङ्क्यम् ; तथापि कर्माश्रयत्वेन तदपेक्षाणां कर्मसमृध्द्यर्थतया तदपेक्षितानां च पूर्वतन्त्रसङ्गतेरेव युक्ततरत्वात् । न च सोपासनानि निरभिसन्धीन्यपि कर्माणि सत्त्वशुद्धिव्यवधानानि सन्ति [1]शमाद्यङ्गकप्रवृत्तब्रह्मविद्यायामङ्गतया करणतया वा तदैव

रत्नतूलिका

तत्रानपेक्ष्यत्वादिति । तथा च ब्रह्मजिज्ञासा स्वहेत्वानन्तर्यमपेक्षते, प्रासङ्गिकं च धर्मविचारानन्तर्यमिति विरोधे प्रधानजिज्ञासाहेत्वानन्तर्यमेवाथशब्दार्थ इति भावः । प्रासङ्गिकत्वमसिद्धमित्याशङ्क्य निषेधति—न चोद्गीथेति । सङ्गतिर्नामैकवाक्यता, सा च यत्र [2]परस्पराकाङ्क्षा तत्र युक्ता, न तु यत्र हेतुस्तत्रेति परिहरति—तथापीति । ननु स्वसमृध्द्यर्थोपासनासहितानां कर्मणां विद्यायाश्च परस्परापेक्षायां विद्योपासनयोरपि सा प्राप्ता, ततश्चेहैव सङ्गतिर्युक्ततरा, ब्रह्मज्ञानसाध्यत्वं चाधिको हेतुरित्याशङ्क्य निषेधति--न च सोपासनानीति । सत्त्वशुद्धिव्यवधानानीत्यनेन तेषां जन्मान्तरेऽप्यनुष्ठानं संभवतीति द्योत्यते । शमाद्यङ्गकेत्यादिविद्याविशेषणेन तादृशविद्यया तदानीं कर्मणां समुच्चित्यानुष्ठानासंभवो द्योत्यते । करणतया समुच्चयो विचारेण सहेति बोध्यम् । कालान्तरे विद्यार्थतयानुष्ठानस्य सिद्धान्तेऽपि सत्त्वादाह—तदैवेति । तदानीमेव कर्मणां समुच्चये तत्समृध्द्यर्थतयोपासनान्यपि तदैवानुष्ठेयानि स्युः । अतस्तद्विचारोऽत्र सङ्गतः स्यादिति भावः ।

---

[1] शमाद्यङ्गकब्रह्म—ग.  [2] पराकाङ्क्षा—ग.

समुच्चीयन्ते, येनेतरे[1]तरापेक्षयेहाप्युपासनाविचारः सङ्गच्छेत। अपि चैवमपि शास्त्रप्रवृत्तेरतत्प्रधानतया तदपेक्षितधर्मविचार-हेतुकत्वमयुक्तमतिप्रसङ्गादित्युक्तम् ॥

न चैवमुपासनानां विधेयक्रियात्वसामान्यादाश्रयकर्म-निरूपणेन शक्यत्वाच्च कर्मकाण्ड एव विधिस्तद्विचार एव विचारश्च स्यात्, कर्मोपयोगित्वस्य विशेषकत्वादिति शङ्क्यम्; आम्नायस्य नियोगपर्यनुयोगायोगात्। वदन्ति हि—"आम्नातस्यार्थं वक्तुं प्रभवामो नाम्नातं पर्यनुयोक्तुम्" इति। विचारस्य च तदधीनत्वान्नातिक्रमः। न तु ब्रह्मकाण्डे विधानात् तद्विचारे विचाराच्च तासां ब्रह्मविद्योपयोगः शक्यते कल्पयितुम्, "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति"

रत्नतूलिका

अतत्प्रधानतयेति। कर्मविद्यासाध्यसाधनभावप्रधानभिन्नतयेत्यर्थः। अथ वा उद्गीथाद्युपासनाप्रधानभिन्नत्वादित्यर्थः। तदपेक्षितः उद्गीथादिविद्यापेक्षितः। अतिप्रसङ्गादिति। सङ्ख्यादेरप्यपेक्षाप्रसङ्गादित्युक्तमित्यर्थः॥

नियोगः—एवं कुर्विति नियमनं, पर्यनुयोगः—इत्थं किमर्थं न कृतमित्याक्षेपः, तयोरयोगादित्यर्थः। नन्वस्त्वाम्नायस्य स्वातन्त्र्यम्, विचारस्य तु पुरुषाधीनत्वाच्छाखान्तरोक्ताङ्गानां शाखान्तरोक्तकर्मसूपसंहारवत् ब्रह्मकाण्डविहितोपासनानां कर्मकाण्डे किमिति विचारो न कृत इत्याशङ्क्याह—विचारस्य चेति। तदधीनत्वात् विध्यधीनत्वादित्यर्थः। नातिक्रम इति। ब्रह्मकाण्डमतिक्रम्य कर्मकाण्डे

[1] तरानपेक्ष—ग.

इति कर्मसमुच्चयार्थत्वस्य प्रत्यक्षत्वात् । न चैवमुद्गीथाद्युपासना-विधिविचारावनर्थकौ स्याताम्; विद्यार्थिना कर्मणामननुष्ठेयतया तदाश्रयोपासनानुपयोगात्, कर्मिणश्च तत्तत्फलमाशासानस्य ब्रह्मविचारप्रवृत्त्यसंभवेन तदधिगमस्यैवायोगादिति वाच्यम्। विचारितवेदान्तेभ्य उपश्रुत्य कर्मिणस्तदनुष्ठानोपपत्तेः। वस्तुतस्तु संयोगपृथक्त्वेन कृच्छ्रफलसंयोगविहितब्रह्म-

## रत्नतूलिका

विचारो न कृत इत्यर्थः। प्रत्यक्षत्वादिति। प्रत्यक्षश्रुतिबोध्यत्वादित्यर्थः। तथा च प्रत्यक्षश्रुतिविरोधे ब्रह्मकाण्डे विधानादित्याद्यनुमानं [1]न प्रभवतीति भावः। कर्मसमुच्चयार्थोपासनाविधिविचारयोरन्यथानुपपत्त्या विद्यया कर्मणां समुच्चित्यानुष्ठानसिद्धिरिति काशकुशावलम्बिनः शङ्कामाशङ्क्य निराकरोति—न चैवमिति। एवं कर्मद्वारा तासां ब्रह्मविद्योपयोगाभाव इत्यर्थः। किं विद्यार्थिनस्तदुपदेशविचारौ, किं वा कर्मिण इति विकल्प्य नाद्य इत्याह—विद्यार्थिनेति। द्वितीय आह—कर्मिणश्चेति। तत्तत्फलमाशासानस्येति प्रवृत्त्यसंभवे हेतुः, वैराग्यस्य प्रवृत्तिहेतुत्वादिति भावः। तदधिगमस्य ब्रह्माधिगमस्येत्यर्थः। द्वितीयं पक्षमालम्ब्य परिहरति—विचारितवेदान्तेभ्य इति। तद्दृष्टौ तज्ज्ञानमात्रमपेक्षितम्, न तु तन्निर्णयोऽपीति भावः। तन्निर्णयोऽपि संभवतीति पक्षान्तरमाह — वस्तुतस्त्विति। कृच्छ्रफलेति।—

[1] न भवतीति–घ.

विचारे तादर्थ्येन कर्मिणोऽपि प्रवृत्तिसंभवादन्यार्थप्रवृत्तस्यापि तस्य निर्णीतकर्माश्रयोपासना[1]नुष्ठानयोगात्तद्विधिविचारावर्थवन्ताविति ॥

कर्मकाण्डोक्तन्यायानां ब्रह्मविचारानुपजीव्यत्वम्

यत्तु कर्ममीमांसान्यायोपजीवित्वाद्ब्रह्ममीमांसायास्तदानन्तर्यनियम इति, तत्र यद्यपि वेदप्रामाण्योपयोगिन्यायमात्रमुपजीव्यते, तथापि न धर्मविचारस्य प्राथम्यनियमः। न च वेदप्रामाण्यविचारप्राथम्याङ्गीकारे तत्र तत्रोक्तसङ्गतिविशेषेण

रत्नतूलिका

" दिने दिने च वेदान्तश्रवणाद्भक्तिसंयुतात् ।
गुरुशुश्रूषया लब्धात्कृच्छ्राशीतिफलं लभेत् ॥ "

इति स्मृतेरिति भावः। तादर्थ्येन कृच्छ्रफलार्थेन। एवं च कर्मिणोऽपि ब्रह्मविचारे प्रवृत्तस्य कस्यचिल्लाभादुपासनाविधिविचारावर्थवन्तावित्युपसंहरति—अन्यार्थप्रवृत्तस्यापीति। अथ वा ननु कृच्छ्रफलार्थं प्रवृत्तस्य विचारस्य कथं ब्रह्मनिर्णयहेतुता, येनोद्गीथादौ तद्दृष्टिः स्यादित्यत आह—अन्यार्थेति। फलोद्देशेनापि क्रियमाणस्य विचारस्य परोक्षरूपनिर्णयहेतुत्वमविरुद्धमिति भावः। निर्णीतं यत्कर्माश्रयोपासनम्। तस्य निर्णीतत्वं च विषयीभूतब्रह्मांशेनेति बोध्यम्।

सुहृद्भूत्वा पराभिमानं खण्डयितुमेकदेशोपजीव्यत्वमङ्गीकरोति—तत्र यद्यपीति। अभिमानं खण्डयति—तथापीति। अङ्गीकृतैकदेशप्राथम्यमादाय कृत्स्नप्राथम्यमाशङ्क्य निषेधति—न च वेदप्रामाण्येति। तत्र तत्रोक्तेति। प्रथमाध्याये प्रमाणे निरूपिते प्रमेयनिरूपणं प्रसक्तम्, तत्रापीयन्ति धर्मस्वरूपाणीति स्वरूपनिरूपणात्मक-

---

[1] नुष्ठानायोगात्–ग.

तत्प्रमेयधर्मभेदादिविचारा एव प्रथमं प्रवर्तन्त इत्यर्थप्राप्तं तदानन्तर्यं ब्रह्मविचारस्येति वाच्यम्; यदृच्छासन्निपातिनस्तदानन्तर्यनियमस्य हेत्वानन्तर्यपरसौत्राथशब्दार्थत्वायोगात्, वेदप्रामाण्यस्य धर्मब्रह्मोभयप्रमेयविचारोपयोगसाधारण्ये सति सङ्गतिविशेषानिरूपणेन धर्मविचारप्राथम्यनियमस्यैवासिद्धेश्च ॥

रत्नतूलिका

भेदलक्षणस्य प्राथम्यम्, अनन्तरं भिन्नानां कर्मणां शेषशेषिभावो विचारयितुं शक्यत इति तन्निरूपणात्मकतृतीयाध्यायस्य सङ्गतिः, अनन्तरं शेषिण एव शेषप्रयोजकत्वं नान्यस्येति प्रयुक्तिविचाररूपचतुर्थाध्यायस्य, प्रयोज्यवर्गनिर्णयानन्तरं तद्गोचरक्रमाविचारात्मकस्य पञ्चमाध्यायस्य, एवं सक्रमे अनुष्ठेयवर्गे निरूपिते तत्र को वाधिकारीति अधिकारविचारात्मकस्य षष्ठस्य, एवमुपदेशे निरूपिते तदधीनातिदेशविचारस्य, तत्रापि सामान्यविचारात्मकस्य सप्तमस्य, ततो विशेषातिदेशात्मकस्याष्टमस्य, एवमतिदेशे विचारिते अनन्तरमतिदिष्टपदार्थानां द्वारान्तरसम्बन्धनिमित्तान्यथाभावात्मकोहविचाररूपस्य नवमस्य, एवमतिदिष्टपदार्थस्वरूपगतान्यथाभावात्मके पदार्थस्यान्तरङ्गभूते ऊहे चिन्तिते पश्चाद्बहिरङ्गभूतस्य पदार्थनिवृत्त्यात्मकस्य बाधस्य चिन्तेति दशमाध्यायस्य, एवमुपदेशेऽतिदेशे च चिन्तिते तदुभयसाधारण्येन तन्त्रावापाभ्यां प्रयोगपरिमाणविचारात्मकस्यैकादशस्य, ततः प्रसङ्गविचारात्मकस्य द्वादशस्येति सङ्गतिविशेषेणेत्यर्थः। हेत्वानन्तर्येति। यदृच्छया पूर्ववर्तिनो धर्मविचारस्यानन्यथासिद्धनियतपूर्ववर्तित्वाभावान्न हेतुत्वमिति भावः। एवमनन्यथासिध्यभावान्न धर्मविचारस्य हेतुतेत्युक्तम्। इदानीं नियतपूर्ववर्तित्वाभावान्न हेतुतेत्याह—वेदप्रामाण्यस्येति। धर्मवद्ब्रह्मणोऽपि वेदप्रमेयत्वात्तत्प्रामाण्यनिरूपणानन्तरं ब्रह्मनिरूपणमपि कदाचित्किं न स्यादिति भावः॥

ब्रह्मविचारे कर्मकाण्डीयवेदप्रामाण्योपयोगिन्यायोपजीव्यत्वाङ्गीकारपरित्यागः

वस्तुतस्तु न वेदप्रामाण्येऽपि जैमिनीयन्याया उपजीव्यन्ते। इहापि शास्त्रयोनित्वाधिकरणे ब्रह्म शास्त्रकर्तृ न वेति विचारे सकर्तृकत्वे पुंबुद्ध्यनुप्रवेशानुप्रवेशाभ्यां प्रामाण्याप्रामाण्यविचारस्याप्यनुगतत्वात्। देवताधिकरणे च विग्रहवद्देवताभ्युपगमे डित्थादिवदिन्द्रादिपदानामेकव्यक्तिवृत्तितायामाधुनिकसङ्केतितत्वेनाप्रामाण्यं मा शङ्कीति "शब्द इति चेन्नातःप्रभवात्"

रत्नतूलिका

अङ्गीकृतमेकदेशोपजीव्यत्वमपि परित्यजति—वस्तुतस्त्विति। इहापीत्यपिशब्देन अन्यथा पूर्वतन्त्रसिद्धस्यात्र विचारो न क्रियेत, पौनरुक्त्यापातादिति युक्तिः सूच्यते। अनुगतत्वादिति। ब्रह्म शास्त्रकर्तृ न वेति प्रधानविचारे कर्तृत्वे सति पुंबुद्ध्यनुप्रवेशाद्वेदस्याप्रामाण्यं भवति न वेति तदर्थविचारतया प्रामाण्यविचारस्याप्यनुगतत्वादित्यर्थः। एकव्यक्तिवृत्तितायामिति। यथा पुत्रे उत्पन्ने डित्थादिसङ्केतः क्रियते व्यवहाराय, तथा काश्यपादिभिरेकस्मिन्व्यक्तिविशेषे इन्द्र इति कृतः सङ्केतो न व्यक्त्यन्तरवृत्तिर्भवति, अनुगतरूपाभावादिति भावः। एवं चेदानीन्तनसङ्केतसापेक्षत्वादप्रामाण्यशङ्का स्यादित्याह—आधुनिकेति। आधुनिकैः कश्यपादिभिः सङ्केतितत्वेनेत्यर्थः। अत्रैकव्यक्तिवृत्तित्वोपपादनं [1] गोघटादिशब्दवज्जातिशब्दत्वव्यावर्तनेन सङ्केतितत्वं द्योतयितुम्। शब्दे—इन्द्रादिशब्दे विरोधः आधुनिकसङ्केतितत्वेनेति चेन्न, अतः प्रभवात्—पूर्वसिद्धाभिधानादेवेन्द्रादीनां प्रभवात्, सङ्केतितत्वे तत्स्मरणपूर्वकमिन्द्रादिसृष्ट्ययोगादिति सूत्रार्थः।

[1] गोघटादिशब्दत्वव्या—च.

इति पूर्वसिद्धाभिधानानुस्मरणपूर्विकैवेन्द्रादिसृष्टिरित्यभिधाय, वाक्येऽपि पुंबुद्धिमूलत्वनिरासाभिप्रायेण च "अत एव च नित्यत्वम्" सम्प्रदायाविच्छेदे सति कर्तुरस्मरणादिति स्थिरीकृत्य, "समाननामरूपत्वाच्चावृत्तावप्यविरोधः" इति सृज्यमानवस्तवनित्यत्वनिमित्तनित्यानित्यसंयोगविरोधमूलाप्रामाण्यपरिहाराच्च। यत्तु भाष्ये गतार्थत्वमाशङ्क्य तत्र पर्यहारि "(स्वतन्त्रस्य) *कर्तुरस्मरणादिति स्थिते वेदनित्यत्वे ... तदेव (वेद) नित्यत्वं स्थितं

## रत्नतूलिका

तत्रातः प्रभवादित्यमुमंशं विशदयति—पूर्वसिद्धेति। लोके हि तत्तदर्थसृष्टिस्तत्तद्वाचकशब्दपूर्विका दृष्टेति भावः। तथा च न [1]साङ्केतिकशब्दः, किं त्वमात्यादिशब्दवत्स्थानविशेषोपाधिको जातिवाचको वेति बोध्यम्। वाक्येऽपीति। पदे पुंबुद्धिमूलत्वप्रयुक्ताप्रामाण्यस्याकृतिवाचित्वमङ्गीकृत्य पूर्वसूत्रेणैव निरासादिति भावः। अत एव जातिवाचित्वादेवेत्यर्थः। नन्वेवं पदनित्यत्वेऽपि न वाक्यनित्यत्वसिद्धिरित्यत आह—सम्प्रदायेति। स्थिरीकृत्येति। पूर्वोक्तं प्रामाण्यमिति शेषः। समानेति। तत्तत्कल्पेषु सृज्यमानानां पदार्थानां समाननामरूपत्वात्तेषामावृत्तावपि पुनःपुनः सृष्टिप्रलययोरभ्युपगमेऽपि वेदप्रामाण्याविरोधः। [2]तत्तद्रूपावच्छिन्नानामेवेन्द्रादिपदार्थत्वात् तेषां प्रवाहानित्यत्वादिति सूत्रार्थः। उक्तेऽर्थे भाष्यविरोधमाशङ्क्य परिहरति—यत्तु भाष्य इति। तदेव भाष्यं दर्शयति—कर्तुरस्मरणादितीति। "अत एव च नित्यत्वम्"

---

* कर्तुरस्मरणादिभिरिति मुद्रितशाङ्करभाष्यपाठः.

[1] साङ्केतिकः शब्दः—च. कुं. [2] तत्तद्रूपविशेषाव—च. कुं.

द्रढयति" इति तत्तस्यैतदसाधारणविषयत्वाभावाभिप्रायम्, न तु न्यायोपजीवनाभिप्रायम्; अन्यथा आक्रियार्थत्वादर्थवादवद्वेदान्तानामपि विध्येकवाक्यतया प्रामाण्यापत्तौ ब्रह्मतात्पर्यभङ्गप्रसङ्गात्। पदपदार्थसंबन्धौत्पत्तिकत्वादिन्याया उपजीव्यन्ते, नांशान्तरमित्यर्धजरतीयायोगात्। न च "विधिना त्वेकवाक्यत्वात्" इति विधिसमभिव्याहाररूपैकवाक्यतोपजीवनेन

## रत्नतूलिका

इति सूत्रभाष्ये अपेक्षितांशलेखनमिदम्। तथा च तदुपजीवनानङ्गीकारे गतार्थत्वशङ्काया एवानुन्मेषात्तदङ्गीकारः स्पष्ट इति भावः। भाष्याभिप्रायमाह—**तदिति**। तस्य कर्तुरस्मरणादिना वेदप्रामाण्यसमर्थनस्य। अयं भावः—कर्तुरस्मरणादिना वेदप्रामाण्यसमर्थनं नास्मन्मात्रस्य कर्तव्यम्, किं तु जैमिनेरपीति [1] तस्यैतद्वैयासिकशास्त्रासाधारणविषयत्वव्यावर्तनाय भाष्यमिति। **अन्यथेति**। न्यायोपजीवनाभिप्रायत्वे इत्यर्थः। नन्वविरुद्धांश एवोपजीव्यते, नेतर इत्यत आह—**पदपदार्थेति**। अर्धं जरती भवतु, नार्धान्तर इति कामनान्यायः अर्धजरतीन्यायः। अथ वा अर्धं जरत्याः कामयते, नार्धान्तरमिति न्यायः। अन्यथा अविरुद्धांशस्य सर्वशास्त्रेष्वपि सत्त्वात्तदुपजीवनमपि स्यादिति भावः। स्यादेवं यदि वेदान्तानामप्यर्थवादन्यायविषयता स्यात्, सैव तु नास्तीति सोपपत्तिकमाशङ्क्य निषेधति—**न च विधिनेति**। अन्यथा "स्तुत्यर्थेन विधीनां स्युः" इत्येतावतैवाक्रियार्थप्रामाण्यसमर्थने "विधिना त्वेकवाक्यत्वात्" इति तत्समभिव्याहृतत्व-

[1] तदवैयासिक—क. तद्वैयासिक—च.

विध्याकाङ्क्षितस्तुत्यादिना विधिशेषतया प्रामाण्योपपादनमर्थवादादिविषयमेव, वेदान्तानां विधिसमभिव्याहाराभावादिति वाच्यम् ; अर्थवादेषु स्तुत्याद्यभिधानाक्षमतया तल्लक्षणोन्मेषाय विधिसमभिव्याहारोपजीवनात् । वेदान्तेषु पुनरभिधानवृत्त्यैव विध्यपेक्षितदेहादिव्यतिरिक्तात्मनो भोक्तृरूपस्य कर्तुः पार-

## रत्नतूलिका

कथनं व्यर्थं स्यादिति भावः । **अर्थवादादीति** । आदिपदान्मन्त्रनामधेययोर्ग्रहणम् । तथा च प्रामाण्यसमर्थनस्य तन्मात्रविषयत्वे अप्रामाण्यशङ्कापि [1]तावन्मात्रविषयेति भावः । "आम्नायस्य क्रियार्थत्वात्" इति वेदान्तसाधारण्येनाक्रियार्थमात्राप्रामाण्यशङ्कायां तदनुसारेण "विधिना त्वेकवाक्यत्वात्" इति सूत्रस्य तात्पर्यं वर्णनीयम्, उपक्रमप्राबल्यात, न त्वेतदनुसारेणोपक्रमतात्पर्यवर्णनमित्यभिप्रेत्य विधिसमभिव्याहारोपजीवनस्य तात्पर्यमाह—**अर्थवादेष्विति** । **लक्षणोन्मेषायेति** । तेषां शक्त्या स्तुतिपरत्वाभावाल्लक्षणा वाच्या, सानुपपत्तिप्रतिसन्धाने भवतीति समभिव्याहारोपजीवनम्, तथा सति समभिव्याहृतस्यैकवाक्यतान्यायाल्लक्षणोन्मेष इति भावः । ननु तर्हि सिद्धान्तसूत्रस्य वेदान्तविषयत्वाभावान्न्यूनता स्यादित्याशङ्क्य "विधिना त्वेकवाक्यत्वात्" इत्यस्यावृत्त्या वेदान्तप्रामाण्योपपादनं जैमिनेरित्यभिप्रायेण तत्रैकवाक्यत्वमुपपादयति—**वेदान्तेषु पुनरिति** । अभिधानवृत्त्यैवेत्युक्त्या तत्र विधिसमभिव्याहारो नोपजीव्य इति सूचितम् । देहादिव्यतिरिक्तत्वविशेषणेन [2]लौकिककर्मसाधारण्यव्यावृत्त्या वैदिकाव्यभिचारः । कर्तृत्वभोक्तृत्वविशेषणेनाधिकोपदेशव्यावृत्तिः । एवं

---

[1] तन्मात्र—च.    [2] लौकिकसाधारण्य—कुं.

लौकिककर्माव्यभिचारिण इज्यदेवतादेश्च प्रतिपादनादनारभ्याधीतत्वेऽपि पर्णमयीवाक्यवदर्थद्वारकविध्येकवाक्यतायाः जैमिन्यभिमताक्रियार्थप्रामाण्यमूलयुक्तेः संभवात्। अक्रियार्थत्वेनाप्रामाण्यचोद्यसाम्ये सत्याक्षिप्तैकदेश एव समाहितो जैमिनिना वेदान्तभागश्चावशेषित इति कल्पनाहेत्वभावात्। भगवतो महर्षेस्तस्य प्रमादाज्ञानकल्पनायोगाच्च। तस्मान्न प्रामाण्यांशेनोपजीव्या धर्मजिज्ञासा॥

रत्नतूलिका

जीवपरे वेदान्तभागे उक्त्वा ब्रह्मपरेऽप्याह—इज्येति। देवताप्रतिपादनेन चैकवाक्यतायाः संभवादित्यन्वयः। नन्वनारभ्याधीतस्य कथं कर्मैकवाक्यतेत्यत आह—अनारभ्याधीतत्वेऽपीति। अर्थद्वारकेत्यनेन समभिव्याहारलक्षणैकवाक्यता व्यावर्त्यते। तथा चार्थवादेषु लक्षणां विनार्थैकवाक्यत्वानुपपत्त्या तस्य [1]प्रामाण्यहेतुत्वेनान्वयायोगात्तल्लक्षणात्तदुन्मेषाय समभिव्याहारो "विधिना त्वेकवाक्यत्वात्" इत्यस्यार्थः। वेदान्तप्रामाण्योपपादनायावृत्तस्य तु सूत्रस्यार्थद्वारकविध्येकवाक्यत्वमर्थः। सूत्रस्य विश्वतोमुखत्वं भूषणमेवेति भावः। एवमावृत्त्या सूत्रस्य वेदान्तपरत्वे हेतुमाह—अक्रियार्थत्वेनेति। ननु तस्यापि पुरुषत्वात्प्रमादादिरेव हेतुरित्यत आह—भगवत इति। इतरसाधारण्यव्युदासाय विशेषणद्वयम्॥

---

[1] प्रामाण्यहेतुत्वेनान्वयात्तदुन्मेषाय—कुं.

## विद्याभेदाभेदनिरूपणेऽपि जैमिनीयन्यायानुपजीव्यत्वम्

न च विद्याभेदाभेदनिरूपणाय *द्वैतीयीकन्यायापेक्षा; "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्", "नाना शब्दादिभेदात्" इति संयोगरूपचोदनाख्याविशेषस्याभेदन्यायस्य शब्दान्तराभ्यासादिभेदन्यायस्य चात्रैव सूत्रितत्वात् ॥

### रत्नतूलिका

आदिपदग्राह्यं दर्शयन् सूत्रद्वयं तात्पर्यतो व्याचष्टे—संयोगेति। तथा चाद्यसूत्रस्यायमक्षरार्थः—सर्ववेदान्तप्रत्ययं—सर्ववेदान्तजन्यं यत्सगुणविद्यारूपं विज्ञानं प्राणविद्यादि तदेकमेव, चोदनाद्यविशेषात् "यो ह वै ज्येष्ठं च श्रेष्ठं च वेद" इति वाजसनेयिनां छन्दोगानां च प्राणविद्याचोदनायाः, "ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति" इति फलसंयोगस्य ज्येष्ठत्वश्रेष्ठत्वादिविशेषणान्वितप्राणतत्त्वलक्षणरूपस्य, यागे द्रव्यदेवतयोरिव ज्ञाने विषयस्य रूपत्वात्, प्राणविद्येत्याख्यायाश्चाविशेषादिति। द्वितीयसूत्रस्य च "प्राणो वाव संवर्गः", "प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च", "प्राणो ह पिता प्राणो ह माता" इत्येवमादिषु वेद्यस्य प्राणस्य "मनोमयः प्राणशरीरः", "कं ब्रह्म खं ब्रह्म", "सत्यकामः सत्यसङ्कल्पः" इत्यादौ वेद्यस्येश्वरस्य चैकत्वेऽपि विद्या नाना, कुतः, शब्दादिभेदात्-वेद उपासीत "स क्रतुं कुर्वीत" इत्यादिशब्दानां तत्तद्गुणविशिष्टविषयकोपासनावाचकानां भेदादिति। अत्रैवेति। अन्यथा कर्मवत्तदुक्तमित्येव वक्तुं शक्यत्वान्नयायो न सूत्र्येतेति भावः ॥

---

* जैमिनिसूत्रद्वितीयाध्यायोक्तकर्मभेदाभेदनिरूपणोपयोगिन्यायाः द्वैतीयीकन्यायाः। ते च "शब्दान्तरे कर्मभेदः" (जै. सू. २-२-१) इत्यादिना निरूपिताः। तेषामपेक्षेत्यर्थः।

## शमादीनां ब्रह्मविद्याङ्गत्वे जैमिनीयन्यायोपजीव्यत्वाभावः

यदपि [1] शमादीनां ब्रह्मविद्याङ्गत्वावगमः * तार्तीयी[2]क-श्रुतिलिङ्गादिलभ्य इति धर्ममीमांसापेक्षेति, तदेतत्कुशकाशावलम्बनं प्रौढमतयो नाद्रियन्ते। विवेकादिमन्तं मुमुक्षुमुद्दिश्य विद्योपायविधानात्, तादर्थ्येनोपादेयतया तदङ्गतापि भवन्ती तेषां न निवार्यते, रूपभेदोपपत्तेः। तत्र च श्रुतिलिङ्गादि-

### रत्नतूलिका

ब्रह्मविद्याङ्गत्वेति "शमदमाद्युपेतः स्यात्" इति पुरुषार्थवादन्यायसाध्य इत्यर्थः। विवेकादीनामङ्गत्वे लौकिकन्यायानामुपजीवनं न पूर्वतन्त्रसिद्धानामिति दूषणं वक्तुमुद्देश्यविशेषणस्य विवेकादेः कथमङ्गत्वमित्याशङ्कानिरासेन तस्याङ्गत्वसंभवं दर्शयति—विवेकादिमन्तमिति। अत्र मुमुक्षुग्रहणं दृष्टान्तार्थम्, यथा मुमुक्षा अधिकारिविशेषणत्वान्नाङ्गं तथेत्यर्थः। अत्र विद्योपायविधानादिति इन्द्रियनिवारणप्रसक्तौ हेतुर्बोध्यः। अङ्गतापीति। अधिकारिविशेषणस्यापि सतः सामर्थ्यादाफलोदयमुपादेयतया अङ्गत्वमपि स्यादिति भावः। ननु सिद्धस्य विधिप्रतिपत्त्युपयोगिनोऽधिकारिविशेषणत्वं विधिप्रतिपत्त्यनन्तरमितिकर्तव्यतयानुष्ठेयस्य सतोऽङ्गत्वमिति कथमेकस्योभयरूपत्वं, विरोधादित्यत आह—रूपभेदोपपत्तेरिति। कोमलस्य विवेकादेरधिकारिविशेषणत्वम्, अनन्तरमभ्यासेन दृढस्य सतोऽङ्गत्वमिति रूपभेद इत्यर्थः। नन्वस्त्वधिकारिविशेषणस्य सतः सामर्थ्यादङ्गतापि, तथापि सा विनियोगप्रमाणाधीना तन्निरूपणं च पूर्वतन्त्रसिद्धमिति तस्योपजीव्यत्वं स्यादित्यत आह—तत्र चेति।

* जैमिनिसूत्रतृतीयाध्यायोक्तश्रुतिलिङ्गादिप्रमाणबोध्य इत्यर्थः।

[1] शमदमादीनां—ङ. [2] कमुमुक्षुश्रुति—ङ,

न्यायानां लौकिकानामेवोभयैरप्युपजीवनात् । अन्यथा ईक्षत्यादिभिर्लिङ्गैरात्मब्रह्मादिश्रुत्या च ब्रह्मणि वेदान्तसमन्वयो नेह प्रतिपाद्येत, मन्त्रादिसमन्वयन्यायसिद्धत्वात् ।

रत्नतूलिका

लौकिकानामिति । दण्डेन गामुदजतीत्यादौ दण्डस्य तृतीयाश्रुत्या गवानयनक्रियायां विनियोगन्यायस्य, तत्तत्पदार्थसामर्थ्यरूपालिङ्गेन तस्य तस्य क्रियाविशेषे विनियोगन्यायस्य, दृढेन दीर्घेण दण्डेन गामुदजतीत्यादौ एकवाक्यताबलात्कृत्स्नस्य वाक्यस्य गवानयनप्रतिपादनार्थत्वन्यायस्य, भोजनपाकादिप्रकरणे उक्तानां तत्तदर्थानां भोजनपाकादिक्रियार्थत्वन्यायस्य, तत्तत्सन्निधावुक्तानां तत्तदर्थत्वन्यायस्य, देवदत्तगृहमित्यादिसमाख्याया गृहदेवदत्तविनियोगन्यायस्य च लोकसिद्धत्वात्तेषामेव "ऐन्द्र्या गार्हपत्यमुपतिष्ठते", "सदेव सोम्येदमग्र आसीत्" इत्यादावुभयैर्जैमिनीयैर्वैयासिकैश्चोपजीवनादित्यर्थः । पूर्वतन्त्रसिद्धन्यायस्योपजीवने गतार्थत्वं बाधकमाह—अन्यथेति । "ईक्षतेर्नाशब्दम्" इति सूत्र इति शेषः । आत्मब्रह्मादिश्रुत्या चेति । "तत्तु समन्वयात्", "गौणश्चेन्नात्मशब्दात्" इत्यादाविति शेषः । "सदेव सोम्य" इत्यत्र सच्छब्दोपात्तं "सेयं देवतैक्षत" इत्यत्र तच्छब्देनोपादाय "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य" इति तत्रात्मशब्दप्रयोगात्कृत्स्नमिदं वाक्यं ब्रह्मपरमिति निश्चीयत इति भावः । "तदेतद्ब्रह्मापूर्वमनपरं", "अयमात्मा ब्रह्म सर्वानुभूः", "ब्रह्मैवेदममृतं पुरस्तात्" इत्यादिवाक्यानां ब्रह्मश्रुत्या विनियोगो बोध्यः । ननु नेयं श्रुतिर्विनियोजिका, स्वस्य स्वविनियोज्यत्वविरोधात्, प्रसिद्धविनियोजिकायामैन्द्र्येति तृतीयाश्रुतौ तथा अदर्श-

इयांस्तु विशेषः—तत्र विनियोज्यमन्त्रबहिर्भूता श्रुतिः, यथा—"ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति। इह तु तदन्तर्गतैव "अनेन जीवेनात्मना" इति श्रुतिः "सदेव सोम्य" इत्यादि-वाक्यं ब्रह्मणि विनियुङ्क्ते। बोध्यार्थबोधने निरपेक्षशब्दः श्रुतिः। तथा चात्मशब्दः। श्रुत्यादिभिश्च तादर्थ्यमवबोध्यते। तच्च द्विविधम्—एकं शब्दविधया तात्पर्यलक्षणम्। अपरमर्थविधया तदीयतालक्षणम्। तत्र मन्त्राणां "उरु प्रथस्व" इत्यादीनां ब्राह्मणविहितपुरोडाशप्रथनादौ शब्दविधया तात्पर्याभावात्

रत्नतूलिका

नादित्यत आह—इयांस्तु विशेष इति। पूर्वोक्तविरोधं परिहरति—इह त्विति। तथा च प्रत्येकरूपेण विनियोजकत्वं, समुदायरूपेण नियोज्यता। अतो न विरोधः। विनियोज्यान्तर्भावबहिर्भावाभ्यां श्रुतिविनियोग-न्याये न कश्चिद्विशेष इति भावः। तदेवोदाहरणेनोपपादयति—अनेन जीवेनेति। ननु "उरु प्रथस्व" इति प्रथनप्रकाशकपदयुक्तो मन्त्रो यथा प्रथने लिङ्गविनियोज्यस्तथा ब्रह्मप्रकाशकपदयुक्तं "सदेव" इति वाक्यमपि ब्रह्मणि लिङ्गविनियोज्यं स्यात्, न श्रुतिविनियोज्यमित्या-शङ्क्य वैषम्यं वक्तुं श्रुतिस्वरूपं दर्शयति—बोध्यार्थेति। प्रथस्वेति पदस्य न बोध्यार्थे निरपेक्षत्वम्, आत्मश्रुतेस्तु तदस्तीति वैषम्यं वक्तुं बोध्यं तादर्थ्यं विभजते—तच्चेति। एवं बोध्यं तादर्थ्यं विभज्य मन्त्रस्थले अन्यतरव्युदासेनान्यतरं दर्शयति—तत्र मन्त्राणामिति। तयोर्मध्य इत्यर्थः। तत्र मन्त्रस्य शब्दविधया तात्पर्याभावे हेतुगर्भं विशेषणं—ब्राह्मणविहितेति। "सर्वाणि कपालान्यभिप्रथयति" इति ब्राह्मणविहितेत्यर्थः। तथा चान्यप्राप्ते प्रथने मन्त्रस्य न बोधकतेति

"उरु प्रथस्वेति पुरोडाशं प्रथयति" इत्यादिभिर्व्रीह्यादिवत्पदार्थविधयैव तदीयतां नीयमानाना[1]मकिंचित्कारे तदनुपपत्तेरुपकारकल्पनया तदीयत्वे बोधनीये प्रथनप्रकाशसामर्थ्यं लिङ्गतामापद्यते, न सा श्रुतिः; बोध्यस्यार्थविधया तदीयत्वस्य बोधने निरपेक्षत्वाभावात्। आत्मपदादात्मनि बोध्यमाने तु "सदेव" इत्यादीनां शब्दविधया तत्प्रमितिपरत्वस्य तादर्थ्यस्य तदेकवित्तिवेद्यतया तद्बोधने निरपेक्षत्वेन श्रुतिरेव

रत्नतूलिका

भावः। कीदृशं तर्हि [2]तादर्थ्यम्, किं च तत्र प्रमाणमित्यतस्तदुभयं दर्शयति—**उरु प्रथस्वेतीति**। मन्त्राणामप्यनुष्ठेयतया तादर्थ्यम्, न शब्दविधया अतो न लिङ्गाद्विनियोगः, किं तु तदर्थशास्त्रात्। यत्रापि तन्नास्ति "बर्हिर्देवसदनं दामि" इत्यादौ, तत्रापि शास्त्रं कल्पनीयम्। अन्यथा तत्प्रकाशनसामर्थ्येन तादर्थ्ये बोध्ये बोधकतयैव तत्पर्यवस्येदिति हृदि निधाय—**व्रीह्यादिवदिति** अनुष्ठेयोऽर्थो दृष्टान्ततयोपात्त इति बोध्यम्। नन्वर्थविधया तदीयत्वे पश्चादपि लिङ्गं न कल्प्येतेत्यत आह—**अकिञ्चित्कार इति**। कल्प्यश्चोपकारो *दृष्टसंभवन्यायेनानुष्ठेयार्थस्मरणमेवोपकारकत्वेन कल्प्यत इत्यभिप्रेत्याह—**प्रथनप्रकाशेति**। **निरपेक्षत्वाभावादिति**। तदर्थशास्त्रमपेक्ष्य तद्बोधिततादर्थ्यनिर्वाहकतामात्रेण बोधकता, न त्वितरनिरपेक्षेति भावः। आत्मपदे निरपेक्षतां दर्शयति—**आत्मपदादिति**। **तदेकेति** पदादात्मनि बोध्यमाने विपरिवृत्त्य तस्यामेव प्रतीतौ वाक्यनिष्ठं तद्बोधकत्वमपि प्रतीयत इति भावः। एवं तर्हि लिङ्गविनियोगः क्वापि न स्यात्,

---

* दृष्टे सम्भवत्यदृष्टकल्पनस्यान्याय्यत्वादिति दृष्टसम्भवन्यायः।

[1] नां किंचित्कारे—ङ. [2] तात्पर्यम्—क.

**सा। ईदृशतादर्थ्यबोधोपयोगि च सामर्थ्यं लिङ्गम्। यथा "तदैक्षत" इति चेतनाऽव्यभिचरितेक्षणप्रकाशसामर्थ्यं ब्रह्मपरत्वे लिङ्गम्। एवं वाक्यमपि। यथा "यतो वा इमानि भूतानि जायन्ते" इति "तद्ब्रह्म" इत्यस्य विभागे सति साकाङ्क्षतया "सत्यं ज्ञानमनन्तं ब्रह्म" इत्युक्तावमर्शि *यद्वृत्तसामानाधिकरण्यरूपं सत्यादिरूपे ब्रह्मणि कारणवाक्यं**

रत्नतूलिका

"तदैक्षत" इत्यादेरपि श्रुतित्वसंभवादित्यत आह —**ईदृशतादर्थ्येति।** शब्दविषया तादर्थ्येत्यर्थः। यथात्मादिपदाद्ब्रह्मस्वरूपं बोध्यते न तथा ऐक्षतेत्यनेन, येन बोधकत्वमस्य तत्समानावित्तिवेद्यतया नैरपेक्ष्यं स्यात्। किं त्वीक्षितृकारणप्रतिपादनसामर्थ्यं दृष्ट्वा एतादृशं ब्रह्मैव न प्रधानमिति ब्रह्मश्रुतिमपेक्ष्य तद्व्यवधानेनेति नास्याः श्रुतित्वमिति भावः। अत एव बोधोपयोगीत्युक्तम्॥

**एवं वाक्यमपीति।** "यतो वा इमानि भूतानि जायन्ते" इति कारणवाक्यं "तद्ब्रह्म" इत्यनेन "सत्यं ज्ञानम्" इत्यनेन वा एकवाक्यताबलाद्ब्रह्मणि विनियुज्यते, लक्षणवाक्यस्य लक्ष्यस्वरूपप्रतिपत्त्यर्थत्वात्। तत्र "तद्ब्रह्म" इत्यनेनैकवाक्यतां दर्शयति— **तद्ब्रह्मेत्यस्येति। साकाङ्क्षतयेति।** यतो वेत्यस्येति शेषः। तथा च "यतो वा इमानि भूतानि जायन्ते" इत्यस्योद्देशरूपस्य विधेयाकाङ्क्षायां "तद्ब्रह्म" इत्यस्य विधेयब्रह्मतासमर्पकत्वेन तदेकवाक्यत्वमित्यर्थः। "सत्यं ज्ञानम्" इत्यनेनैकवाक्यतां दर्शयति—**सत्यं ज्ञानमिति।** यच्छब्दाद्वृत्तं रूपं यद्वृत्तं रूपं

---

*अत्र रत्नतूलिकानुरोधेन यद्वृत्तरूपसामानाधिकरण्यमिति पाठो भवितुमर्हति।

नियुङ्क्ते। एवं प्रकरणमपि, यथा "अन्योऽन्तर आत्मानन्दमयः" इत्युपक्रमात् "एतमानन्दमयमात्मानम्" इत्युपसंहारात् तावत एकवाक्यत्वे "सैषाऽऽनन्दस्य", "आकाश आनन्दः" इत्यादिशब्दभेदेऽप्यानन्दमयपरत्वमवगम्यते। एवं यथायोगमन्यदप्युन्नेयम्। न चैतावता विशेषेणागतार्थतेति॥

## ब्रह्मसूत्रेषु काचित्कजैमिनीयन्यायानुवादाद्ब्रह्मविचारस्य तदुपजीव्यत्वशङ्कापरिहारौ

यदपि प्रथमतन्त्रसिद्धदृष्टान्तन्यायो[1]पपादनं तत्र तत्र "कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्", "औपसदवत्तदुक्तम्",

### रत्नतूलिका

यत इत्येतत्, तस्य सामानाधिकरण्यं सत्यादिपदैः 'यतः सत्यादेरिमानि भूतानि जायन्ते' इति। एवमेकवाक्यतया यतो वेति कारणवाक्यं ब्रह्मतात्पर्यमवगम्यत इत्यर्थः। प्रकरणस्य वाक्यकल्पनाद्वारा विनियोजकत्वादाह—तावत इति। यावदानन्दमयस्याकाङ्क्षा[2]नुवृत्तिस्तावदेकं वाक्यम्। अतश्चानन्दमयस्य प्रतिपादकमिति निश्चय इति भावः। एवमन्यदपीति। "ब्रह्मोपनिषदं वेद" इत्यादिसमाख्यया उपनिषदो ब्रह्मपरत्वमवसीयत इत्युन्नेयमित्यर्थः॥

पूर्वतन्त्रसिद्धन्यायानां तत्र तत्र सूत्रेषु बादरायणेनोपादानात्तस्योपजीव्यत्वमिति परोक्तं दूषयितुं तात्पर्यकथनायानुवदति—यदपीति। "हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्" इत्यपेक्षि[3]तमंशं पठति—कुशाच्छन्देति। "अश्व इव रोमाणि विधूय पापम्" इत्यादौ केवलहानौ श्रुतायामपि उपायनं

---

[1] उपादानं—ख. [2] निवृत्तिः—कुं. [3] इत्यपेक्षितमेकदेशं—च., इति सूत्र अपेक्षितमेकदेशं—कुं.

## रत्नतूलिका

सुहृदादिभिरुपादानमपि सन्निपतितुमर्हति, कुतः ? उपायनशब्दशेषत्वाद्धानशब्दस्य । तथाहि श्रूयते—"तत्सुकृतदुष्कृते विधूनुते तस्य प्रियाः ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्" इत्यत्र । अन्यत्र श्रुतस्यान्यत्रान्वये दृष्टान्तः, यथा "कुशा वानस्पत्याः" इति निगमे सामान्यतो वनस्पतियोनित्वश्रवणेऽपि "औदुम्बराः कुशाः" इत्यन्यत्र श्रुतस्यौदुम्बरत्वस्यान्वयः, यथा वा क्वचिद्देवासुरच्छन्दसामविशेषेण पौर्वापर्यप्रसङ्गे "देवच्छन्दांसि पूर्वाणि" इति पैङ्गिश्रुतावाम्नानात्तेषां पूर्वत्वान्वयः, यथा च षोडशिस्तोत्रे केषाञ्चित्कालविशेषाप्राप्तौ "समयाविषिते सूर्ये" इति श्रुतेः कालविशेषान्वयः, यथैव चोपगाने शाखान्तरे विशेषाश्रवणेऽपि शाखान्तरश्रुतविशेषान्वयः । अन्यथान्यत्र श्रुतविशेषस्यान्यत्रान्वयानभ्युपगमे विकल्पः स्यात् । स चान्याय्यः । तदुक्तं पूर्वतन्त्रे—"अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्", "प्रतिषेधे विकल्पः स्यात्" इति सूत्रस्यार्थः ॥

"अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्" इति सूत्रम् । वाजसनेयके "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घम्" इति वाक्यजन्यानां "यत्तदद्रेश्यमग्राह्यम्" इत्यादिवाक्यजन्यानां चाक्षरविषयविशेषप्रतिषेधबुद्धीनां सर्वासां सर्वत्रावरोधः कर्तव्यः, कुतः, सामान्यतद्भावाभ्यां—समानो हि सर्वत्र विशेषनिराकरणरूपो ब्रह्मप्रतिपादनप्रकारः, तस्मात्प्रतिपाद्यब्रह्मणश्च सर्वत्रैकरूपेण प्रत्यभिज्ञायमानत्वात् । यथा जामदग्न्याहीने पुरोडाशिनीषूपसत्सु "अग्नेर्वेर्होत्रं वेः" इति तत्प्रदानमन्त्र उद्गातृवेदोत्पन्नोऽपि प्रधानभूतपुरोडाशप्रदानस्याध्वर्यवत्त्वात्तदनुसारेणाध्वर्युणानुष्ठेयः प्राप्नोति । तदुक्तं पूर्वतन्त्रे—"गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः" इति तस्यार्थः ॥

"प्रदानवदेव तदुक्तम्", "लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि" इत्यादिषु, तदपि न धर्मजिज्ञासाप्राथम्यं नियच्छति ; प्रसाध्या-

## रत्नतूलिका

**प्रदानवदेवेति ।** छान्दोग्ये "वायुर्वाव संवर्गः" इत्यत्राधिदैवतमग्न्यादीनां वायुः संवर्गोऽवधारितः, अध्यात्मं वागादीनां प्राणः । तत्र वायुप्राणयोस्तत्त्वाभेदान्न पृथगनुचिन्तनमिति पूर्वपक्षे, तत्त्वाभेदेऽप्यवस्थाभेदादुपदेशभेदवशेन पृथगनुचिन्तनमेव न्याय्यम्, अन्यथा पृथगुपदेशानर्थक्यात् । यथा—"इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे" इति त्रिपुरोडाशिन्यामिष्टौ इन्द्राभेदेऽपि राजादिगुणभेदेन देवतापृथक्त्वात्प्रदानपृथक्त्वं भवति, एवं तत्त्वाभेदेऽपि ध्येयांशपृथक्त्वात् ध्यानपृथक्त्वम् । तदुक्तं सङ्कर्षे—"नाना वा देवता पृथज्ज्ञानात्" इति सूत्रार्थः ॥

**लिङ्गभूयस्त्वादिति ।** वाजसनेयके मनोऽधिकृत्य—"तत्षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितः" इत्यादि श्रुतम् । तत्र मनश्चिदादीनां प्रकरणात्क्रियानुप्रवेशेन तच्छेषत्वे प्राप्ते, "तद्यत्किञ्चेमानि भूतानि मनसा सङ्कल्पयन्ति तेषामेव सा कृतिः" इत्यादीनां स्वातन्त्र्यलिङ्गानां भूयस्त्वात्केवलविद्यात्मकत्वम् । लिङ्गं हि प्रकरणाद्बलीयः । तदपि पूर्वतन्त्रे "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति सूत्रे प्रतिपादितमिति सूत्रार्थः ॥

एवमनूद्य तात्पर्यं दर्शयति—**तदपि नेति ।** तत्र हेतुमाह—**प्रसाध्याङ्गेति ।** प्रसाध्यमङ्गं विवक्षितार्थरूपं यस्मिन् दृष्टान्ते तदुपादानोपपत्तेरित्यर्थः । तर्हि तत्साधनाय न्यायो वक्तव्य इत्यत

ङ्गकदृष्टान्तोपादानोपपत्तेः। तद्विषयस्तु न्यायः स्वयमेव वक्तव्यः सन् यत्नलाघवादन्योक्तोऽनुसार्यतेऽनन्तरप्रणयनादस्य शास्त्रस्य। अत एव "विधिर्वा धारणवत्" इति दृष्टान्तमात्रमुपन्यस्य तेन जैमिनिन्यायोऽनुसार्यते। तत्कस्य हेतोः, स्वयमेव न्यायस्य विवक्षितत्वात्। अत एव च "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" [1] इत्यादिना न्याया एवोच्यन्ते॥

ब्रह्मविचारस्य जैमिनीयन्यायोपजीव्यत्वे बाधकानि, साधन-
चतुष्टयस्य ब्रह्मविचारपूर्ववृत्तता च

अन्यथा सर्ववेदान्तप्रत्ययं कर्मवत्तदुक्तं, नाना यजत्यादिवत्तदुक्तमित्याद्येव सूत्र्येत। तथा सर्वापेक्षेत्येव सिद्धे "सहकारित्वेन च", "विहितत्वात्" इति संयोगपृथक्त्वन्यायो न सूत्र्येत; पौनरुक्त्यात्॥

रत्नतूलिका

आह—तद्विषयस्त्विति। अनुसार्यत इति। न चैतावता तस्योपजीव्यतेति भावः। तेन जैमिनिन्याय इति। "विधिस्तु धारणेऽपूर्वत्वात्" इति तार्तीयन्याय इत्यर्थः॥

इत्याद्येव सूत्र्येतेति। तथा च न्यायाः सर्वेऽपि विवक्षिता एव बादरायणस्यापि। तथापि सूत्रकारशैल्या विचित्रत्वात्क्वचित्परोक्तन्यायानुस्मरणं, क्वचिन्न्यायानुन्नयन्त्वित्यभिप्रायेण दृष्टान्तमात्रकथनं, क्वचिन्न्यायस्यैव कण्ठोक्तिरिति भावः। बाधकान्तरमाह—तथेति। "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति सूत्रेण सर्वेषां कर्मणां विद्यायामुपयोग उक्ते "एकस्य तूभयत्वे संयोगपृथक्त्वम्"

---

[1] इत्यादौ—ख. ग.

न च कामाधिकारस्यास्फुटत्वादिह तत्स्फुटीकाराय तदिति वाच्यम्; यज्ञादिना विविदिषन्तीति रात्रिसत्रन्यायेन तस्यापि सिद्धत्वात्। तस्मान्न धर्मजिज्ञासानन्तरं ब्रह्मजिज्ञासा चोद्यते, तदहेतुत्वात्। किं तु नित्यानित्यवस्तुविवेकाद्यनन्तरमेव॥

साधनचतुष्टयस्य ब्रह्मविचारपूर्ववृत्तत्वाक्षेपः

अत्राह—किमधीतमात्रवेदादस्य नित्यानित्यवस्तुविवेकादिः? उत शास्त्रान्तरपर्यालोचनया? अथ वा स्वरसत इति। नाद्यः; "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिषु कर्मफलानामपि नित्यत्वावगमात्। "अन्नवानन्नादो भवति, महान्भवति प्रजया", इत्यादिषु ब्रह्मज्ञानस्याप्यनित्य-

रत्नतूलिका

इति पूर्वतन्त्रसिद्धन्यायेन दध्यादेरिवान्यार्थतया विहितानामप्यन्यार्थत्वं संभवतीति सिद्धौ "सहकारित्वेन च" इति सूत्रं व्यर्थं स्यात्, अतो न तदुपजीवनम्। किं त्वत्रैव न्यायानां व्युत्पादनमित्यर्थः॥

"सहकारित्वेन च" इति सूत्रणमन्यार्थं, न तु न्यायव्युत्पादनार्थमित्याशङ्क्य निषेधति—न च कामाधिकारस्येति। पूर्वतन्त्रसिद्धस्योपजीवने तदपि तत्रत्यन्यायान्तरसिद्धमित्याह—यज्ञादिनेति॥

अधीतमात्रेति। मात्रशब्देन विचारितत्वं व्यावर्त्यते। यो विवेको ब्रह्मविचारहेतुत्वेन संभावितो न स विचारमन्तरेणाधीतवेदमात्रसाध्यः, यस्तु साध्यो न स विचारप्रवृत्तिहेतुरिति दूषयति—नाद्य इति। ननु "ब्रह्मविदाप्नोति परम्" इत्युपक्रमे ब्रह्मावाप्तेरेव

फलत्वप्रतीतेः । "असद्वा इदमग्र आसीत्", "अथात आदेशो नेति नेति" इत्यादिश्रुतेरात्मस्वरूपासत्त्वादेरपि प्रतीतेश्च ॥

अध्ययनमात्रान्नित्यानित्यविवेकानियमतो विवेकस्य कर्मफलवैराग्याहेतुत्वम्

यद्यपि "पुण्यचितो लोकः क्षीयते", "ब्रह्म वेद ब्रह्मैव भवति", "सत्यं ज्ञानमनन्तं ब्रह्म", "असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्" इति कर्मविज्ञानफलनित्यत्वानित्यत्वादि श्रूयते, तथापि विवेको न व्यवतिष्ठेत । न चानवस्थितापातनित्यानित्यविवेकः कर्मफलवैराग्या[1]दिहेतुः ॥

रत्नतूलिका

फलत्वावगमात् नान्नादेर्विद्याफलत्वमित्याशङ्क्य तस्याप्यनित्यत्वं दर्शयति—असद्वा इदमिति ॥

विनापि विचारमधीतवेदमात्रात्तत्संभवमाशङ्क्य परिहरति—यद्यपीत्यादिना । ननु ब्रह्मभावोऽपि न नित्यफलम् ; "असद्वा" इत्यादिना तस्याप्यनित्यत्वप्रतीतेरित्यतस्तस्य सत्यत्वमुपपादयति—सत्यं ज्ञानमिति । कर्मविज्ञानेति न यथाक्रममन्वयः, किन्तु कर्मफलानित्यत्वं विज्ञानफलनित्यत्वादि च श्रूयत इत्यर्थः । न व्यवतिष्ठेतेति । कर्मफलं क्वचिन्नित्यं श्रूयते, क्वचिदनित्यं प्रतिपाद्यते, एवं विद्याफलमपि । ब्रह्मणोऽपि क्वचिदसत्त्वं प्रतीयते, क्वचित्तन्निन्दया सत्त्वं प्रतिपाद्यत इति व्यामोहादध्ययनमात्रवतो न व्यवस्थितो विवेकः स्यादित्यर्थः । कर्मफलवैराग्यादिहेतुरिति । पूर्वपूर्वस्योत्तरोत्तरहेतुतयैवाधिकारिविशेषणत्वात्तदभावे नाधि[2]कारहेतुत्वमिति भावः॥

---

[1] दिधीहेतुः—ग. [2] कारि—च.

### आपाततो नित्यानित्यविवेकस्य विचारमात्राहेतुत्वम्, तन्निर्णयस्य तदहेतुत्वं च

न चापातप्रतीतिरुभयविचारसाधारणी सत्यधीतक्रमात्प्राथमिकं धर्मविचारमतिक्रम्य ब्रह्मविचार एव प्रवृत्तिहेतुरिति नियन्तुं शक्यम्; तन्निर्णयस्य च विचारद्वयसाध्यतया पाश्चात्यस्यातद्धेतुत्वात्॥

### शमादेर्ब्रह्मविचाराहेतुत्वम्

शमादेश्च "शमदमाद्युपेतः स्यात्" इति ब्रह्ममीमांसातार्तीयन्यायनिरूप्यरूपत्वात्। "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वात्मन्येवात्मानं

### रत्नतूलिका

एवं वैराग्याद्यहेतुत्वाद्विवेको न ब्रह्मविचारहेतुरित्युक्तम्, इदानीं साधारणत्वान्न तत्रैव हेतुरिति दूषणान्तरमाह— **न चापातप्रतीतिरिति।** नन्वेवं साधारणत्वे कदाचिद्ब्रह्मविचारेऽपि प्रथमं प्रवृत्तिः स्यात्, तच्च तवानिष्टमित्यत आह— **अधीतक्रमादिति।** प्रथमातिक्रमे कारणाभावादिति भावः। **अतद्धेतुत्वादिति।** अन्यथा विचारे सति निर्णयः, तस्मिन् सति विचार इत्यन्योन्याश्रयः स्यादिति भावः॥

**न्यायनिरूप्यरूपत्वादिति।** अन्यथा तस्य पूर्वसिद्धत्वे प्रवृत्तस्यावश्यानुष्ठेयतया तन्निरूपणं व्यर्थं स्यादिति भावः। शमादेरधिकारिविशेषणत्वं श्रुतिविरुद्धमित्याह— **तस्मादेवमिति।** ननु ततः पूर्वमेव वाक्यार्थज्ञानसिद्धौ तादर्थ्येन तद्विधानं व्यर्थं स्यादित्यत आह—

पश्येत्" इति च विचारितशास्त्रजन्यज्ञानवत एव ध्यानाङ्गतया शमादिविधानात्, एवंविदिति ज्ञानवतः परामर्शनात्॥

अधीतवेदस्य वेदार्थेतरशास्त्रप्रवृत्त्यनवकाशः

न द्वितीयः; "अष्टवर्षो ब्राह्मण उपगच्छेत्, सोधीयीत" इति प्रथममेवाध्ययनविधिवश्यतयाधीतवेदस्य विचारप्रवृत्तावन्तराले शास्त्रान्तरानवकाशात्॥

शास्त्रान्तरविवेकस्य ब्रह्मविचारप्रवृत्त्यनुपकारकत्वबाधकत्वे

वेदान्तविचारप्रवृत्तौ शास्त्रान्तरीयप्रधानपरमाणुतटस्थेश्वराकाशादिनित्यताप्रतीतेरप्रयोजकत्वात्। व्यक्ताव्यक्तज्ञविज्ञानप्रमाणादिषोडशपदार्थतत्त्वज्ञानादेर्निःश्रेयसहेतोरपि तत

रत्नतूलिका

ध्यानाङ्गतयेति। प्रथममिति। शास्त्रान्तरश्रवणयोग्यावस्थातः पूर्वमित्यर्थः। अधीतवेदस्य विचारप्रवृत्ताविति। अध्ययनविधेरर्थज्ञानपर्यन्तत्वाभावेऽपि फलवदर्थनिर्णयरागस्य प्रबलत्वाद्वेदार्थविचार एव प्रवृत्तिः स्यान्न शास्त्रान्तर इति भावः॥

अस्तु वा प्रवृत्तिस्तथापि न तज्जन्यविवेको विरुद्धार्थकत्वाद्ब्रह्मविचारप्रवृत्तावुपकरोतीत्याह—वेदान्तविचारप्रवृत्ताविति। ब्रह्मव्यतिरिक्तसर्वानित्यत्वविवेकस्यैव तत्रोपयोगादिति भावः। न केवलं शास्त्रान्तरप्रवृत्तिरननुकूला, प्रत्युत ब्रह्मविचारप्रवृत्तिप्रतिबन्धिकेत्याह—व्यक्ताव्यक्तेति। व्यक्तं–कार्यं, अव्यक्तं–कारणं, ज्ञः–जीवः, तेषां विज्ञानं मुक्तिहेतुरिति सांख्या वदन्तीति भावः। आदिपदेन धर्मो गृह्यते, यतोऽभ्युदयनिःश्रेयसे सिद्धे स धर्म इति तस्यापि निःश्रेयस-

एवाधिगमे वेदान्तविचाराद्यनपेक्षाप्रसङ्गाच्च। अत एवेतिहासपुराणादिश्रवणान्नित्यानित्यविवेकादिरिति प्रत्युक्तम् ॥

### स्वरसतो नित्यानित्यवस्तुविवेकस्य ब्रह्मविचारानारम्भकत्वम्

न तृतीयः; वेदान्तविचारानारम्भप्रसङ्गात् ॥

### नित्यानित्यवस्तुविवेकविवरणपूर्वकमनधीतवेदस्यानुमानतः साधनचतुष्टयसम्पत्त्या ब्रह्मविचारशङ्कानुवादः

यत्तु इदं नित्यं वस्त्विदमनित्यमिति न नित्यानित्यवस्तुविवेकः, उक्तदोषादेव। किं तु नित्यानित्ययोर्वसन्तीति नित्यानित्यवस्तूनि, तद्धर्माः सत्यत्वासत्यत्वादयः, तेषां चात्मानात्मवर्गे यन्नित्यं तत्सत्यं बहुसुखमुपादेयं च; अनित्यं तु विपरीतमित्येष दृष्टानुमानमूलो विवेकः स्वरसत एव पुरुषधौरेयस्य

### रत्नतूलिका

हेतुत्वावगमात्। अत एवेति। यतस्तत एव निःश्रेयसोपायाधिगमः अत एवेत्यर्थः ॥

वेदान्तविचारेति। स्वरसतो विवेकादेरिव ब्रह्मज्ञानस्यापि संभवादिति भावः ॥

उक्तदोषादिति। अधीतमात्रवेदात् स्वतो वा शास्त्रान्तरपर्यालोचनया वा तज्ज्ञानासंभवरूपादित्यर्थः। तेषां चात्मानात्मवर्गे विवेक इत्यन्वयः। तत्र विवेकप्रकारमेव दर्शयति—यन्नित्यमिति। विपरीतमिति। अनृतमल्पं दुःखं हेयं चेत्यर्थः। दृष्टेति। दृष्टेनानुमानं दृष्टानुमानं, दृष्टसाधारण्येनेतरत्राप्यनृतत्वाद्यनुमानमिति यावत्। पूर्व-

जायते। ततोऽनृताल्पदुःखमयादनित्यादारोपितरजतादेरिवानवगत[1]विवेकनित्यपुरुषार्थानालम्बनेऽपि तज्जिहासारूपमनाभोगात्मकं वैराग्यमुपावर्तते। ततो रागादिप्रवर्तनाशून्यस्य सर्वेन्द्रियप्रवृत्त्यभावरूपशमादिसम्पदुपनमति। ततः प्रत्यक्षाद्यधिगतजननमरणाद्यनर्थात्यन्तनिवृत्त्या नित्यसुखप्रेप्सोस्तदुपायब्रह्मविचारादिप्रवृत्तिरनन्तरभाविनीति ॥

अत्र ब्रूमः—अनित्यस्य तावदनृतत्वमसम्प्रतिपन्नम्। न च विगीतं सर्वमनृतम्, अनित्यत्वात्, आरोपितरजतादिवदित्यनुमातुं शक्यम्; दृष्टान्तासम्प्रतिपत्तेः, शुक्त्यादावपि रजतादिसत्त्वोपगमात्, अनृतस्यापि सुखादिहेतुत्वे तद्विवेकस्य जिहासानुपयोगित्वात्, अनृतस्यापीष्टस्वप्नादेः सर्वाभिलषितत्वे-

रत्नतूलिका

पूर्वस्योत्तरोत्तरहेतुत्वमुपपादयति— ततोऽनृतेत्यादिना। नन्वेतादृशापातविवेको नित्यपुरुषार्थज्ञानाभावे न वैराग्यहेतुरित्यत आह—अनाभोगात्मकमिति। अनाभोगः—अभिरुच्यभावः॥

विगीतमिति। "नाल्पे सुखमस्ति" इत्यात्मातिरिक्तस्य सर्वस्यापि विगीतत्वादिति भावः। हानोपादानयोर्नानृतत्वसत्यत्वे प्रयोजके, किं तु दुःखतत्साधनतदुपयोगित्वसुखतत्साधनतदुपयोगित्वे एव, तथा चानित्यत्वेन तदनुमानं व्यर्थमित्याह—अनृतस्यापीति। आदिपदेन दुःखाभावग्रहः। नन्वनृतत्वेन दुःखरूपत्वमनुमीयत इत्यत आह—अनृतस्यापीति। प्रतिकूलवेदनीयत्वं दुःखत्वम्, तच्च दुःखतत्साधनतदुपयोगिषु सर्वत्रास्तीति भावः। ननु न सुखत्वादिमात्र-

[1] विशेषनि–ख. ग. ङ.

नानृतत्वहेतुना दुःखरूपत्वानुमानायोगाच्च। न चानित्यस्य सुखाद्युपयोगिनोऽपि दृष्टानुमितावर्जनीयदुःखसंभेदतया हेतुत्वम्; अतिशयितसुखान्तरालाभात्। न खलु मृष्टान्नालाभे कणोऽपि क्षुधितेन हीयते।

न च ततः क्लेशाधिक्यम्; येनान्धान्धुपतितवराटिकेवोपेक्ष्येत। न च यन्नित्यं तद्दुःखासम्भिन्नसुखरूपतयोपादेयम्; यतो नित्यस्य तद्रूपत्वं न व्याप्त्याधिगम्यते, कालादौ

रत्नतूलिका

मुपादेयत्वे प्रयोजकम्; तथा सति विषसंपृक्तमधुनोऽपि सुखहेतुत्वादुपादेयता स्यात्, किं तु दुःखासंभेदोऽपि, स चानित्ये नास्तीति तस्य हेयतैवेत्याशङ्क्य निषेधति—न चानित्यस्येति। दुःखसंभिन्नस्य तत्त्वादेव न हेयत्वं, किं तु तत्साध्यसुखादधिकसुखान्तरलाभात्तल्लाभसुखादतिशयितदुःखसाध्यत्वाद्वा दुःखोदर्कत्वाद्वा, त्रितयमप्यत्र नास्तीत्याह—अतिशयितेत्यादिना। अतिशयितसुखान्तरलाभे तस्य हेयत्वं नास्तीत्येतत् दृष्टान्तेन समर्थयते—न खल्विति॥

द्वितीयं निरस्यति—न च तत इति। अन्धुः—कूपः। अत एव न तृतीयोऽपि; येन विषयुक्तमधुन इवानुपादेयता स्यादिति भावः। दुःखासम्भिन्नसुखान्तरलाभादितरेषां हेयत्वमित्याद्यमाशङ्क्य निषेधति—न च यन्नित्यमिति। तत्र वक्तव्यम्—यन्नित्यं तद्दुःखासम्भिन्नसुखम्, तच्चोपादेयमिति निश्चितविशेष्यकसुखान्तरप्रतीत्या इतरेषु जिहासा, किं वा यदि नित्यं सुखं संभाव्येतेत्यनिर्धारितविशेषोपादेयत्वज्ञानेनेति विकल्प्याद्येऽपि किं व्याप्त्यानुमानात्तदधिगमः? किं वा शास्त्रादिति द्वेधा विकल्प्य नाद्य इत्याह—यतो नित्यस्येति। कालादाविति। तत्र विशेष्याभावप्रयुक्तो विशिष्टसाध्याभाव इति

व्यभिचारात्, आत्मनोऽप्यहं दुःखीति दुःखसम्भेदानुभवाच्च। शास्त्रात्तु तदापातविवेको विचारद्वयसाधारणः, निश्चयरूपस्तूभयविचारनिर्वर्त्य इति न प्रथमं ब्रह्मविचारप्रवृत्तिहेतुः। अपि च [1]यदि नाम किमपि नित्यं दुःखासम्भिन्नसुखरूपं स्यादिति [2]संभावनाया इदं तदित्यनिश्चित[3]विशेष्यायास्तदुपादित्सामूलस्य साधारण्यान्नित्यानित्यवस्तुविवेकानन्तरं शास्त्रान्तराणामप्यारम्भः स्यात्। न च कर्मकाण्डे शास्त्रान्तरे वा नित्यफलासत्त्व-

रत्नतूलिका

भावः। दुःखसम्भेदेति। तथा च तत्र विशेषणाभावाद्विशिष्टाभाव इति भावः। आद्यद्वितीयेऽपि किमापातरूपं तज्ज्ञानमुत निश्चय इति विकल्प्य नाद्य इत्याह—शास्त्रात्त्विति। द्वितीय आह—निश्चयरूपस्त्विति। महाविकल्पे द्वितीय आह—अपि चेति। तदुपादित्सामूलस्य नित्यफलोपादित्सामूलस्येत्यर्थः। साधारण्यादिति। नित्यफलसंभावनाया नित्यफलोपादित्साद्वारेण शास्त्रप्रवृत्तिहेतुता वाच्या, कर्मकाण्डे शास्त्रान्तरे च नित्यफलप्रतीतेस्तत्संभावनाया निवारकाभावात्तेषामप्यारम्भः स्यादिति भावः। ननु तत्र फलप्रतिपादनमसदिति तदभाव एव निश्चीयत इत्याशङ्क्य निषेधति—न च कर्मकाण्ड इति। तस्यासत्त्वं किमन्य[4]परत्वात्, उताप्रामाण्यादिति द्वेधा विकल्प्य उभयमपि मीमांसाद्वयसाध्यमिति न प्रथमं तदभावनिश्चय इत्याह—

---

[1] यतीनां किमपि—ग. [2] संभावनया—ख. [3] विशेषायाः [4] पदत्वात्—ख. ङ.

निश्चयात्तदनारम्भः ; अक्षय्यादिवाक्यान्यपरत्वस्य कर्ममीमांसावसेयत्वात्, शास्त्रान्तराप्रामाण्यस्य [1] चोत्तरमीमांसातर्कपादावसेयत्वात् प्रथमं तन्निश्चयासम्भवात्। न च "अथातो ब्रह्मजिज्ञासा" इत्येवान्यत्र नित्यसुखफलाभावाधिगमः ; तस्य स्वशास्त्रारम्भौपयिकविषयप्रयोजनपरत्वात्। ब्रह्मविचारप्रवृत्तस्याद्यसूत्रात्तदधिगमः, तदधिगमे च तत्प्रवृत्तिरित्यन्योन्याश्रयाच्च। तस्मान्न कथमपि नित्यानित्यवस्तुविवेकादि [2] ब्रह्ममीमांसाप्रवृत्तिहेतुरिति ॥

## रत्नतूलिका

अक्षय्यादीति। अन्यानर्थक्यादिन्यायावसेयत्वादित्यर्थः। प्रथममिति। विचारप्रवृत्तेः पूर्वमित्यर्थः। किं प्रथमसूत्रेण इतरत्र नित्यसुखफलाभावः प्रतिपाद्यः? उत स्वशास्त्रारम्भौपयिकविषयादिप्रतिपादनेनाभिमत इति विकल्प्य आद्य आह—तस्य स्वशास्त्रेति। द्वितीय आह—ब्रह्मविचारप्रवृत्तस्येति। अभिप्रेतार्थस्यापि तत्प्रवृत्त्यनन्तरमेव ज्ञेयत्वादिति भावः॥

अधीतमात्रवेदादेव विवेकादिरिति प्रथमः पक्षः स्वीक्रियते। स चापातरूपोऽपि ब्रह्मकाण्डे कर्मफलानित्यत्वमधीयानस्य कर्मकाण्डे ब्रह्मज्ञानफलानित्यत्वाध्ययनशून्यस्य प्राचीनसुकृतवशाद्विद्याफलनित्यत्वे कर्मफलानित्यत्वे चोत्कटतमसंभावनारूपो जायते, ततो 'यदि नित्यं फलमश्नुवीय अलमनित्यफलेन' इति विषयविशेषमनालम्ब्य कृतककर्मफलविषयमेव वैराग्यं जायते, ततः शमादिरिति विवेकादेः पूर्ववर्तित्वं

---

[1] चोभयमीमांसा--ख. ङ. [2] जिज्ञासा—क.

## वेदाध्ययनमात्रतः साधनचतुष्टयस्य ब्रह्मविचार-पूर्ववृत्तत्वसमर्थनम्

अत्रोच्यते—अधीतवेदान्तस्य "पुण्यचितो लोकः क्षीयते" इत्यादिकर्मफलानित्यत्वं "तमेवं विद्वानमृत इह भवति" इत्यादिविद्याफलनित्यत्वं चाविप्लुतमधीयानस्य वेदान्तेष्वेवोत्कटतमनित्यफलसम्भावनायामुपचितप्राचीनसुकृतसन्दब्धायां "असद्वा इदमग्र आसीत्" इत्याम्नानेऽपि विद्याफलभूतज्ञानानन्दात्मकब्रह्मसत्तायामेवोत्कटतमसम्भावनासम्भवात् ॥

### रत्नतूलिका

युक्तमित्यभिप्रेत्य सिद्धान्तयति—अत्रोच्यत इति। अविप्लुतमिति। विपरीताध्ययनं कर्मकाण्डे विद्याफलानित्यत्वाध्ययनं विप्लुतिः तद्रहितमित्यर्थः। अस्तु विपरीताध्ययनाभावः, तथाप्यक्षय्यादिवाक्येषु कर्मफलनित्यत्वादिप्रतीतेस्तदन्यपरत्वस्य विचारमन्तरा ज्ञानानुपपत्तेः कथं वेदान्तेषु तत्संभावनेत्यत आह—प्राचीनेति। कर्मफलनित्यत्वश्रवणेऽपि शुद्धचित्ततया "तद्यथेह" इत्यादिश्रुत्युपदर्शितन्यायेन तदुल्लङ्घ्य विद्याफलनित्यत्व एवोत्कटतमसंभावनेति भावः। ननु वेदान्त एव विद्याफलस्य ब्रह्मणोऽसत्त्वाम्नानात्कथं तत्र नित्यफलसंभावनेत्यत आह—असद्वा इदमिति। "सत्यं ज्ञानम्" इत्यादिवाक्येषु सत्यत्वेन ब्रह्मण आम्नातत्वादिति भावः। क्वचिद्ब्रह्म सत्यमाम्नायते, क्वचिदसत्यम्, क्वचित्कर्मफलं नित्यमाम्नायते, क्वचिदनित्यमिति व्यामोहः [1] शुद्धचित्तस्य न भवति; किं तु "तद्यथेह" इत्यादिश्रुत्युपदर्शितन्यायावलम्बनेन विद्याफलब्रह्मसत्तायामेवोत्कटतमसंभावना भवतीति तात्पर्यार्थः ॥

---

[1] शुद्धसत्त्वस्य—घ. च.-

### आपातविवेकादेर्विचारद्वयासाधारण्यम्

'यदि किञ्चिदपास्ताशेषाशिवममृताख्यं फलमश्नुवीय, यावत्किंचिदवर्जनीयभूरिदुरितमन्तवत्फलम्, अलमनेनास्माकम्' इत्येवमनिर्धारितविशेषस्यापि वैराग्यस्य [1] कृतककर्मफलरूपविषयविशेष एवोत्कटतया विवेकादेर्विचारद्वयसाधारण्यायोगात् ॥

### शमादेस्तृतीयाध्यायनिरूप्यस्याप्यधिकारिविशेषणत्वोपादानं, ब्रह्मविचाराङ्गता च

*साधनलक्षणे च शमादेरङ्गतया निरूप्यत्वेऽपि वैराग्येण स्वरससिद्धस्येहाधिकारिविशेषणतयोपादानाविरोधात्। किं तु तदङ्गमप्युपगम्यते ब्रह्मविचारे सामर्थ्यात् ॥

### रत्नतूलिका

ननु कर्मविचारं विना आपातविवेकमात्रेण कर्मफलवैराग्यं न संभवति; विशिष्य तज्ज्ञानाभावादित्यत आह—यदि किञ्चिदिति। कृतकत्वविशेषणं "तद्यथेह" इत्यादिश्रुत्यर्थस्मरणसूचकम् ॥

यदुक्तं शमादेस्तार्तीयन्यायनिरूप्यत्वान्नाधिकारहेतुत्वमिति तत्राह—साधनलक्षणे चेति। अङ्गतयेति। न तु शमादिस्वरूपनिरूपणम्; येन प्रवृत्तेः पूर्वं तज्ज्ञानं न स्यादिति भावः ॥

श्रुतावेवंविदिति न ब्रह्मविदः परामर्शः, किं तु ब्रह्मविद्यां महाफलां यो वेद तस्येति न शास्त्रज्ञानवतः शमादिविधिरिति दूषयति—

---

* साधनलक्षणम्—साधनाध्यायः।

[1] कृतकर्म—ङ.

श्रुतौ शमादेः शास्त्रज्ञानवदुपासनाङ्गत्वविधिशङ्कासमाधाने

यत्तु शास्त्रजज्ञानवत एव शमाद्यङ्गकमुपासनं विधीयत इति, तन्न ; एवंविच्छब्दस्य "तं विदित्वा न कर्मणा लिप्यते पापकेन" इत्यनन्तरोक्तमहाफलां ब्रह्मविद्यां विजानतस्तत्साधनविचारप्रवृत्त्युपयोगिशमादिविधिः सुशक इति तदनुवादपरत्वात्। "सम्यक्प्रशान्तचित्ताय शमान्विताय . . . . . . प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इति शमादिश्रवणार्थत्वश्रुत्यन्तरैकार्थ्यसम्भवेऽर्थभेदकल्पनायोगाच्च ॥

शमादेरङ्गत्वविशेषणत्वयोर्विरोधशङ्कापरिहारौ

न चाङ्गत्वमधिकारिविशेषणत्वं च विरुद्धम्, विधिप्रतिपत्त्युपाधेरधिकारिविशेषणत्वात्प्रतिपन्नविधेश्च कथम्भावान्वया-

रत्नतूलिका

तन्नेति। एवंविदित्यनुवादस्य प्रयोजनमाह—विजानत इति। श्रवणार्थत्वेति। शमान्विताय ब्रह्मविद्यां प्रोवाचेत्यत्रापूर्वत्वात् ब्रह्मविद्यां प्रब्रूयादिति विधिकल्पने सत्यधिकारिविशेषणत्वेन श्रुतस्यापि शमादेः सामर्थ्याच्छ्रवणार्थत्वमिति भावः ॥

न चाङ्गत्वमिति। तथा च "सम्यक्प्रशान्तचित्ताय" इति श्रुतिरन्यपरा व्याख्येयेति भावः। विरोधमुपपादयति — विधिप्रतिपत्त्युपाधेरिति। विधेः प्रतिपत्तिः–ममेदं कर्मेति बोधः, तदुपाधेरित्यर्थः। तथा च पूर्वसिद्धत्वं वाच्यमिति भावः। कथम्भावेति। तथा चानन्तरं प्रतिपन्नविधेः कथमित्याकाङ्क्षायामित्थम्भावेन शमादीनामन्वयो वाच्यः। स चानुष्ठानमन्तरा न संभवतीति सिद्धत्व-

दिति वाच्यम्; कर्मणि विद्याशौचादिवदविरोधात्। शमाद्यभावे स्वप्रवृत्त्युपयोगिश्रवणविधिप्रतिपत्त्यनुपपत्तेः। अधिकारिविशेषण-मपि सत् तादर्थ्येनाफलोदयानुष्ठेयतया तदङ्गतामपि प्रतिपद्यते॥

## वेदाध्ययनमात्रात्साधनचतुष्टये ब्रह्मविचारपूर्ववृत्तत्वन्यायस्या-नधीतवेदेऽप्यतिदेशः

एवमनधीतवेदस्यापि सुकृतसम्भारादेव प्रत्यक्षोपपत्ति-द्वारापावरणे यद्दृश्यं तत्कार्यमनित्यमनृतं सर्वशो दुःखानुगतम्। कार्यमनृतं च नामूलमिति तन्मूलस्यापि तादृक्त्वेऽनवस्थानात्

### रत्नतूलिका

साध्यत्वविरोध इति भावः। अविरोधादिति। सिद्धस्यापि परिपाल-नेनानुष्ठेयत्वमपि सम्भवतीति भावः। शमादौ विशेषमाह—तादर्थ्ये-नेति। तथा च प्रवृत्त्यनन्तरमहरहरनुष्ठानेन शमादावतिशयोऽस्तीति तेन रूपेणापि साध्यतेति भावः॥

एवमधीतमात्रवेदादापाततो विवेकः सुकृतवशाद्विद्याफलनित्यत्वे कर्मफलानित्यत्वे चोत्कटतमसम्भावनारूपो जायते, तेन च 'अवर्जनीय-दुरितभूयिष्ठमन्तवत्फलं मम मास्तु' इति सामान्यतः कर्मफले वैराग्यं जायते, इत्यादिप्रकारेण विचारे प्रवृत्तिरित्युक्तम्। इदानीमनधीत-वेदस्य विवेकाद्युपायाभावात्कथं प्रवृत्तिरित्याशङ्कां निरसितुमति-दिशति—एवमिति। प्रत्यक्षोपपत्तीति। प्रत्यक्षस्य—यथावस्थितवस्तु-विज्ञानस्य, उपपत्तेश्च यद्द्वारं—मार्गः, तस्यापावरणे—उद्घाटने सतीत्यर्थः। एवमनित्यकोटावुक्त्वा नित्यकोटावप्याह—कार्यमनृतं चेति। तादृक्त्वे कार्यत्वे अनृतत्वे चेत्यर्थः। अनवस्थानादिति। तथा चाकार्यस्य कस्याचिदनभ्युपगमे परिदृश्यमानं किमपि न स्यादिति मूलक्षय इति

तद्दृश्याकार्यादिरूपमित्येतावति विवेके परत्र वैराग्येण तल्लिप्साकुलस्य ध्रुवादेरिव हितैषिवचनादपि प्रव्रज्यापूर्वकं तदुपायवेदान्ताध्ययनविचारादिप्रवृत्तिरुपपन्ना ॥

दृश्यस्य कार्यत्वाद्यनुमानोपपत्तिः, अनृतस्य वैराग्या-
हेतुत्वादिष्टासिद्धिशङ्कासमाधानं च

न च कार्यत्वादिकमनुमातुमशक्यम्; *दासेरकविनेया-सम्प्रतिपत्तावपि विशुद्धसत्त्वस्य स्वदृष्टया दृष्टान्तोपादान-संभवात्। न चानृतमपि सुखरूपत्वे न जिहासितमिति वाच्यम्; अनृतस्यानृतत्वदर्शने विप्रलम्भनतया जिहासोपपत्तेः। अन्यदा-नृतत्वबुद्धावपीष्टस्वप्नस्य तत्काले सत्यरूपगृहीतस्य सुखहेतुतया काम्यत्वोपपत्तेश्च ॥

रत्नतूलिका

भावः। एतावतीति। तच्च मूलं ब्रह्म वान्यद्वेति निर्धारणं विनेत्यर्थः। परत्रेति। दृश्यकोटावित्यर्थः। तल्लिप्सा अकार्यादिभूतमूललिप्सा। वेदान्ताध्ययने तद्विचारे च आदिपदान्मननादौ च प्रवृत्तिरित्यर्थः॥

स्वदृष्टयेति। तथा च स्वार्थानुमाने परस्यासम्प्रतिपत्तिर्न दोष इति भावः। अस्त्वनृतत्वानुमानं, तथापि तस्य वैराग्याहेतुत्वान्न तवेष्टसिद्धि-रित्याशङ्क्य निषेधति—न चानृतमपीति। सुखरूपत्वे सुखसाधनत्व इत्यर्थः। तर्हीष्टस्वप्नस्य काम्यत्वं न स्यात्, तस्यानृतत्वज्ञानादित्यत आह—अन्यदेति। तथा च यत्कालीनसुखहेतुतया इष्टस्वप्नस्य कामना तत्काले सोऽनृतत्वेन गृहीतो न भवतीति तदा सुखहेतुरिति कृत्वेदानी-मपि काम्यत इत्यर्थः॥

---

* दासेरकविनेयः—औद्धत्यादुष्ट्रवदप्रणतस्वभावो विनेयतां प्राप्तः।

### अनृतस्याहेयत्वशङ्कापरिहारः

न च विनाशवियोगादिदुःखभूयिष्ठमनित्यमनृतमिति जानन्नपि न जिहासति, तदधिकालाभादिति युक्तम्; पिपासोरलब्धजलस्यापि मरीचिकोदकहानात् दृश्यकार्यविपरीतस्वभावस्य कस्यचित् तन्मूलस्य संभवाच्च। अत एव यन्नित्यं वस्तु तत्सुखमित्यादिव्याप्त्या वा शास्त्रेण वा नाधिगम्यत इति निरस्तम्; कालात्मादिविशेषमनपेक्ष्य कस्यापि तादृशस्य संभवात्॥

### नित्यसुखसंभावनया विचारप्रवृत्तेः शास्त्रान्तरसाधारण्यशङ्कापरिहारः

न चैवं शास्त्रान्तराणामपि प्रसङ्गः; सुकृतविशेषोपनतहितैषिवचनस्यातद्विषयत्वात्। एवं संभावनया प्रवृत्तस्याद्यसूत्रसूचितन्यायालोचनया तद्दार्ढ्योपपत्तेः। न चैवं सुकृतवशादेव ब्रह्मज्ञानेऽपि विचारणादिवैयर्थ्यमिति निरस्तमधस्तात्।

### रत्नतूलिका

यदुक्तमधिकसुखालाभादनृतमपि न जह्यादिति तदाशङ्क्य निषेधति—न च विनाशेति। अतःशब्दार्थमाह—कालात्मादीति। तथा च तत्रापि साध्याभावानिश्चयान्न व्यभिचारनिश्चय इति भावः॥

यदुक्तमुपादित्सामूलस्य नित्यसुखसम्भावनायाः साधारणत्वात् शास्त्रान्तराणामप्यारम्भप्रसङ्ग इति तदाशङ्क्य निषेधति—न चैवमिति। नित्यफलास्तित्वप्रतिपादकस्य हितैषिवचनस्येतरशास्त्राविषयत्वे हेतुगर्भं विशेषणं—सुकृतविशेषोपनतेति। निरस्तमिति। तस्य प्रमाणफलत्वेन वेदान्तसापेक्षत्वाज्जन्मान्तरकृतविचारस्य तु वामदेवादे-

तस्मादतीतानेकभवानभिसन्धिवाङ्मनःकायकृतसुकृतप्रबन्धाव-र्जितपरमेश्वरानुग्रहासादितसत्त्वप्रसादस्य पुरुषधौरेयस्य हिताहितप्रेप्साजिहासापर्याकुलतयावस्थिते सकलजगति सर्वशो दृष्टानुमानाभ्यामसारत्वदुःखमयत्वप्रसङ्ख्याने सति सर्वतो निर्विण्णस्य शमादिसम्पत्तौ नित्यनिर्गलितामङ्गलपरामृतफलप्रेप्सोरौपनिषद-विचार आरभ्यते "अथातो ब्रह्मजिज्ञासा" इति ॥

दुःखत्रयाभिघातज्ञानस्य ब्रह्मविचारानन्तर्यप्रतियोगित्वनिरासे परकीयदूषणानुवादपरिहारौ

अपर आह- दुःखत्रयाभिघातज्ञानानन्तरं तन्निविवृत्सोर्ब्रह्मजिज्ञासाऽऽरभ्यत इति। अत्र कश्चिदैहिकदुःखनिवृत्तेरायुर्वेदादिभिरुपायावगमान्निरयदुःखनिवृत्त्युपायनियमादिविधायकशास्त्र--

रत्नतूलिका

रिव तादृशसुकृतशालिनो विचारस्यानपेक्षायामपि न क्षतिरित्यादि-प्रकारेणेत्यर्थः। महाप्रकरणमुपसंहरति— तस्मादिति। प्रसङ्ख्यानं ज्ञानम् ॥

एवं कर्मविचारस्यानन्तर्यप्रतियोगित्वानिरासेन विवेकादीनां तत्प्रतियोगित्वं प्रतिपादितम्। तत्रैकदेशिना दुःखत्रयाभिघातज्ञानं तत्प्रतियोगीत्युक्तम्, तद्दूषयितुमाशङ्कते —अपर आहेति। आध्यात्मिकाधिदैविकाधिभौतिकरूपदुःखत्रयेत्यर्थः। अत्र स्वयं दूषणं वक्तुं प्रथमतः परोक्तं दूषणं दूषयितुमनुवदति—अत्र कश्चिदिति। किमत्र दुःखं निविवर्तयिषितं, [1] किं वैहिकं दुःखं ज्वरादि, किं वामुष्मिकं निरयादिरूपं, अथ वा स्वर्गादिकमपीति विकल्प्याद्य आह—ऐहिकेति। द्वितीय आह—निरयदुःखेति। तथा च तन्नि-

[1] किमैहिकं-कुं.

बाहुल्यात् स्वर्गादेरल्पास्थिरतया तापत्रयान्तर्गतत्वज्ञानस्य च कर्मविचारापेक्षत्वात्तदानन्तर्यमेवास्तु ब्रह्मजिज्ञासायाः, आवश्यकत्वात्, किं दुःखत्रयाभिघातज्ञानानन्तर्यवचनेन ; कर्मविचारमनपेक्ष्य साङ्ख्यादिभिरेव तदवगमे च मुक्त्युपायस्यापि तत एवावगमाद्वेदान्तविचारानारम्भप्रसङ्गादित्याह। तदसत् ; ऐहिकादिदुःखव्रातस्योपायान्तरेणैकान्तिकात्यन्तिकनिवृत्त्यसंभवात्। तथा चोपायान्तरे दृष्टे जिज्ञासानर्थक्यमाशङ्क्योक्तमीश्वरकृष्णेन—

"दृष्टे सापार्था चेन्नैकान्तात्यन्ततोऽभावात्", इति ॥

स्वर्गादितापत्रयान्तर्गतत्वज्ञानं चान्तरेणापि कर्मविचारं प्राचीनसुकृतविशेषैरेव प्रक्षीणचित्तमलस्य "तद्यथेह" इत्यादिकर्मफलानित्यत्वमधीयानस्यैव भवतीत्युक्तम्। न खलु सुकृतैरेव तत्त्वज्ञानमपि, प्रमाणफलत्वेन विचारितवेदान्तादिसाधनापेक्षत्वादिति ॥

## रत्नतूलिका

वृत्त्यर्थतया न ब्रह्मविचारारम्भ इति भावः। तृतीय आह— स्वर्गादेरिति। आयुर्वेददर्शितोपायैर्नियमानुष्ठानेन च दुःखत्रयस्य नियमेन निवृत्तिर्नात्यन्तिकी, ब्रह्मविद्यया तु नियमेनात्यन्तं निवृत्तिरिति तादृशनिवृत्तिमिच्छोः शास्त्रारम्भ उपपद्यत इत्यभिप्रेत्य दूषयति— तदसदिति। ऐकान्तिकी—नियता, दृष्टे उपायान्तर इति शेषः। सा जिज्ञासा अपार्था—व्यर्थेति चेन्न, उपायान्तरेण तस्य नियमेनात्यन्तनिवृत्तेरभावादिति श्लोकार्थः। उक्तेऽर्थेऽतिप्रसङ्गमाशङ्क्य तत्रोक्तं स्मारयति—न खल्विति ॥

सिद्धान्ते दुःखत्रयाभिघातज्ञानस्यानन्तर्यप्रतियोगित्वनिरासः

इदं त्विह वक्तव्यम्—न दुःखत्रयाभिघातज्ञानमात्रं ब्रह्मविचारप्रवृत्तिहेतुः; दृष्टानुश्रविकसुखेषु दुःखसम्भेदवेदनेऽपि रागौत्कट्येन तदुपमर्दिब्रह्मविचारप्रवृत्त्यसम्भवात्, निखिलविषयवैराग्यस्यापि हेतुत्वे शमादिसम्पत्त्यनिवारणात्, विवेकाद्यानन्तर्यमेव फलितमिति न सिद्धान्तादतिरिच्यते। तस्माद्यथोक्तसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासारब्धव्येति भगवत्पादीयं मतमनवद्यमिति ॥

रत्नतूलिका

एवं परोक्तदूषणमलग्नमुपपाद्य स्वयं दूषयति—इदं त्विहेति। किं दुःखत्रयाभिघातज्ञानमात्रं प्रवृत्तिहेतुः, किं वा वैराग्यादिसापेक्षमिति विकल्प्याद्यं दूषयति—नेति। अनुश्रवः—वेदः, तेनोक्तमानुश्रविकं स्वर्गादीत्यर्थः। द्वितीय आह—निखिलेति। सूत्रार्थमुपसंहरति—तस्मादिति ॥

इति श्रीहरितगोत्रतिलककुरवशेरिकुलप्रदीपश्रौतस्मार्तस्वतन्त्रश्रीवेङ्कटपतियज्वनस्तनूजस्य नाचमाम्बागर्भसंभूतस्य श्रीविजयराघवगुरुकटाक्षलब्धान्वीक्षक्यादिकतिपयविद्यस्य श्रीकृष्णानन्दसरस्वतीगुरुचरणारविन्दपरिचरणलब्धसकलविद्यावैशद्यस्य सर्वतोमुखयाजिनो भास्करदीक्षितस्य कृतौ सिद्धान्तसिद्धाञ्जनव्याख्यायां रत्नतूलिकायां कर्मविचारप्राथम्यनिरासाञ्जनविवरणं समाप्तम्।

## औपनिषदविचारप्रयोजकाक्षेपः

**कः पुनरौपनिषदविचारस्य प्रयोजकः, न तावत्स्वाध्यायविधिरित्युक्तम्। नापि मुक्तिफलापाताधिगतब्रह्मतत्त्वनिर्णयरागः; प्रव्रज्याद्यनपेक्षाप्रसङ्गात्। विधीयते च ज्ञानार्थतया प्रव्रज्यादि "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इति, "शान्तो दान्त उपरतः" इति च। नापि श्रवणविधिः; तदसम्भवात्। न तावच्छ्रोतव्य इति श्रवणमर्थकर्म विधीयते; कर्मणि कृत्यसम्प्रत्ययात् ॥**

## रत्नतूलिका

स्यादेतदेवं विचारस्य कर्तव्यत्वे किमनन्तरं कर्तव्य इत्यानन्तर्यप्रतियोगिचिन्ता, तदेव न सम्भवति; तस्यानुष्ठापकाभावादित्याक्षिपति—**कः पुनरिति।** किं विधिप्रयुक्तो विचारः? किं वा रागप्रयुक्तः? आद्येऽपि किं स्वाध्यायविधिः प्रयोजकः? किं वा स्वविधिरिति। आद्य आह—**न तावदिति।** स्वाध्याये विधिः स्वाध्यायविधिः, अध्ययनविधिरित्यर्थः। **उक्तमिति।** अध्ययनविधेरर्थज्ञानपर्यन्तत्वाभावादिति भावः। बहुवक्तव्यसद्भावादाद्यद्वितीयमुपेक्ष्य द्वितीयं दूषयति—**नापि मुक्तीति। प्रव्रज्येति।** अविहिते विचारेऽविहितस्याङ्गतानुपपत्तिः, विधिप्रयुक्तादृष्टस्याविहिते विचारे उपयोगाभावादिति भावः। अत एव तस्य विधेयत्वं दर्शयति—**विधीयते चेति।** उपरतपदेन सन्न्यासोऽभिधीयत इति भावः। आद्ये द्वितीयं दूषयति—**नापि श्रवणविधिरिति।** किं श्रोतव्य इत्यर्थकर्म विधीयते? किं वा गुणकर्म इति द्वेधा विकल्प्य नाद्य इत्याह—**न तावदिति। कर्मणीति।** "तयोरेव कृत्यक्तखलर्थाः" इति भावकर्मणोरेव कृत्यप्रत्ययस्य विधानादित्यर्थः ॥

"स्वाध्यायोऽध्येतव्यः" इत्यादावपि गुणकर्मविध्युपपत्तेः। न चेहापि श्रवणं गुणकर्म विधीयते, यावता "यैस्तु द्रव्यं चिकीर्ष्येत गुणस्तत्र प्रतीयेत," [1]यथा पिण्डपयोव्रीह्यादिषु संयवनदोहनप्रोक्षणादयः। न चोत्पाद्याप्यादीनामन्यतमं ब्रह्म;

## रत्नतूलिका

ननु "स्वाध्यायोऽध्येतव्यः" इत्यत्र कृत्यप्रत्ययश्रवणेऽपि यथा स्वाध्यायेनाधीयीयीतेत्यर्थकर्मविधिस्तथेहापि भविष्यतीत्याशङ्क्याह—स्वाध्याय इति। तस्य पक्षस्य दूष्यत्वादिति भावः। तर्हीहापि गुणकर्मविधिरस्त्विति द्वितीयपक्षमाशङ्क्य निषेधति—न चेहापीति। यावतेति। यावता यत इत्यर्थः। यैस्तु द्रव्यमिति जैमिनिसूत्रम्। तस्यायमर्थः—यैः—कर्मभिर्द्रव्यं चिकीर्ष्येत—साध्यतयेष्येत तत्र—विधौ कर्म गुणः प्रतीयेतेति, उदाहृत्य दर्शयति—यथेति। "पुरोडाशं संयौति" इत्यत्र प्रणीताभिरद्भिर्मिश्रीकरणेन पिण्डस्योत्पाद्यत्वम्, "गां दोग्धि" इत्यत्र दोहनक्रियया पयसः प्राप्यत्वम्, "व्रीहीन् प्रोक्षति" इत्यादौ प्रोक्षणादिना व्रीह्यादीनां संस्कार्यत्वम्। आदिपदात् "व्रीहीनवहन्ति" इत्यत्र व्रीहीणां विकार्यत्वमिति विवेकः। न चेति। उत्पाद्यत्वाभावे हेतुः नित्यत्वादिति। उत्पत्तिमतो भावस्य विनाशावश्यंभावादिति भावः। आप्यत्वाभावे हेतुः—आत्मत्वादिति। तथा च तस्य नित्याप्तत्वादिति भावः। अविकार्यत्वे असंस्कार्यत्वे च हेतुः—

---

[1] तथा—ख.

नित्यत्वादात्मत्वादविकारित्वाच्च। ब्रह्मणा * भूतभाव्युपयोगाभावाच्च। अपि चैवं श्रवणादि न स्वविधिप्रयुक्तयानुष्ठीयेत; नान्यविधिप्रयुक्तया च; आधाने कर्मविधिवत्प्रयोजकान्तरस्याभावात्। अथोच्येत—अत एव "हिरण्यं भार्यम्" इत्यादाविव विनियोगभङ्गेन ब्रह्मणा श्रोतव्यमित्यर्थकमेव विधीयते, शृणोतेस्तु सकर्मकतया कर्मापेक्षायामात्मनः श्रवणादिनिर्वर्त्तनविधाव-पेक्षायां च यत्सामर्थ्यसिद्धं कर्मत्वं तदनूद्यते कर्मणि कृत्येनेति, तन्न; एवमप्यात्मन उत्पाद्याद्यन्यतमत्वप्रसङ्गात्॥

रत्नतूलिका

अविकारित्वाच्चेति। संस्कारपक्षेऽपि—

"उपयन्नपयन्धर्मो विकरोति हि धर्मिणम्॥"

इति न्यायेन विकारित्वं स्यादिति भावः। संस्कार्यत्वाभावे हेत्वन्तरमाह—ब्रह्मण इति। उपयोगाभावद्योतनाय कर्त्रादिपृथग्भावं दर्शयितुं ब्रह्मण इत्युक्तम्। भूतोपयोगस्य संस्कार्यत्वं "चात्वाले कृष्णविषाणां प्रास्यति" इत्यादौ, भाव्युपयोगस्य तत्त्वं प्रोक्षणादाविति बोध्यम्। न स्वविधीति। विधेयक्रियाया द्रव्यनिष्ठत्वेन पुरुषार्थत्वाभावादिति भावः। नन्वाधानवदन्यविधिप्रयुक्तमनुष्ठानं भविष्यतीत्यत आह—नान्यविधीति। युक्तं कर्मविधीनां स्वाङ्गभूताहवनीयादिसापेक्षत्वात्तेषां चाधानं विनानुपपत्तेराधानानुष्ठापकत्वमिति, प्रकृते तु नैवमिति भावः। उक्तदोषं परिहरन्नाद्यं शङ्कते—अथोच्येतेति। अत एव अननुष्ठानप्रसङ्गादेवेत्यर्थः। उक्तदोषं परिहरति—शृणोतेस्त्विति। एवमपीति। प्रतिपत्तिदशायां साधनत्वप्रतीतावपि सामर्थ्यप्राप्तकर्मत्वस्योत्पाद्याद्यन्यतमत्वं विनानुपपत्तेरितिभावः॥

---

* "भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हति" इति न्यायेन भूतभाव्युपयोगार्थस्यैव द्रव्यस्य संस्कारार्हतया ब्रह्मणोऽतथात्वेन संस्कारानर्हत्वादित्याशयः।

### श्रवणादिविध्यङ्गीकारे बाधकम्

अपि च श्रवणादिविध्युपगमे शास्त्रस्य ब्रह्मणि तात्पर्याभावप्रसङ्गः, भूतभव्यन्यायेन शेषस्य तदुपपादनार्थत्वात्। तद्विधेरपि ब्रह्मसाक्षात्कारोद्दे[1]श्यतया तादर्थ्येऽपि ग्रहैकत्वादिवदुद्देश्यविशेषणस्य ब्रह्मणोऽविवक्षणीयत्वात्। तस्याप्युद्देश्यत्वे वाक्यभेदप्रसङ्गात्, अनुत्पाद्यादितया तस्य विधेयक्रियानुद्देश्यत्वाच्च ॥

### रत्नतुलिका

एवं विधिरेवानुपपन्न इति दूषणमुक्तम्। इदानीं तदङ्गीकारे बाधकमाह—अपि च श्रवणादीति। भूतभव्येति। "भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते" इति न्यायेनेत्यर्थः। शेषस्य विधेयक्रियातिरिक्तस्येत्यर्थः। तथा चावस्तुसतापि श्रवणक्रिया निर्वर्तयितुं शक्येति न तत्प्रतिपादने शास्त्रतात्पर्यमिति भावः। ननु स्यादेवं ब्रह्मसाधनकश्रवणस्यान्यार्थत्वे, किं तु तस्य ब्रह्मसाक्षात्कारार्थतया ब्रह्मार्थतापि प्राप्तेति न शास्त्रतात्पर्यविरोध इत्यत आह—तद्विधेरपीति। तादर्थ्येऽपीति। साक्षात्कारार्थत्वेऽपीत्यर्थः। ग्रहैकत्वादिवदिति। "ग्रहं संमार्ष्टि" इति विहितसंमार्गो न सर्वस्य, ग्रहमित्येकत्वश्रुतेस्तस्यापि विवक्षितत्वादिति पूर्वपक्षे यद्येकत्वस्यापि विवक्षा तर्हि ग्रहं संमृज्यादेकं संमृज्यादिति वाक्यभेदः प्रसज्येत। अतो नैकत्वस्य विवक्षेति सर्वेषां सम्मार्ग इति सिद्धान्तितं शेषलक्षण इति भावः। एवं ब्रह्मणो विधेयक्रियोद्देश्यत्वसम्भवमङ्गीकृत्य तर्हि वाक्यभेद इत्युक्तम्। इदानीं तदेवानुपपन्नमित्याह—अनुत्पाद्यादितयेति ॥

---

[1] श्यकतया—ख. ग.

## श्रवणविधौ ब्रह्मसाक्षात्कारस्याप्राधान्यम्

अपि च कार्यं वा भावना वा विध्यर्थः प्रधानम् ; फलं तूत्पत्त्यनुबन्धितया प्रधानमपि विधिप्रतिपत्त्यनुबन्धितया गुण एव ; भूतभव्यन्यायात् । उभयप्राधान्ये परस्परान्वयायोगात् । तत्र स्वर्गादिकं प्रतिपत्तारं भावनां वा विशिंषद्विधावुपसर्जनभावेन प्रतिपद्यमानमपि मानान्तरविरोधाद्यविवक्षाकारणाभावेन विध्यपेक्षितफलभावेन सम्बध्यमानं तथाभूतमुपेयते । निर्विशेषब्रह्मसाक्षात्कारस्तु न तथा; मानान्तरविरोधात् ॥

### रत्नतूलिका

एवमुद्देश्यस्य साक्षात्कारस्य क्रियां प्रति प्राधान्यमङ्गीकृत्य ब्रह्मणो नोद्देश्यकोटौ निवेश इत्युक्तम् । इदानीं प्राधान्यमेव नास्तीति दूषयति—**अपि च कार्यमिति** । कार्यं भावना वेति मतभेदेन । एवं साधकन्यायमुक्त्वा तदनङ्गीकारे बाधकमाह—**उभयप्राधान्य इति** । "गुणानां च परार्थत्वादसम्बन्धः समत्वात्" इति सूत्रोक्तस्य समत्वन्यायस्य गुणेष्विव प्रधानेष्वपि तुल्यत्वादिति भावः । ननु स्वर्गो यथा विशेषणत्वेन प्रतिपन्नोऽपि विवक्षितः सन्वस्तुभूतस्तथा ब्रह्मापि भविष्यतीत्यत आह—**तत्र स्वर्गादिकमिति** । कार्यं विध्यर्थ इति मते स्वर्गकामस्य मम यागविषयकं कार्यमिति बोधात् प्रतिपत्तृविशेषणत्वम्, भावना विध्यर्थ इति मते यागकरणिका स्वर्गभाव्यका भावनेति वाक्येन [1] बोधात् भावनाविशेषणत्वमिति बोध्यम् । साक्षात्कारवैषम्यं वक्तुं स्वर्गे विवक्षितत्वं दर्शयति—**मानान्तरेति** । आदिपदान्मानान्तरेण निषेधो गृह्यते । **तथाभूतं** वस्तुभूतमित्यर्थः । **मानान्तरेति** । निर्विशेषसाक्षात्कारस्य सर्वप्रमाणविरुद्धत्वादित्यर्थः ॥

---

[1] बोधनात्—च. कुं.

## स्वर्गादेरपि भाव्यस्य धात्वर्थप्रधानता

यद्यपि च फलभूतमुद्देश्यमनुज्झितभाव्यस्वभावमेव विधिप्रतिपत्तिमनुबध्नातीति प्राधान्यं न जहाति। उक्तं च प्रतिपदाधिकरणपूर्वपक्षे—

"ऐकरूप्येण संबन्धः प्रधानेन च सिध्यति।
तस्मात्फलपदेनैव सर्वं सम्बध्यते पदम् ॥" इति।

तथापि न तस्य विधिं प्रत्येव प्राधान्यं तन्निरूपकतया गुणत्वेन सह प्रतिपत्तुं शक्यम्; वैरूप्येण विरोधात्। किं तु करणभूतधात्वर्थक्रियां प्रत्येव बुध्यमानमपि प्राधान्यं बुध्यते। न खलु तदेवैकं कर्म विधेयभावनां प्रत्यपि। "व्रीहीन् प्रोक्षति" इत्यत्र

### रत्नतूलिका

एवं स्वर्गादावार्थप्राधान्यमङ्गीकृत्य साक्षात्कारे तन्नास्तीत्युक्तम्। इदानीं तत्रापि न भावनां प्रति प्राधान्यम्, किं तु धात्वर्थं प्रतीति वक्तुं पुनराशङ्कते—यद्यपि चेति। ऐकरूप्येणेति। सर्वेषामगृह्यमाणविशेषतया ऐकरूप्यात्फलपदेन सम्बन्धः, हेतौ तृतीया। अथवा इत्थम्भूतलक्षणे तृतीया। सर्वेषां फलपदेन सम्बन्धे सत्यैकरूप्येण सम्बन्धः सिध्यति नान्यथेति। फलपदान्वये उपपत्त्यन्तरमाह—प्रधानेनेति। फलपदेन सम्बन्धे प्रधानसम्बन्धो भवतीति भावः। बुध्यमानमपीत्यनेन वस्तुतः प्राधान्ये सत्यपि तदानीं न बुध्यत इति सूचयति। ननु "व्रीहीन् प्रोक्षति" इत्यत्र धात्वर्थरूपसेकक्रियां प्रति प्रधानभूतानामेव व्रीहीणां तत्करणकभावनां प्रत्यपि प्राधान्यं दृष्टमिति प्रकृतेऽपि धात्वर्थं प्रति प्रधानस्वर्गादेर्भावनां प्रत्यपि प्राधान्यं स्यादित्याशङ्क्याह—न खल्विति। दृष्टान्तं विघटयति—व्रीहीनिति।

सेचनक्रियाकर्म व्रीहिरूपेण लौकिकमदृष्टातिशयेन तु वैधमिति भेदात्। अत एव शेत इत्यादौ करोतिसमानाधिकरणाख्यातार्थभावनाया भाव्यापेक्षितया सुखादिभाव्यसम्प्रत्ययेऽपि न धातोः सकर्मकता। अन्यथा धात्वर्थभावन[1]योरप्यविलक्षणकर्मत्वे शीङादेरपि सकर्मकत्वप्रसङ्गः। उक्तं च भट्टैः—

"अन्यदेव हि धात्वर्थ[2]व्याप्यं कर्म सकर्मके।
अन्यदेव च सर्वत्र प्रत्ययार्थनिबन्धनम्॥" इति,

"यजेरपि तु यत्कर्म पूज्यत्वाद्देवतेष्यते।
तदुज्झित्वैव पुत्रादेः कर्मत्वं भावनाश्रितम्॥" इति च।

तस्माद्विधिफलं ब्रह्मविज्ञानं यदि ते मतम्।
भावनागुणभावेन शब्दतः सम्प्रतीयताम्॥

तत्र चोक्तो दोषः॥

## रत्नतूलिका

व्रीहिरूपेण धात्वर्थं प्रति प्राधान्यमपूर्वसाधनरूपोपयोगि[3]संस्काररूपेण विधेयभावनां प्रतीति रूपभेद इत्यर्थः। धात्वर्थभावनयोर्नैकं कर्मेत्यत्रोपोद्बलकमाह—अत एवेति। करोतिसमानाधिकरणेति। किं करोतीति प्रश्नस्य शयनं करोति शयनेन करोतीत्युत्तरवाक्ये आख्यातार्थस्य करोतिना विवरणात् तयोरेकार्थत्वलक्षणं सामानाधिकरण्यमित्यर्थः। इदं च भाव्यापेक्षाप्रतिपादनाय। अन्यथेत्यस्य विवरणं—धात्वर्थेति। पूज्यत्वादिति। यजेर्देवपूजार्थत्वादिति भावः। उपसंहरति—तस्मादिति। इष्टापत्तिमाशङ्क्योक्तं स्मारयति—तत्र चेति। ब्रह्मणः शास्त्रतात्पर्यविषयत्वाभावलक्षणे इत्यर्थः॥

---

[1] योरविलक्षण—ग. [2] प्राप्यं तन्त्रं—पा. [3] संस्कृतरू—च. कुं.

दोषान्तरोपपिपादयिषया विधिसम्भवाय श्रवणस्वरूपोक्तिः

अपि च यद्यपि श्रवणं नाम ब्रह्मणि वेदान्ततात्पर्यनिर्णयानुकूलोपक्रमोपसंहारादिलिङ्गोपपादनात्मा मीमांसाशब्दि[1]ता विचारापरपर्याया मानसी क्रियैव; न [2]ज्ञानमत्र विधेयम्; पुंस्तन्त्रत्वात्, तथापि तन्नाज्ञातं शक्यविधानम्। ज्ञायमानं च यदि ब्रह्मणा तात्पर्येण वा न विशेष्येत, विषयविशेषासम्बुद्धौ विधिरेव न सम्बुध्येत। अथ विशेष्येत, प्रागेव ब्रह्म तात्पर्यं च ज्ञातमेवेति कृतं विधिना; कृतकृत्यत्वात्।

अत एव हि सिद्धान्ते न ज्ञानविधिरिष्यते।
विधेयविस्यवित्तिभ्यां विधेरनुपपत्तितः॥

एतेन मननादिश्रवणाङ्गं विधीयत इति प्रत्युक्तमिति॥

रत्नतूलिका

विधेयश्रवणस्वरूपज्ञानदशायामेव विधिफलस्य सिद्धत्वाद्विधिवैयर्थ्यमिति दूषणं वक्तुं तत्स्वरूपं वदन् विधिसम्भवं दर्शयति—**अपि च यद्यपीति**। तात्पर्यनिर्णयानुकूलं उपक्रमोपसंहारादिरूपं यल्लिङ्गं तदुपपादनात्मेत्यर्थः। **प्रागेव**। विधिप्रवृत्तेरिति शेषः। **ब्रह्म** वेदान्तानां तत्र तात्पर्यं च ज्ञातमित्यर्थः। **कृतेति**। विधेः कृत्यं तात्पर्यनिर्णयद्वारा ब्रह्मज्ञानम्, तच्च प्रागेव कृतमित्यर्थः। अतश्शब्दार्थमाह—**विधेयेति**। **मननादीत्यादि**पदेन निदिध्यासनं गृह्यते। तस्य श्रवणाङ्गतया विधानमिति सिद्धान्त एवायं दोषः। श्रुते मते ब्रह्मणि निदिध्यासनं मुक्त्युपायो विधीयत इति स्वपक्षे तु नायं दोष इति सूचयितुं श्रवणाङ्गमित्युक्तम्॥

---

[1] तद्विचार—ख. [2] ज्ञानमिति—ख.

## श्रवणविधिसमर्थनम्

अत्राभिधीयते—श्रोतव्य इति तावद्विधिः; "कृत्याश्च" इति विधौ स्मरणात् ॥

### "श्रोतव्यः" इत्यत्र कृत्यप्रत्ययस्य विधित्वसमर्थनाय प्रश्नावतरणम्, तस्यार्हार्थत्वे दूषणं च

ननु "अर्हे कृत्यतृचश्च" इत्यपि स्मर्यते। किं चातः? भवति श्रोतुमर्ह आत्मेति। एवं सति वादमात्रमनर्थकं स्यात् ॥

### रत्नतूलिका

श्रोतव्य इति श्रवणमर्थकर्म विधीयते, तत्र च कर्म वेदान्तः, अतो न ब्रह्मण उत्पाद्यतादिप्रसङ्गः। ब्रह्मसाक्षात्कारस्तूद्देश्यः, तद्विशेषणं च ब्रह्मोद्देश्यत्वप्रतिपत्तौ विवक्षितम्। स च साक्षात्कारो विधिप्रतिपत्तिदशायां भावनाविशेषणत्वेनाप्रधानतया प्रतिपन्नोऽपि अनुज्झित्वैव प्राधान्यं तथा प्रतीयते। साक्षात्कारोऽपि ब्रह्मार्थ इति सर्वापेक्षया ब्रह्म प्रधानम्। अतो न तत्र शास्त्रतात्पर्याभाव इत्यभिप्रेत्य सिद्धान्तमाह—अत्राभिधीयत इति। "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" इति सूत्रेऽपेक्षितं पठति-कृत्याश्चेति ॥

अत्र विधावेव कृत्यप्रत्ययो नार्हार्थ इति वक्तुं अर्हार्थत्वे सति पर्यवसानं पृच्छति—किं चात इति। उत्तरमाह—श्रोतुमर्ह इति। दूषयति—एवं सतीति ॥

"द्रष्टव्यः" इत्यत्र कव्यप्रत्ययस्यान्यथानुपपत्त्याहर्थित्वम्, श्रवणस्यार्थकर्मता च

द्रष्टव्य इति चार्हार्थः फलार्थवादः, ज्ञानस्याविधितन्त्रत्वात्। तच्च श्रवणमर्थकर्म विधीयते। "हिरण्यं भार्यम्" इत्यादाविव श्रुतिविनियोगभङ्गोपपत्तेः ॥

"अध्येतव्यः" इत्यत्र कव्यप्रत्ययस्य गुणकर्मविधित्वनिरासः

न च स्वाध्यायाध्यायोऽपि गुणकर्मैव तान्त्रिकाणाम्; तद्विधिर्विश्वजिन्न्यायेन स्वर्गार्थः दृष्टसम्भवन्यायेनार्थावबोधार्थो

रत्नतूलिका

नन्वेवमानर्थक्यपरिहाराय द्रष्टव्य इत्यपि विधिः स्यादित्यत आह— द्रष्टव्य इति चेति। तर्हि वादमात्रं स्यादित्यत आह—फलार्थवाद इति। तथा च विषयश्रवणापेक्षितफलसमर्पकत्वान्न वैयर्थ्यमिति भावः। ननु सहश्रुतयोस्तव्यप्रत्यययोरेकस्याहार्थत्वमितरस्य विध्यर्थत्वमिति न युक्तं वैषम्यम्, फलापेक्षा चार्थवादिकामृतत्वेन पूर्यतामित्याशङ्कय द्रष्टव्य इत्यस्य विधित्वेऽनुपपत्तिमाह—ज्ञानस्येति। हिरण्यं भार्यमित्यादाविवेति। तत्र यथा हिरण्यस्य न संस्कार्यत्वमेवं ब्रह्मण इति संस्कार्यत्वाद्यभावमात्रे दृष्टान्तो न तु भरणे हिरण्यस्येव श्रवणे कारकत्वांशेऽपीति भावः ॥

यदुक्तं तव्यप्रत्ययोपादाने सर्वत्र गुणकर्मविधानमिति वक्तुं "स्वाध्यायोऽध्येतव्यः" इत्यत्रापि तथेत्युक्तं तन्निषेधति—न च स्वाध्यायेति। तान्त्रिकाणामिति। शास्त्रकाराणामित्यर्थः।

वेति निरूपणविरोधात्। स चायं पुरुषार्थ एव सन् स्वाध्याय-संस्कारार्थोऽपीति कर्मणि कृत्योपादानम्। अन्यथार्थावबोधस्या-ध्ययनविधिफलत्वानुपपत्तेः। वैधाध्ययनसंस्कारापेक्षयैव तस्य फलपर्यवसानात्। लिखितपाठोपपादितज्ञानस्य तदनिष्टेः॥

## रत्नतूलिका

निरूपणेति। विधेयस्याध्ययनस्य फलापेक्षायां सत्यां हीदं निरूपणं सङ्गच्छेत। तस्य गुणकर्मत्वे संस्कार्यस्वाध्याय एव पर्यवसानान्न सेति तद्विचारो विरुद्ध इति भावः॥

कथं तर्हि कृत्योपादानमित्यत आह—स चायमिति। केवलार्थकर्मत्वे बाधकमाह—अन्यथेति। न चेष्टापत्तिः; विहितस्या-ध्ययनस्य फलान्तराभावादिति भावः। संस्कारकत्वाभावे अर्थाव-बोधलक्षणफलानुपपत्तिमुपपादयति—वैधाध्ययनेति। विहितस्याध्ययनस्य नाहत्यार्थज्ञानलक्षणफलार्थता; तत्र तस्यासामर्थ्यात्, किं तु स्वाध्याय-संस्कारद्वारा। अतः संस्कारकत्वाभावेऽर्थज्ञानरूपफलस्यानुपपत्तिरिति भावः। एवमपि गुरुमुखोच्चारणानूच्चारणस्य लौकिकरूपस्य प्रयोजन-सिद्धावपि विहितरूपस्य न तत्सिद्धमित्यत आह—फलपर्यवसाना-दिति। विहिताध्ययनगृहीतादेव स्वाध्याया[1]दासादितं ज्ञानं क्रत्वनुष्ठान-द्वारा सफलं नान्यदित्यध्ययनस्य फलपर्यवसानं तदधीनामिति भावः। तत्र हेतुमाह—लिखितेति॥

---

[1] दापादितं—च. कुं.

अध्ययनविधौ ग्रन्थकृदभिप्रायः, तत्र संवादश्च

अस्मिन्मते[1] चाध्ययनस्य नित्यत्वान्न फलापेक्षा। तथा च पार्थसारथिमिश्राः—"अप्राप्तविधिरेवायम्" इति॥

वेदान्तानां श्रवणकर्मतया आत्मकर्मत्वस्य फलोपाधिमूलतयौपचारिकत्वम्

न चैवमपि कर्मत्वादात्मन उत्पाद्याद्यन्यतमत्वापत्तिः; असिद्धेः। विचारस्य वेदान्तविषयत्वात्। तथा च भाष्यम्—"वेदान्तमीमांसाशास्त्रस्य" इति, "वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते" इति च। विहितविचारावधारिततात्पर्यो वेदान्तो ब्रह्मापरोक्षं जनयतीति फलोपाधिना तद्विषयत्वमुच्यते "आत्मा द्रष्टव्यः श्रोतव्यः" इति॥

रत्नतूलिका

ननु ग्रन्थकृन्मते अर्थज्ञानस्याफलत्वात्कथं फलाकाङ्क्षापूरणमित्यत आह—अस्मिन्मते चेति। विनापि फलमुपनीतस्याधिकारिणो लाभेन विधिप्रतिपत्त्यनुष्ठानयोरुपपन्नत्वादिति भावः॥

एवमपीति। विनियोगभङ्गेऽपीत्यर्थः। असिद्धेरिति। कर्मत्वस्येति शेषः। किं तर्हि कर्मेत्यत आह—विचारस्येति। तर्हि श्रोतव्य इति कथमात्मनः श्रवणकर्मतया निर्देश इत्यत आह—विहितेति। फलोपाधिनेति। फलविषय एव साधनविषयतयोपचर्यत इत्यर्थः। फलोपाधित्वं द्योतयितुं द्रष्टव्य इत्यस्याप्युपादानम्॥

ननु फले साक्षात्कारे वा कथं तस्य विषयत्वम्, तथा च तस्यापरोक्षप्रकाशस्वभावतया तदधीनप्रकाशत्वाभावादित्यत आह—

[1] अस्मन्मते—ग. कुं.

## आत्मनः साक्षात्कारकर्मत्वोपपादनम्, तद्विजिज्ञासस्वेति-विध्याशयश्च

साक्षात्कारे च कर्मत्वमात्मनः स्वतोऽपरोक्षस्वभावस्यापि नैसर्गिकाविद्यामलापनयनादुपपन्नम्। "तद्विजिज्ञासस्व" इत्यादावप्यवयवार्थैष्यमाणज्ञानोद्देश्यतयैव ब्रह्मणस्तदुपलक्षितविचारविधिसम्बन्धावगमात्। तदिदमुक्तं भाष्ये—"जिज्ञास्यापेक्षित्वाज्जिज्ञासायाः" इति। तत्रावयवार्थाविवक्षायां तल्लक्षितविचारस्य वेदान्तविषयतया ब्रह्मविषयत्वनियमनायोगात्, जिज्ञासापदोपादानार्थवत्त्वानुपपत्तेश्च ॥

### रत्नतूलिका

साक्षात्कारे चेति। नैसर्गिकमनादिसिद्धमविद्यारूपं यन्मलं तदपनयनादित्यर्थः। तथा च प्रकाशस्वरूपस्य तदधीनत्वाभावेऽप्यविद्यानिवृत्त्या स्वमात्रपर्यवसितप्रकाशस्तदधीन इति तस्य साक्षात्कारकर्मतेति भावः। ननु "तद्विजिज्ञासस्व" इत्यत्राहत्य विचारकर्मत्वनिर्देशात् "आत्मा श्रोतव्यः" इत्यत्रापि तथेत्यत आह—तद्विजिज्ञासस्वेत्यादाविति। ननु विचारलक्षके विजिज्ञासस्वेति पदे कृताऽवयवार्थविवक्षेत्यत आह—तत्रेति। तदिति द्वितीयान्तेन ब्रह्म विचारकर्मतया निर्दिश्यते। स चावयवार्थविवक्षायामेवैष्यमाणज्ञानविषयतामादाय घटते, नान्यथा। वेदान्तानामेव तत्र विषयत्वादित्यर्थः। अविवक्षायां [1] बाधकान्तरमाह—जिज्ञासापदोपादानेति। तद्विचारयेत्येवमेव वक्तुं शक्यत्वादिति भावः॥

एवं फले साक्षात्कारे विषयत्वमेव साधनविचारविषयत्वेनोपचारान्निर्दिश्यत इत्युक्तम्। इदानीं ग्रामं गच्छतीत्यत्र यथा उत्तरदेशसंयोगलक्षणफलान्तस्य गच्छतिशब्दार्थत्वात् तद्विषयत्वेन ग्रामस्य गमन-

[1] साधकान्तर—कुं.

श्रवणविधावात्मनो गतिकर्मणो ग्रामस्येव कर्मत्वोक्तिः, भरणे हिरण्यवदकारकत्वं च

अथाप्याहत्य ब्रह्मविषय एव विचारः स्यात्, तथापि स्वसाध्यतत्त्वनिर्णयेनैव संयोगेनेव गतिर्ग्रामविषया। न चेह श्रवणविधावात्मा कारकतयोपादीयते भरणे हिरण्यवत्, येन मानान्तरविरोधे वेदान्तानामैदम्पर्यं हीयेत॥

आत्मनः कारकत्वेऽपि सोमवद्विशिष्टविधिविषयत्वशङ्कापरिहारौ

न च "सोमेन यजेत" इत्यादिव[1]द्विशिष्टविधित्वात्तस्यैवात्मनि तात्पर्यं युक्तम्; विशिष्टविधेर्यथासिद्धकारकव्यपाश्रय-

रत्नतूलिका

विषयत्वम्, तथा साक्षात्काररूपफलशिरस्कस्य श्रवणत्वात् फलविषयतैव तद्विषयतेति पक्षान्तरमाह—अथाप्याहत्येति। अथ वा श्रवणक्रियाजन्यसाक्षात्काररूपफलशालित्वात्कर्मत्वं ब्रह्मणः, यथा गमनजन्यसंयोगलक्षणफलशालित्वाद्ग्रामस्य गमनकर्मत्वमिति पक्षान्तरमाह—अथाप्याहत्येति। "हिरण्यं भार्यम्" इत्यत्रेवार्थकर्म विधीयत इत्युक्तम्। तर्हि तद्वदेव ब्रह्मणोऽपि कारकत्वमिति भ्रान्तशङ्कां निराकरोति—न चेहेति। भरणे हिरण्यवदिति व्यतिरेकदृष्टान्तः। मानान्तरागोचरस्य ब्रह्मणो हिरण्यवत्कारकत्वानुपपत्तेरिति भावः॥

ननु "सोमेन यजेत" इत्यत्र कारकत्वेऽपि सोमस्य यथा विवक्षा तथात्रापि विवक्षा भविष्यतीत्याशङ्क्य निषेधति—न च सोमेनेति। तस्यैव श्रवणविधेरेवेत्यर्थः। विशिष्टविधेर्विशेषणे तात्पर्यं वाच्यम्, अन्यथा विशेषणस्यानुष्ठानं न सिध्येदिति भावः। दूषयति—विशिष्टविधेरिति। तथा च लोकसिद्धसोमरूपकारकव्यपाश्रयेण

[1] विशिष्टविषयत्वात्—ग.

त्वात्। अन्यथा तस्य द्विर्व्यापारप्रसङ्गात्। न च वाक्यान्तरं [1]श्रवणविधिमनपेक्ष्यात्मानं प्रतिपादयति, तस्यैव वैयर्थ्यप्रसङ्गात्, किं तु विचारितवेदान्तजननीयसाक्षात्कारगोचरतया। उद्देश्यस्याप्युपायानुष्ठानहेतुत्वादात्मना श्रोतव्यमित्यनुबध्यते ॥

### रत्नतूलिका

सोमविशिष्टविधिरिव लोकसिद्धात्मलक्षणकारकाश्रयणेन तद्विशिष्टविधिर्वाच्यः। ततश्च तद्विवक्षायामपि न निर्विशेषात्मविवक्षासिद्धिरिति भावः। अन्यथेति। लोकसिद्धकारकानाश्रयणे तत्कारकत्वे तद्विशिष्टक्रियाविधाने च व्यापारो वाच्य इति द्विर्व्यापारप्रसङ्ग इत्यर्थः। ननु वाक्यान्तरसिद्धं निर्विशेषात्मरूपकारकमाश्रित्य विशिष्टविधिः प्रवर्तताम्, तथा च नोक्तदोष इत्यत आह—न च वाक्यान्तरमिति। श्रोतव्य इत्यादिना श्रवणे विहिते आद्यसूत्रेण तदपेक्षितन्यायसूचनानन्तरं गृहीततात्पर्यकं वेदान्तवाक्यं ब्रह्म बोधयतीति वाच्यम्, तथा च वाक्यान्तरसिद्धकारकमाश्रित्य श्रवणविधिप्रवृत्तिं वदत इतरेतराश्रयत्वं स्यादिति भावः। ननु वाक्यान्तरमपेक्ष्य श्रवणविधिप्रवृत्तावपि न तेषां श्रवणविधिमपेक्ष्य बोधकता, वाक्यसामर्थ्यादेव तद्बोधसम्भवादित्यत आह—तस्यैवेति। श्रवणविधेरेवेत्यर्थः। तर्हि किमभिप्राया ब्रह्मणेति विनियोगभङ्गोक्तिरित्यत आह—किं त्विति। साक्षात्कारस्यापि तदर्थत्वात्तं प्रति प्रधानस्यापीत्यर्थः। तथा च विनियोगभङ्गप्रदर्शकवाक्ये आत्मनेति तृतीया न करणत्वे, अपि तु हेतुत्व इति भावः॥

---

[1] श्रवणविधिमपेक्ष्य—ग.

आत्मनः साक्षात्कारविषयतयैव श्रवणविध्यन्वयः, उद्देश्यविशेषणत्वे सोदाहरणमविवक्षितत्वशङ्कापरिहारश्च

न च विधेयक्रियोद्देश्यतैवात्मनः; असाध्यत्वात्। यत्तु एवमुद्देश्यविशेषणत्वादात्मनोऽविवक्षेति, तन्न; अनिशेषितसाक्षात्कारमात्रस्योद्देश्यत्वासम्भवेन वाक्यार्थप्रत्ययस्यैव पर्यवसानात्। तादर्थ्येन च "यस्योभयं हविरार्तिमार्च्छेति, ऐन्द्रं पञ्चशराव-

रत्नतूलिका

ननु किमिति साक्षात्कारगोचरतयोद्देश्यताङ्गीक्रियते, आहत्यैव क्रियां प्रत्युद्देश्यत्वमस्त्वित्याशङ्क्य निषेधति--न च विधेयेति। साक्षात्कारस्यैव विधेयश्रवणक्रियां प्रत्युद्देश्यत्वम्, तस्य तत्साध्यत्वात्। ब्रह्म तु तद्विशेषणमात्रमित्यर्थः। तर्हि ग्रहैकत्ववद्ब्रह्मणो न विवक्षा स्यादित्येतद्दूषयितुमनुवदति---यत्त्वेवमिति। यावता विना उद्देश्यप्रतीतिपर्यवसानं नास्ति तावतो विवक्षितत्वमिति दूषयति—तन्नेति। न हि साक्षात्काराय श्रवणं कुर्यादिति विधातुं शक्यते; कस्य साक्षात्कार इति साकाङ्क्षतया प्रतीत्यपर्यवसानात्। भवति तु ब्रह्मसाक्षात्कारायेत्युक्ते तत्पर्यवसानमिति भावः। अनया उक्तिभङ्ग्या उद्देश्यप्रतीत्यनुबन्धित्वमात्रमात्मनो न विधेयक्रियान्वय इति नोत्पाद्याद्यन्यतमत्वापत्तिरिति सूचितम्। तथा च तत्पर्यवसानार्थतया विशेषणं विवक्षितमिति दृष्टान्तमुखेनाह—तादर्थ्येन चेति। षष्ठे चिन्तितम्—"यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेत्" इति विहितः पञ्चशरावयागः किमुभयोः सायंदोहप्रातर्दोहयोरार्तावेव स्यात्, उतान्यतरार्तावपीति संशये यथा आर्तिमात्रस्य हविर्मात्रस्य वा न निमित्तता; किं तु मिलितयोः, तथोभयत्वस्यापि निमित्तान्तर्भाव इति पूर्वपक्षे, आर्तिमात्रस्य निमित्तत्वे न प्रतीतिपर्यवसानम्, कस्यार्तिरित्येवं

मोदनं निर्वपेत्" इत्यत्रोद्देश्यरूपार्तिनिमित्तस्येव हविषा ब्रह्मणा साक्षात्कारस्यापि विशेषणीयत्वात्। उक्तं च "मृग्यामहे हविषा विशेषणम्" इति। न चावस्तुसता विषयेण साक्षात्कारः प्रमाणवस्तुपरतन्त्रो विशेष्यते; अविकल्पमयज्ञानत्वविरोधात्। एवं सत्येव "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुतनित्यफलापरोक्षोद्देश्यकविधिप्रतीतिपर्यवसानोपपत्तेः। न चैवं प्रधानतमस्याविवक्षा युक्ता ॥

रत्नतूलिका

साकाङ्क्षत्वात्, अतो हविरिति विशेषणमुद्देश्यकोटिनिविष्टमेव, नोद्देश्यविशेषणम्। उभयत्वं तु नैवम्; तेन विनापि निमित्तप्रतीतिपर्यवसानादिति। तद्वदत्रापीत्यर्थः। आर्तिनिमित्तस्येति। आर्तिरूपनिमित्तस्येत्यर्थः। उक्तमिति। शबरस्वामिनेति शेषः। अस्तु विशेषणविवक्षा, तथापि तस्य कथं [1]वस्तुसत्ता, येन वेदान्तानां तदैदम्पर्यं स्यादित्यत आह—न चावस्तुसतेति। प्रमाणपरतन्त्र इत्यनेन ज्ञानविषयस्यावस्तुत्वे वेदान्तानां तत्र प्रामाण्यं हीयेतेति बाधकतर्कप्रदर्शनपूर्वकं विषयसत्ता दर्शिता। अविकल्पमयेति। "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति तल्लक्षणात् विषयशून्यं ज्ञानं विकल्पः, तदितरज्ञानं हि साक्षात्कारः। तत्त्वविरोधादित्यर्थः। एवं सत्येवेति। साक्षात्कारविषयस्य वस्तुसत्त्व एवेत्यर्थः। श्रवणं साक्षात्काररूपफलमुद्दिश्य विधीयते। तस्य च फलत्वं ब्रह्मभावलक्षणनित्यफलोपयोगितया। स चेदवस्तुसन् तत्फलोद्देश्यकश्रवणविधिप्रतीतिपर्यवसानमेव न स्यादित्यर्थः। एवं प्रधानतमस्येति। श्रवणकर्मत्वाद्वेदान्ताः प्रधानम्,

---

[1] वस्तुसत्त्वम्—च. कुं.

वेदानुवचनविधिन्यायेन श्रवणविधावपि ब्रह्मणो विवक्षाभ्युपगमः

नन्वत एव समुदीरितदोषो मा प्रसाङ्क्षीदिति श्रवणविधिमेव जह्याम, मा भूदुक्तकल्पनाक्लेशः। तत्किं वेदानुवचनादिविधिमपि परिहरेम, तस्यापि ब्रह्मविषयेष्यमाणज्ञानफलत्वात्। तथा च "सहकारित्वेन च" इति सूत्रविरोधः। तत्र यद्युद्देश्यफलाविघाताय ब्रह्मविवक्षा तर्क्येत, तर्क्यतां तथैव श्रवणविधावपि, न कश्चिद्विरोधः॥

उद्देश्यस्य विधिप्रतिपत्तौ तुल्यवित्तिवेद्यतया प्रतीयमानप्राधान्यत्यागायोगः

यत्तु विधिप्रतिपत्तावुद्देश्यस्याप्युपसर्जनभाव इति, तत्तथैव; किं तु तत्प्राधान्यमपि तदेकवित्तिवेद्यत्वादशक्यं त्यक्तुम्। अन्यथा फलकरणेतिकर्तव्यतानामपरित्यक्तरूपाणामेव भावनान्वयानुपगमे तुल्यकल्पत्वापत्तेः॥

रत्नतूलिका

विचारितानां तेषामपि साक्षात्कारार्थतया तस्य प्रधानतरत्वम्, तस्यापि ब्रह्मार्थतया तत्प्रधानतममित्यर्थः॥

अतःशब्दार्थमाह—समुदीरितदोष इति। ब्रह्मणोऽविवक्षादिदोष इत्यर्थः। प्रतिबन्दीमालम्ब्य दूषयति—तत्किमिति। अविवक्षाप्रसङ्गादिदूषणं तत्रापि समानमित्यभिप्रेत्याह—तस्यापीति। न चेष्टापत्तिरित्याह—तथा चेति। ननु ब्रह्मस्वरूपगुणविभवानुभवलक्षणमोक्षोपायतया उपासनात्मकं ज्ञानमिष्यमाणं तत्र फलं तदविघाताय ब्रह्मविवक्षावश्यवक्तव्येत्यत आह—तत्र यदीति॥

यत्त्विति। उद्देश्यस्यापि विधिप्रतिपत्तावुपसर्जनभाव इत्यन्वयः। अन्यथेत्यस्य विवरणं—अपरित्यक्तरूपाणामित्यादि।

## धात्वर्थभावनयोः साध्यस्य सदृष्टान्तमभेदोक्त्या विधि-प्रतिपत्तौ तत्प्राधान्यभानस्यावर्जनीयत्वम्

यद्यपि च धात्वर्थभावनारूपप्रतिपत्त्यनुबन्धितया कर्मणी भिद्येते, न तु भाव्यरूपम्; "अग्नीनादधीत" इत्यत्राग्नीनामाधानभावनाप्रतिपत्त्यनुबन्धिकर्मरूपभेदेऽपि तद्भाव्यरूपा-

### रत्नतूलिका

भावनाविशेषणत्वेनान्वयदशायामपि फलं प्राधान्यं न जहाति, करणं तु तदुपसर्जनभावं, अङ्गानि तु करणार्थतामित्येवमङ्गीकर्तव्यम्। अन्यथा तुल्यरूपेणोपस्थितानां तेषां भाव्यकरणेतिकर्तव्यताकाङ्क्षानुसारेण भावनान्वयो न स्यादिति भावः ॥

यदुक्तं भावनां प्रति गुणत्वेन प्रतीयमानस्य न तां प्रत्येव प्राधान्येन प्रतीतिः, किं तु धात्वर्थं प्रत्येव। न च धात्वर्थं प्रति कर्मण एव भावनां [1] प्रत्यपि कर्मत्वम्; तयोर्भेदादित्यादि, तद्दूषयितुमनुवदति— यद्यपि चेति। धात्वर्थस्य भावनायाश्च यद्रूपं तत्प्रतिपत्त्यनुबन्धितयेत्यर्थः। यागलक्षणधात्वर्थे ज्ञायमाने पूज्या देवता कर्मत्वेन प्रतीयते। भावनायां प्रतीयमानायां तु स्वर्गादीति कर्मभेद इत्यर्थः। एवं कर्मभेदेऽपि धात्वर्थं भावनां च प्रति साध्यरूपं यदस्ति तन्न भिद्यत इत्याह—न त्विति। एतदेव दृष्टान्तमुखेनोपपादयति—अग्नीनादधीतेति। आधानप्रतिपत्त्यनुबन्धी कर्माधीयमानः परिदृश्यमानोऽग्निः, भावनाप्रतिपत्त्यनुबन्धी तु संस्कारविशिष्टोऽग्निराहवनीयादिः, एवं भेदेऽप्युभयोरपि साध्यतयोद्देश्यं भाव्यरूपमाहवनीयादि न भिद्यत इत्यर्थः। ननु क्रियाद्वयस्य कथमेकसाध्यनिष्ठत्वम्, चलति पचतीत्यादावदर्शनादित्यत आह—

---

[1] प्रति—च.

भेदावगमात् । व्यापारव्यापारितया भावनाधात्वर्थयोरेकसाध्यनिष्ठत्वात् । न चावश्यमुभयोः कर्मभेदनियमः ; धात्वर्थानुबन्धिकर्मणो भावनाननुबन्धित्वेऽपि भावनानुबन्धिनस्तस्याधात्वर्थस्य धात्वर्थानुबन्धित्वाविरोधात् । अन्यदेवेत्यादिभट्टवचनस्य चोक्ताभिप्रायत्वोपपत्तेः । यदि च शेत इत्यादौ धात्वर्थातिरेकिप्रत्ययार्थानुबन्धिभाव्यरूपं कर्म, धात्वर्थानुबन्ध्यपि तत्स्वव्याप्यापेक्षया तु धात्वर्थस्य सकर्मकत्वव्यपदेशो नोद्देश्यापेक्षयेत्यनतिप्रसङ्गात् । तदिदमुक्तम्—

"अन्यदेव हि धात्वर्थव्याप्यं कर्म सकर्मके ।" इति ।

तथा च भाव्यात्मनोद्देश्याप्रतीतौ धातुविधिप्रत्ययार्थयोः करण-

## रत्नतूलिका

**व्यापारेति ।** व्यापारो भावना, व्यापारी धात्वर्थः । **भावनाननुबन्धित्वेऽपीति ।** यजिकर्मणो देवताया भावनानुबन्धित्वादर्शनादिति भावः । ननु भावनानुबन्धिनोऽपि न धात्वर्थानुबन्धित्वम् ; धात्वर्थे व्यभिचारादित्यत आह—**अधात्वर्थस्येति । उक्तेति ।** धात्वर्थकर्मणो न भावनाकर्मत्वमित्युक्तेत्यर्थः । ननु भावनाकर्मणो धात्वर्थकर्मत्वमित्ययुक्तम्, शीङादौ व्यभिचारादित्यत आह—**यदि चेति ।** यदि शेते शयनेन सुखं करोतीति धात्वर्थकरणिका भावना धात्वर्थातिरिक्तभाव्यका तथा तद्भाव्यं धात्वर्थानुबन्ध्यपि भवतीति न व्यभिचार इत्यर्थः । तर्हि शीङः सकर्मकत्वप्रसङ्ग इत्यत आह—**स्वव्याप्यापेक्षयेति ।** उद्देश्यरूपकर्मापेक्षाव्यावृत्त्यर्थस्तुशब्दः । अत एव भट्टकारिकायां व्याप्यपदोपादानमित्यभिप्रेत्य तत्सम्मतिं दर्शयति—**तदिदमिति ।** युक्त्यन्तरं दर्शयन्विधिप्रतिपत्त्युद्देश्यप्राधान्यज्ञानमवर्जनीयमित्युपसंहरति—**तथा च भाव्यात्मनेति ।** साध्यात्मनेत्यर्थः ।

भावनारूपभेदप्रतीत्ययोगादवर्जनीयतयोद्देश्यप्राधान्यमपि विधि-प्रतीतौ भासत एव। अत एव न गुणप्रधानभावविरोधः। आर्थमुद्देश्यप्राधान्यमन्तर्भाव्यैव शाब्दभावनाप्राधान्यावगमात्। अन्यथा भावना किमंशाकाङ्क्षानिवृत्तौ तत्प्रत्ययापर्यवसानात्। "वाजपेयेन यजेत" इत्यादौ हि वाजपेयेन यागं, यागेन स्वाराज्यमिति शब्दसमभिव्याहारभेदमनपेक्ष्य निरूपकभेदेऽपि

## रत्नतूलिका

रूपभेदेति। किंचिद्वाक्यमपेक्ष्यैव तयो रूपभेदो ज्ञातव्यः 'इदमनेन कुर्यात्' इति। ततश्च भाव्यतया प्रतीतिरवर्जनीयेत्यर्थः। अतःशब्दार्थं दर्शयति—**आर्थमिति**। तथा चैतादृशं प्राधान्यं न भावनागुणभाव-विरोधीति भावः। न केवलं प्राधान्यप्रतीतेरविरोधमात्रं, अपि त्ववश्या-पेक्षणीयतेत्याह—**अन्यथेति**। नन्वेवं वाजपेयाधिकरणविरोधः, तत्र "वाजपेयेन स्वाराज्यकामो यजेत" इत्यत्र वाजपेयपदं किं गुणपरमुत नामधेयमिति संशये, प्रवृत्तिविशेषकरत्वाद्गुणपरमिति पूर्वपक्षं कृत्वा, तथा सति यागस्य वाजपेयरूपगुणं प्रति साध्यत्वं स्वाराज्यलक्षणफलं प्रति साधनत्वं च युगपत्प्रत्येतुमशक्यं; विरोधात्, अतो नामधेयमिति अन्यानिरूपितसाध्यत्वसाधनत्वयोरपि प्रतीतौ विरोधमङ्गीकृत्य सिद्धान्तः कृतः, तद्विरोधः स्यादित्यत आह—**वाजपेयेनेति**। **शब्दसमभि-व्याहारेति**। यजतेति सकृदुपात्तमाख्यातपदं यागकर्मके वा यागकरणके वान्वये बोधिते निराकाङ्क्षमिति समभिव्याहृतपदान्तराकाङ्क्षानुसारेणा-वृत्त्यान्वयान्तरं बोधयतीति वाच्यम्। तथा च वाजपेयेन यागं कुर्यात्, यागेन स्वाराज्यमिति वाक्यभेदः स्यादित्यर्थः। तथा च तत्र वाक्यभेद एव गुणपरत्वे बाधको न तु गुणत्वप्राधान्यविरोध इति भावः। इत्थं तु

साध्यत्वं नाधिगम्यते। वाजपेयवतेति मत्वर्थलक्षणायां तु योग्यतया तस्य साध्यसाधनभावपर्यवसानात् पदमात्रोपस्थिता साध्यरूपयागकरणकभावना वाक्यार्थो बोध्येत। अन्यथा "सोमेन यजेत" इत्यादावगतेः। किं तु सत्यां गतौ लक्षणैव दोष इति वाजपेयपदं नामधेयमिति स्थितम्। ब्रह्मविज्ञानस्य त्वमृतफलार्थवादेन स्वरसत एवेष्यमाणतया "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इति सन्नन्तसमभिव्याहृतैकार्थतया

रत्नतूलिका

तव गुणपरत्वं वाच्यमिति पूर्वपक्षिणं शिक्षयति—वाजपेयवतेति। तस्य मतुबर्थसम्बन्धस्य। पदमात्रोपस्थितेत्यनेन वाक्यस्य तत्र व्यापाराभावान्न वाक्यभेद इति द्योतयति। उत्पत्तिविधावपि यागेन कुर्यादित्यनिर्धारितभाव्यका यागकरणिका भावना प्रतीयते, अधिकार-विधिना तु भाव्यविशेषसम्बन्धप्रतीतिरित्यभिप्रेत्य बाधकमाह—अन्यथेति। आदिपदात् "हिरण्यं भार्यम्", "अरुणया क्रीणाति" इत्यादिसङ्ग्रहः। तर्हि कथं सिद्धान्त इत्यत आह—किं त्विति। "सोमेन यजेत" इत्यादौ सोमशब्दस्य [1]द्रव्यविशेषरूढत्वेन कर्मनामत्वानुपपत्तेरगत्या लक्षणाश्रयणमिति भावः। ब्रह्मसाक्षात्कारस्य प्राधान्यावगमे न पूर्वोक्त-दोषद्वयमित्यभिप्रेत्य कमिपदाभावेऽपि तस्य साध्यत्वोपस्थितौ हेतुं वदन् आत्मनो विवक्षामुपसंहरति—ब्रह्मविज्ञानस्येति। तु शब्दो वाजपेय-वाक्योक्तदोषद्वयव्यावृत्त्यर्थः। "एतावदरे खल्वमृतत्वम्" इत्यर्थ-वादेनेत्यर्थः। सन्नन्तेति। "द्रष्टव्यः श्रोतव्यः" इति वाक्यस्य

---

[1] द्रव्यविशेषे रू—ख. कुं.

च साध्यत्वोपस्थितौ तदन्वितविधिप्रतिपत्तावपि प्राधान्याव-गमाद्विवक्षैवात्मनोऽपि ॥

यद्यप्येवमार्थे फलप्राधान्येऽपि न फलपदेन पदान्तर-सम्बन्धः, किं तु शाब्दं प्राधान्यमन्वयहेतुरिति विधिनैव फल-पदान्यपि सम्बध्यन्ते, न तु ब्रह्मपदानि; येन ब्रह्मणि तात्पर्या-भाव आपद्येत। स्वर्गार्थवादपदान्यपि हि स्वर्गं प्रत्याय्य

रत्नतूलिका

"तद्विजिज्ञासस्व" इति वाक्यस्य चैकार्थतयेत्यर्थः। तदन्वितेति। तद्विशेषणकभावनाप्रतिपत्तावपीत्यर्थः ॥

नन्वेवमार्थप्राधान्यमकिञ्चित्करम्, यथा "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादौ फलस्यार्थप्राधान्येऽपि नेतरेषां तत्रान्वयः; किं तु प्राधान्येन शब्दोपस्थितायां भावनायाम्, न केवलमग्न्यन्वाधाना-दीनामेव भावनान्वयः; किं तु "यन्न दुःखेन संभिन्नम्" इत्यादि-स्वर्गस्वरूपप्रतिपादकानामपि, तथेहापि "सत्यं ज्ञानम्" इत्यादिवाक्याना-मपि स्वप्रतिपाद्यब्रह्मणा सह भावनान्वय एव स्यात्, तथा च शास्त्राणां ब्रह्मैदम्पर्यभङ्ग इत्याशङ्क्य तद्वैषम्यमाह—यद्यप्येवमित्यादिना। किं तु शाब्दमिति। वाक्ये प्रधानतया प्रतीतस्यैवेतरान्वययोग्यत्वादिति भावः। एवं स्वर्गकामादिवाक्ये उपपाद्य प्रकृते तद्वैषम्यं दर्शयति—न त्विति। तदेव स्फुटयितुं स्वर्गार्थवादपदानां स्वर्गप्रतिपादनद्वारा विध्यन्वयं सहेतुकं दर्शयति—स्वर्गार्थवादेति।

"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं यत्तत्सुखं स्वःपदास्पदम् ॥"

विधिना सम्बध्येरन्निति युक्तम् , स्वर्गस्य विहितक्रियासाध्यत्वात् । साक्षात्कारस्तु विधिफलगृहीतोऽपि मानाधीन इति ब्रह्मणि प्रत्यायिते किं विधिना साध्येत । तेन साक्षात्कारफलेन श्रवणादि-विधिनैव विध्यसंस्पर्शेन ब्रह्मतात्पर्यगृहीतानि सत्यज्ञानादि-पदानि ब्रह्म प्रत्याययन्तीति श्लिष्यत इति ॥

रत्नतूलिका

इत्यादिपदानामित्यर्थः । तत्र हेतुमाह—स्वर्गस्येति । तथा च स्वर्गप्रत्यायनमात्रेण तेषां चारितार्थ्याभावात्तत्प्रतिपादनेऽपि स्वर्गसिद्धे-र्विधिं विनानुपपत्तेस्तत्रैवान्वय इति भावः । प्रकृते तु ब्रह्मपदानां न विधेयक्रियान्वयः ; किं तु फलभूतसाक्षात्कारविषयब्रह्मणैवेति वैषम्यं वक्तुं साक्षात्कारे स्वर्गवैषम्यं दर्शयति—साक्षात्कारस्त्विति । विधिफलेति । विधेयक्रियाफलत्वेन प्रतीतोऽपीत्यर्थः । यथा चित्रा-विधिफलत्वेन गृहीतः पश्वादिः प्रतिग्रहाद्यधीनस्तद्वदिति भावः । अस्तु साक्षात्कारस्य मानाधीनत्वम् , तथापि ब्रह्मपदानां विध्यनन्वये किमायातमित्यत आह—इति ब्रह्मणीति । स्वर्गादिपदानां तत्प्रति-पादनेनेव वेदान्तानामपि ब्रह्मप्रतिपादनेनैव विध्यन्वयो वाच्यः । तथा च तावतैव चारितार्थ्याद्विधिर्व्यर्थ इत्यर्थः । श्रवणविध्यङ्गीकारेऽपि न वेदान्तानां ब्रह्मैदम्पर्यहानिरित्येतदुपसंहरति—तेनेति । विधि-संस्पर्शमन्तरा वेदान्तानां ब्रह्मणि तात्पर्यग्रहणं श्रवणादिविधिनेत्यत्र हेतुगर्भं विशेषणं साक्षात्कारफलेनेति । अन्यथा तत्फलत्वं न सिध्येत् । विध्यन्वितानां तेषां मानान्तरविरोधे सति ब्रह्मसिद्धावाग्रहा-भावेन तदपरोक्षज्ञानमेव न सिध्येदिति भावः ॥

### श्रवणादीनां मुक्त्युद्देश्यकत्वकल्पः

अथ वा—

नात्मसाक्षात्क्रियाकामः श्रवणादिविधेरिह ।
प्रतिपत्तेष्यते येन शङ्क्येतात्माविवक्षणम् ॥
नित्यानित्यविवेकादिसाधनाढ्याधिकारिके ।
श्रवणादिविधावन्यो नाधिकारो [1] विमृश्यते ॥
मुक्तेरुपायो विज्ञानं तस्य च श्रवणादिकम् ।
श्रवणादिविधौ तेन विज्ञानमुपबध्यते ॥

### रत्नतूलिका

एवं साक्षात्कारकामः श्रवणादावधिकारी, साक्षात्कार एवोद्देश्यफलम्, अथापि ब्रह्मणो विवक्षास्तीति न वेदान्तानां तदैदम्पर्यविरोध इत्युक्तम् । इदानीं नित्यानित्यविवेकादिमानधिकारी, तेन च मुक्त्युद्देशेन श्रवणमनुष्ठीयते, अनुष्ठितेन तेन प्रमाणानुग्रहलक्षणदृष्टरूपेण ज्ञानम्, तेन च मोक्षः, विहितरूपेण च धर्मः, तस्य मोक्षेऽनुपयोगात्तद्व्यापारे ज्ञाने यज्ञदानादिजन्यधर्मवदुपयोगः, यथा कारीर्या अदृष्टम्, तेन च वृष्टिः, तथा च शुष्यदोषधिजीवनम्, एतावता कारीर्या वृष्टिरिव श्रवणस्य ज्ञानं फलत्वेनोपनिबध्यते द्रष्टव्य इति । तथा च ब्रह्मणो नाविवक्षेति पक्षान्तरमाह— अथ वेति । नान्य इति । न साक्षात्कारकाम इत्यर्थः । ननु तर्हि विवेकादिमध्ये मुमुक्षाया अपि प्रवेशात्तद्विषयस्य मोक्षस्यैव फलत्वेन निबन्धः स्यात्, तत्कथं ज्ञानस्य तन्निबध्यत इत्यत आह—मुक्तेरुपाय इति । तथा च स्वर्गादिसाध्यता यथा तद्व्यापारापूर्वसाध्यतायां पर्यवस्यति, तथा मोक्षसाध्यता ज्ञानसाध्यतायामिति तस्य फलत्वेन निबन्ध इति भावः ॥

---

[1] विमृग्यते—ङ.

विहितश्रवणादीनामनुष्ठानेऽन्यहेतुके।
करणस्य विनिष्पत्त्या धर्मो ज्ञानं च जायते ॥
श्रवणादिमधर्मस्य यज्ञदानादिधर्मवत्।
सत्त्वशुद्धिसमर्थत्वात्कल्प्यते ज्ञानहेतुता ॥
यद्यप्युद्दिश्यते मुक्तिः श्रवणादिविधाविह।
तद्धर्मानुपयोगेन सा ज्ञानेनैव साध्यते ॥
दृष्टवृष्ट्यादिसाध्येऽपि शुष्यदोषधिजीवने।
तत्कामिकार्यकारीरीधर्मो वृष्टौ हि साधनम् ॥
तदुद्देश्यविधेर्धर्मस्तद्व्यापारे समाप्यते।
इति दृष्टफले मुक्तौ नापूर्वपरिकल्पना ॥
श्रवणादिविधौ तस्मान्न किंचिदविवक्षितम् ॥ इति ॥

रत्नतूलिका

ननु यदि श्रवणादिना ज्ञानं तेन च मोक्ष इति, तदा ज्ञानादिरूपे दृष्टफले सति विधिर्व्यर्थ इत्यत आह—विहितेति। दृष्टादृष्टाङ्गसहिततया विहितेत्यर्थः। अन्यहेतुके मोक्षहेतुक इत्यर्थः। तस्य कोपयोग इत्यत आह—श्रवणादिमेति। ज्ञानहेतुतेति।

"सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते।" इति।

"योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये।"

इत्यादिस्मृतेरिति भावः। ननु यदुद्दिश्यते तत्रैवादृष्टस्योपयोगो युक्त इत्यत आह–यद्यपीति। तद्धर्मानुपयोगेनेति। तस्यां धर्मानुपयोगेनेत्यर्थः। [1]अन्यविधावुद्देश्यत्वमन्यत्र धर्मोपयोग इत्येतद्दृष्टान्तेन समर्थयते—दृष्टवृष्ट्यादीति। तर्ह्यतिप्रसङ्ग इत्याशङ्क्य तत्र नियामकं दर्शयति—तदुद्देश्येति। न किञ्चिदिति। साक्षात्कारो वा तद्विशेषणं ब्रह्म वा नाविवक्षितमित्यर्थः॥

---

[1] अन्यस्य विधावु—कुं.

श्रवणादिविध्यसम्भवानुवादः, तन्निरासश्च

यदपि विषयज्ञानाज्ञानाभ्यां श्रवणविधेरसम्भव इति, तदपि न; आपाताधिगतविषयनिरूपितस्य श्रवणस्य विधिसम्भवात्। अवगतिपर्यन्तस्य विषयापरोक्षस्य श्रवणविधिफलस्यानपेक्ष्यत्वात्। ज्ञानविधिस्तु न सम्भवति; ब्रह्मणि विज्ञाते तस्य कृतकरत्वात्। आपातज्ञाते निर्णयापरोक्षस्याप्यपुरुषतन्त्रतया अविधेयत्वात्। मनननिदिध्यासनयोः श्रवणं प्रति फलोपकार्यङ्गतया विधेयत्वादिति ॥

श्रवणेऽपूर्वविधित्वाक्षेपः

अथापि स्यात् नायमपूर्वविधिः; विचार्यतत्त्वानिर्णयार्थतया विचारस्य प्राप्तत्वात्, तदपरोक्षे [1]चानुग्राह्यप्रमाण-

रत्नतूलिका

श्रवणविध्यसम्भवे ज्ञानविध्यसम्भवो दृष्टान्ततया परेणोपात्तः, तत्र वैषम्यं दर्शयति—ज्ञानविधिस्त्विति। यदुक्तं मनननिदिध्यासनयोरपि विधेयवित्त्यवित्तिभ्यां विधानमनुपपन्नमिति तत्रोत्तरमाह—मनननिदिध्यासनयोरिति। फलोपकार्यङ्गतयेत्यनेनापातज्ञानमुपजीव्य साक्षात्कारलक्षणफलोपकारितया श्रवणाङ्गत्वेन विधीयत इति नोक्तदोष इति सूचयति ॥

अस्तु श्रोतव्य इति विधिः, तथापि किमपूर्वविधिः? उत नियमविधिः? अथ वा परिसङ्ख्याविधिरिति विकल्प्य नाद्य इत्याह—नायमिति। आद्येऽपि किं विचार्यतत्त्वानिर्णयोद्देशेन तद्विधिः? किं वा तदपरोक्षोद्देशेन? किं वा मुक्त्युद्देशेनेति विकल्प्याद्यं दूषयति—विचार्येति। द्वितीय आह—तदपरोक्षे चेति। प्रमाणस्वभावाधीन

[1] चानुग्राह्यस्य प्र—ख.

स्वभावाधीने विषयस्वभावाधीने वा तस्य पृथगविधेयत्वात्, वैधफलत्वे च मुक्तेरनित्यत्वापत्तेः ॥

### श्रवणे नियमविधित्वाक्षेपः

नापि नियमः; दृष्टफले ज्ञानस्वरूपे साधनान्तरभावाभावाभ्यां तदसम्भवात्। अथापि कथञ्चिन्नियम्येत, यदि ज्ञानं मुक्तिर्वा तदद्दृष्टेन साध्येत; न त्वेवम्; दृष्टफलत्वोपगमात्। अन्यथात्यन्तपरिपक्वकषायस्य साङ्गवेदाध्ययनमात्रेण ब्रह्म-

### रत्नतूलिका

इति पररीत्या, विषयस्वभावाधीन इति सिद्धान्तरीत्येति बोध्यम्। तृतीय आह—वैधेति ॥

महाविकल्पे द्वितीयं दूषयति— नापीति। वैतुष्ये अवहनननखविदलनयोरिव दृष्टफले ज्ञाने श्रवणं साधनान्तरं च यदि पक्षतः प्राप्तं तदा श्रवणस्याप्राप्तांशपूरणेन साधनान्तरनिवृत्तिफलको नियमविधिरिति वाच्यम्। स च न सम्भवति; प्राप्तस्य साधनस्य विधिना निवर्तयितुमशक्यत्वात्। यदि न प्राप्तिस्तदा सुतरां श्रवणस्याप्राप्तांशाभावेन तत्फलकविध्यसम्भव इत्यर्थः। कथञ्चिदिति। साधनान्तराप्राप्तावपि पक्षे श्रवणविरोधिनोऽनात्मदर्शनस्यापि प्राप्तत्वात्तन्निवृत्त्यर्थं नियम इति वक्ष्यमाणरीत्येत्यर्थः। अथ वा श्रवणस्य केवलमनःप्रणिधानस्य च ज्ञानसाधनतया पक्षप्राप्तौ श्रवणनियम इत्यर्थः। यदीति। अवहननेनैव तुषविमोकः कार्य इत्यत्र नियमादृष्टस्य परमापूर्व इवात्रापि नियमादृष्टस्य ज्ञाने तत्साध्यमोक्षे वा उपयोगे सति नियमविधिः स्यात्, स च न सम्भवति। उभयोर्दृष्टफलत्वादित्यर्थः। अन्यथेति। दृष्टफलत्वाभाव

विज्ञानं मुक्तिर्वा न स्यात्। यत्रेदमुदित[1]माचार्यैः—

"कृत्स्नानात्मनिवृत्तौ तु कश्चिदाप्नोति निर्वृतिम्।
श्रुतवाक्यस्मृतेश्चान्यः स्मार्यते च वचोऽपरः॥
वाक्यश्रवणमात्राच्च पिशाचकवदाप्नुयात्॥" इति।

अन्यत्रापि—"योऽपि वाक्यश्रवणादेव प्रतिपद्यते तस्याप्यतीन्द्रियशक्तिमत्त्वान्न किञ्चिदपेक्षितव्यमस्ति" इति। न चान्यद्विचारनियमादृष्टसाध्यं, यत्र सफलस्तन्नियमः स्यात्॥

श्रवणे परिसङ्ख्याविधित्वाक्षेपः

नापि परिसङ्ख्या; "इमामगृभ्णन् रशनाम्" इत्यस्य लिङ्गादश्वरशनादानादन्यत्र गर्दभरशनादान इव विचारस्य

रत्नतूलिका

इत्यर्थः। न स्यादिति। श्रवणनियमादृष्टस्य तत्राभावादिति भावः। दृष्टोपायसाध्यत्वे तु वेदान्तलक्षणोपायान्तरस्य सत्त्वाज्ज्ञानादिकमुपपद्यत इति बोध्यम्। विनापि श्रवणं ज्ञानमोक्षयोः सम्भव इत्यत्राचार्यवचनं प्रमाणमाह—यत्रेदमिति॥

तृतीयं दूषयति—नापि परिसङ्ख्येति। किं शेषिपरिसङ्ख्या? उत शेषपरिसङ्ख्येति विकल्पं मनसि निधायाद्यमुदाहरणप्रदर्शनपूर्वकं दूषयति—इमामगृभ्णन्निति। "इमामगृभ्णन् रशनामृतस्य, पूर्व आयुषि विदथेषु कव्या" इत्ययं मन्त्रोऽग्निचयनप्रकरणे समाम्नातः। चयने चाश्वरशना गर्दभरशना चेति रज्जुद्वयमस्ति। तत्र च "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति विधिः

[1] मार्यैः—ङ.

विचार्यतत्त्वज्ञानादन्यत्राप्राप्तेः। गृहमेधीयेष्टावाज्यभागादन्यस्याङ्गस्येव ज्ञाने श्रवणादन्यस्य नित्यवदप्राप्तेश्च। तुल्यविधानस्य मननादेरपरिसङ्ख्येयत्वाच्च। न च पुरुषार्थतया केवलमुभयप्राप्तावात्मश्रवणादिविधिरनात्मदर्शनादिपरिसङ्ख्येति युक्तम्; सर्वविषयविरक्ते मुमुक्षावधिकारिणि पुमर्थतयानात्मदर्शना-

रत्नतूलिका

श्रूयते। एतद्विध्यभावे मन्त्रस्य रशनाप्रकाशनसामर्थ्यलक्षणलिङ्गादश्वरशनादाने गर्दभरशनादाने च प्राप्तिः स्यात्। तथा चैकस्य शेषस्य शेषिद्वयप्राप्तावन्यतरवर्जनार्थोऽयं विधिरिति पूर्वतन्त्रे स्थितम्। न चेह श्रवणस्य तथा शेषिद्वयप्रसक्तिरित्यर्थः। द्वितीयमुदाहरणप्रदर्शनमुखेन दूषयति—गृहमेधीयेष्टाविति। चातुर्मास्येषु गृहमेधीयेष्टिरिति काचिदिष्टिः—"मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुम्" इति समाम्नाता। तत्र "आज्यभागौ यजति" इति विधिः श्रूयते। एतद्विध्यभावे तस्यामाज्यभागयोः प्रयाजादीनां च शेषाणां चोदकतः प्राप्तिः स्यात्। ततश्चाज्यभागेतरशेषपरिसङ्ख्यार्थो विधिरिति तदधिकरणे कश्चन पक्षः। न चेह तथा ज्ञाने शेषिणि श्रवणस्यान्यस्य च शेषस्य प्राप्तिरित्यर्थः। ननु मनननिदिध्यासनयोः प्राप्तत्वात्परिसङ्ख्या भविष्यतीत्यत आह—तुल्येति। तयोः श्रवणाङ्गतया विधानात्परिसङ्ख्यानुपपत्तेरित्यर्थः। ननु ज्ञानशेषतया उभयोः प्राप्त्यभावेऽपि पुरुषार्थतया श्रवणानात्मदर्शनयोः प्राप्तावन्यतरपरिसङ्ख्यार्थं विधानं भविष्यतीत्याशङ्क्य निषेधति—न च पुरुषार्थतयेति। पुरुषस्य प्रयोजनविशेषे उभयप्राप्त्यभावं सूचयितुं केवलमित्युक्तम्। किं श्रवणाधिकारिण उभयप्राप्तिः? उतानधिकारिण इति विकल्प्य नाद्य इत्याह—सर्वविषयेति। अस्त्व-

द्यप्राप्तेः। नित्यवदुभयप्राप्तावेवान्यतरपरिसङ्ख्यानात्। जीवनमात्रोपयोगिनोऽपि तस्य परिसङ्ख्यानेऽर्थविघातात्, अमुमुक्षौ च विचारस्यैवाप्राप्तेरिति। तस्मान्न श्रवणविधिरिति॥

## श्रवणेऽपूर्वविधित्वपक्षसमर्थनम्

अत्रोच्यते—विधिरेव तावदयं स्यात्, विचारस्य विचार्यसाक्षात्कारहेतुभावाप्राप्तेः। अपरोक्षयोग्येऽपि षड्जादौ साक्षात्कारस्य तद्विवेचकधर्मश्रवणसंस्कारसचिवश्रुतिप्रणिधान-

## रत्नतूलिका

प्राप्तिः, ततश्च किमित्यत आह—नित्यवदिति। मास्तु पुरुषार्थतया तत्प्राप्तिः, स्वभावतो नित्यप्राप्तस्य परिसङ्ख्या भविष्यतीत्यत आह—जीवनेति। अर्थविघातादिति। विधिप्रयोजनस्यानुष्ठानस्य विघातादित्यर्थः। द्वितीयं दूषयति—अमुमुक्षौ चेति॥

विधिरेवेति। अपूर्वविधिरेवेत्यर्थः। अत्यन्ताप्राप्तप्रापणफले तत्रैव विधिशब्दस्य स्वरसत्वादिति भावः। साक्षात्कारार्थतयैव तद्विधानमिति द्वितीयं पक्षमवलम्बते—विचारस्येति। ननु गान्धर्वादिशास्त्रविचारस्य षड्जादिसाक्षात्कारहेतुत्वं क्लृप्तमित्यत आह—अपरोक्षयोग्येऽपीति। तथा च तादृशसंस्काराधायकतया अन्यथासिद्धो विचारो न साक्षात्कारहेतुरिति भावः। ननु विचार्यतत्त्वनिर्णयहेतुत्वेन धर्मविचारादौ प्राप्तस्य विचारस्यानुग्राह्य[1]श्रवणाधीनतया विषयाधीनतया वा साक्षात्कारहेतुत्वमप्यर्थात्प्राप्तमिति किं विधिनेत्युक्त-

[1] प्रमाणाधीन—च.कुं.

लभ्यतया गान्धर्वादिविचारस्य तत्र हेतुत्वानाकलनात् । आत्मा द्रष्टव्य इति साक्षात्कारफलमुद्दिश्य श्रोतव्य इति श्रवणविध्यभावे शब्दस्य साक्षात्कारकरणत्वानवगमेन तदनुग्राहकविचारस्यापि तत्साधनत्वाप्राप्तेश्च । शाब्दापरोक्षोपपादनस्यैतद्विधिमूलत्वात् । स च साक्षात्कारः प्रमाणप्रवृत्त्यादिदृष्टोपायोऽपि नैयोगिकः; प्रतिग्रहादिदृष्टोपायस्यापि पश्वादेश्चित्रादिनियोगफलत्वोपगमात्॥

## रत्नतूलिका

मित्यत आह—आत्मा द्रष्टव्य इतीति । विचारस्य तावत्स्वानुग्राह्य-प्रमाणद्वारा निर्णयहेतुत्वं वाच्यम् । ततश्चैतद्विध्यभावे परोक्षप्रमाणस्य शब्दस्यापरोक्षज्ञानजनकत्वमेवाप्राप्तमिति न तद्द्वारा विचारस्य तज्ज्ञान-मिति न विधिवैयर्थ्यमिति भावः । ननु विषयाधीनमेव ज्ञानस्यापरोक्षत्वम्, न करणाधीनमिति शाब्दापरोक्षस्थले वक्ष्यमाणन्यायेन तत्प्राप्तिरित्यत आह—शाब्देति । वेदान्तविचारस्याहत्य साक्षात्कारहेतुत्वे श्रुत्या बोधिते तन्निर्वाहाय विषयाधीनत्वादिन्यायोन्मेष इति विधिप्रवृत्तेः पूर्वं साक्षात्कारहेतुत्वस्य श्रवणेऽज्ञानान्न वैयर्थ्यमिति भावः । ननु श्रवणानु-गृहीतेन प्रमाणेन दृष्टफलं ज्ञानमुत्पद्यत इति तत्र दृष्टार्थानेकाङ्गोपेत-श्रवणविधानं व्यर्थम्, तदधीनादृष्टस्य ज्ञानेऽनुपयोगादित्यत आह—स चेति । यथा "चित्रया यजेत पशुकामः" इति चित्रायागफलत्वेन श्रुतः पशुः प्रतिग्रहादिदृष्टोपायसाध्योऽपि नियोगफलमित्यभ्युपगम्यते, तज्जन्यादृष्टस्य पशुप्राप्तिप्रतिबन्धकदुरितनिवृत्त्या वा प्रतिग्रहादिदृष्टो-पायघटकत्वेन वा तत्रोपयोगात्, तथात्रापि श्रवणजन्यादृष्टस्य ज्ञानप्रति-बन्धकदुरितनिवृत्त्या तत्रोपयोग इत्यर्थः ॥

## श्रवणे नियमविधित्वपक्षसमर्थनम्

अथ वा नियमः स्यात्, अधीतवाक्यापातावगते प्रत्यगात्मन्यप्यहङ्कारसम्पिण्डितात्मदर्शनसाधनत्वेन क्लृप्तस्य मनसः केवलं प्रणिधानापेक्षया साधनान्तरस्य प्राप्तिसम्भवात्। सङ्कीर्णाधिगतरत्नतत्त्वसाक्षात्काराय चक्षुष एव प्रणिधानदर्शनात्। तथा च [1]पाक्षिक्यामप्राप्तौ विचारस्य नियमः। [2]तदद्दृष्टवैगुण्ये च कियतोऽपि दुरितस्यानिवृत्तेर्ज्ञानोदयप्रतिबन्धादित्येके। आवर्त्यमानाद्वाक्यादन्यत्रार्थतत्त्वनिर्णयदर्शनादात्मापाताधिगमहेतोर्वाक्यस्यैवात्मतत्त्वनिर्णयाय केवलाभ्यासप्राप्तौ तन्नियम इत्यपरे। प्रसक्तविधेयविरोधिमात्रनिवृत्तिफलत्वान्नियमविधे-

### रत्नतूलिका

एवमपूर्वविधित्वमुक्त्वा नियमविधित्वमप्याह—अथ वेति। तत्सिद्धये पक्षतः साधनान्तरप्राप्तिमाह—अधीतेति। सम्पिण्डितप्रत्यगात्मदर्शनसाधनस्य तत्तत्त्वसाक्षात्काराय प्रणिधानप्रसक्तिं वक्तुं तद्दर्शनसाधनस्य प्रणिधानं साक्षात्कारहेतुरित्यत्र निदर्शनमाह—सङ्कीर्णाधिगमेति। यदुक्तं—नियमाद्दृष्टस्योपयोगाभावान्न नियमविधिरिति—तत्रोत्तरमाह—तदद्दृष्टवैगुण्ये चेति। एवं मनःप्रणिधानरूपसाधनान्तरप्राप्तौ नियमविधिरित्युक्तम्। इदानीं वेदान्तवाक्याभ्यासरूपसाधनान्तरप्राप्त्यापि तमाह—आवर्त्यमानादिति। अन्यत्र काव्यादावित्यर्थः। श्रवणदशायामभ्यासास्त्विष्ट एवेति केवलपदप्रयोगः। एवं प्रसक्तसाधनान्तरनिवृत्तिफलकत्वं नियमविधेरङ्गीकृत्योक्तम्। वस्तुतस्तु विरोधिप्रसक्तिरेव नियमविधावपेक्षिता, न तु साधनान्तरप्रसक्तिरिति पक्षान्तरमाह—प्रसक्तविधेयेति। प्रसक्तं यद्विधेयाविरोधि तन्मात्रनिवृत्तिफलत्वा-

---

[1] पाक्षिक्यां प्राप्तौ—ख. [2] तद्दृष्ट—घ.

रनात्मदर्शनप्राप्तौ तन्नियम इत्यन्ये। न चैवं जीवनविलोपप्रसङ्गः; विरोधित्वेन विशेषणात्। अविरोधिनो जीवनमात्रोपयोगिव्यवहारस्यानिवर्तनीयत्वात् ॥

श्रवणे परिसङ्ख्याविधित्वपक्षः

एतेन परिसङ्ख्यापि व्याख्याता। न च मुमुक्षावमुमुक्षौ वा नित्यवदुभयाप्राप्तिः, मोक्ष्यमाणस्य जिज्ञासोरर्थतत्त्वनिर्णयहेतुतया विचारस्य नित्यवत्प्राप्त्युपपत्तेः। विरक्तस्यापि स्वभावादेवानपेक्षितानात्मदर्शनस्य नित्यवत्प्रसजतो विचारविधिना परिसङ्ख्यानोपपत्तेश्च ॥

नियमपरिसङ्ख्ययोरभ्युपगमे प्रमाणदर्शनम्,
तयोर्विशेषोक्तिश्च

यथाहुराचार्याः—

"नियमः परिसङ्ख्या वा विध्यर्थस्य भवेद्यतः।
अनात्मादर्शनेनैव परात्मानमुपास्महे ॥" इति।

रत्नतूलिका

दित्यर्थः। अत्र निवर्त्ये विधेयफलसाधनत्वाभावो मात्रशब्दार्थः। अविरोधिन इति। न केवलमविरोधः, अपि त्वनुकूलत्वमिति भावः ॥

एतेनेति। प्रसक्तविरोधिमात्रनिवृत्तिफलकत्वाभ्युपगमेनेत्यर्थः। नन्वेवमपि नित्यवदुभयाप्राप्तिरेव, विरक्ते अनात्मदर्शनाप्राप्तेरित्यत आह—विरक्तस्यापीति। अपिशब्देन पुमर्थतया प्राप्तिवारणेऽपि स्वभावतः प्राप्तिरनिवार्येति सूचयति। विध्यर्थस्य सम्बन्धिनियमः अप्राप्तांशपरिपूरणम्, परिसङ्ख्या इतरनिवृत्तिर्वा यतो भवेदित्यर्थः।

आह च भगवान् भाष्यकारः—

"किमर्थानि तर्हि आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादीनि विधिच्छायापन्नानि वाक्यानि? स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः" इति। तदिदं भाष्यं नियमार्थं परिसङ्ख्यार्थं वा, स्वभाविकप्रवृत्तिनिवृत्तिफलस्य तुल्यत्वात्। नियमस्याप्यप्राप्तांशपरिपूरेणेनतरनिवृत्तिफलत्वात्। परिसङ्ख्यायां त्वितरनिवृत्तिराहत्यफलमिति विशेषः॥

## रत्नतूलिका

स्वाभाविकेति। पुरुषस्य स्वभावादागता या प्राप्तिः तद्विषयात्तस्य पुरुषस्य विमुखीकरणप्रयोजनानीत्यर्थः। नन्विदं भाष्यं परिसङ्ख्याविधित्वमेव प्रतिपादयति, इतरनिवृत्तिफलकत्वप्रतिपादनादित्यत आह—तदिदमिति। तत्र हेतुमाह—**स्वाभाविकेति**। स्वाभाविकी या प्रवृत्तिस्तन्निवृत्तिरूपफलस्य तुल्यत्वादित्यर्थः। नन्वितरनिवृत्तिफलत्वं परिसङ्ख्याया एव न नियमस्य; तस्याप्राप्तांशपरिपूरणफलत्वादित्यत आह—**नियमस्यापीति**। "व्रीहीनवहन्ति" इति विधिर्नावघातप्राप्त्यर्थः; व्रीहिषु कदाचिन्नखविदलनस्य कदाचिदवहननस्य च प्राप्तत्वात्। किं तु यस्मिन्पक्षे अवघातो न प्राप्तस्तत्रापि तस्य प्रापणार्थः। तथा च विधिना सर्वत्रावघातप्रापणेऽर्थान्नखविदलननिवृत्तिः फलमिति भावः। तर्हि परिसङ्ख्यातः को विशेष इत्यत आह—**परिसङ्ख्यायां त्विति**। अश्वरशनाग्रहणे गर्दभरशनाग्रहणे च मन्त्रस्य नित्यप्राप्तत्वान्नाप्राप्तांशपरिपूरणे विधिव्यापारः; अप्राप्तांशाभावात्। किं तु गर्दभरशनातो मन्त्रनिवृत्तावेवेति सा साक्षाद्विधेः फलम्। नियमे त्वर्थात्फलमिति विशेष इत्यर्थः॥

### श्रवणे नियमपरिसङ्ख्ययोर्मतभेदाः

केचित्तु द्वैतात्मविचार एव नियम्यते; व्रीहिसामान्योपाधाववहननवनखनिर्भेदनादिवत् ब्रह्मविवित्सोरात्मसामान्योपाधौ द्वैतात्मविचारस्यापि पक्षे प्राप्तिसम्भवात्। श्रोतव्य इति विधौ च प्रकरणगतैः "इदं सर्वं यदयमात्मा" इत्यादिभिरद्वैतात्मविचारनियमोपपत्तेरित्याहुः॥

अन्ये तु श्रोतव्य इति स्वतन्त्रविचारव्यावृत्त्या [1] गुर्वधीनो विचारो नियम्यते। न च "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः"—इत्यादिविहितगुरूपगमनस्य दृष्टसम्भवन्यायेन "तस्मै स विद्वानुपसन्नाय सम्यक् प्रोवाच तां तत्त्वतो ब्रह्म-

### रत्नतूलिका

**नियम्यत इति।** व्यावर्त्यत इत्यर्थः। तन्नियमाय तस्य प्राप्तिं दृष्टान्तप्रदर्शनपूर्वकमुपपादयति—व्रीहीति। यथा "व्रीहिभिर्यजेत" इति यागसाधनत्वेन श्रुतव्रीहिसामान्योपाधौ अवहननादेः पक्षतः प्राप्तिस्तथा "आत्मलाभान्न परं विद्यते" इत्यादौ लम्भनीयत्वेन श्रुते आत्मसामान्योपाधौ द्वैतात्मविचारोऽपि पक्षतः प्राप्नोतीत्यर्थः। अस्तु प्राप्तिः, तथापि कथमद्वैतविचारस्य नियमः; आत्मा श्रोतव्य इत्यत्रात्मशब्दस्य साधारणत्वादित्यत आह—**श्रोतव्य इतीति।** **इत्यादिभि**रित्यादिशब्देन "यत्र हि द्वैतमिव भवति" इत्यादिकं गृह्यते॥

ननु गुर्वधीनविचारनियमोऽन्यथासिद्ध इत्याशङ्क्य निषेधति—**न च तद्विज्ञानार्थमिति।** अस्तु गुरूपगमनं विहितम्, तथापि तस्य कथं विचारार्थतेत्यत आह—**दृष्टसम्भवेति।** एवं सत्यध्ययननियम-

---

[1] गुर्वधीनोऽपि—ख.

विद्याम् ।" इति वाक्यशेषेण चोपनिषदध्ययनविचारद्वारा ज्ञानार्थत्वावगमात्तत एव स्वतन्त्रविचारप्राप्तिरिति वाच्यम्; एवं सति "अष्टवर्षो ब्राह्मण उपगच्छेत्" इति गुरूपगमनविधेरेवोक्तन्यायेनाध्ययनद्वारा स्वाध्यायावाप्त्यर्थत्वावगमात्, तत एव लिखितपाठादिव्यावृत्तेरध्ययननियमवैयर्थ्यप्रसङ्गात् । यत्त्वध्ययनविध्यभावे गुरूपगमनविधिरेव नास्ति, तस्य तादर्थ्यादिति, तन्न; अध्ययनानधिकारेऽपि मूकादीनामुपनेयत्वस्योक्तत्वात् । वेदान्तेऽपि गुरूपगमनविधेर्विचारार्थतया तद्विध्यभावे तदभावस्य सुवचत्वाच्च । अपि च बोध्यभेदेन प्रतिशाखं पृथगेकार्थविधानसम्भवान्नान्येनान्यवैयर्थ्यम् । अन्यथा विनिगमकाभावादित्याहुः ॥

अपरे तु ब्रह्मसाक्षात्कारे मानान्तरव्यावृत्त्या वेदान्तनियम इत्याहुः । तथा च वार्तिकम्—

## रत्नतूलिका

विधिरपि न स्यात्; तस्याप्यन्यथासिद्धेरिति प्रतिबन्दीमालम्ब्य दूषयति—एवं सतीति । उक्तन्यायेन दृष्टसम्भवन्यायेनेत्यर्थः । तत्र प्रतिबन्दीविमोकमुक्तं दूषयितुमनुवदति—यत्त्विति । तथा चाङ्गिविध्यभावेऽङ्गविधिरेवानुपपन्नः, प्रयोजनाभावादिति भावः । शेष्यनुष्ठानेऽनधिकारिणामपि विधीयमानं न तच्छेषभूतम्, किं तु स्वतन्त्रपुरुषार्थ एवेत्यभिप्रेत्य दूषयति—तन्नेति । उक्तत्वादिति । उपनयनस्याध्ययनाङ्गत्वनिराकरणस्थल इति शेषः । किं चायमर्थोऽत्रत्यगुरूपगमनविधावपि समान इत्याह—वेदान्तेऽपीति । श्रवणविधावसाधारणं परिहारमाह—अपि चेति । अन्यथेति । बोध्यभेदेऽपि वैयर्थ्याङ्गीकारे गुरूपगमनविधेरेव श्रवणविधिना वैयर्थ्यं किं न स्यादित्यर्थः ॥

"सर्वमानप्रसक्तौ च सर्वमानफलाश्रयात् ।
श्रोतव्य इत्यतः प्राह वेदान्तावरुरुत्सया ॥" इति ।

नियमादृष्टं दृष्टफल एव ज्ञानस्वरूपे हेतुः । तस्य हि सर्वापेक्षा च, यज्ञादिश्रुतेः ॥

### श्रवणनियमादृष्टानुपपत्तिचोदनम्

यत्तु युक्तं "व्रीहीनवहन्ति" इत्यत्रावहन्तेस्तण्डुलस्वरूपे नियन्तुमशक्यत्वादाहत्य प्रकृतापूर्वांशसाधनत्वायोगाच्च [1]तद्द्वार-

### रत्नतूलिका

सर्वमानेति । सर्वेष्वपि मानेषु सत्तायाः प्रतीतेः ब्रह्मणः सर्वमानफलत्वेनाश्रयणम् , अतः सर्वमानप्रसक्तिरित्यर्थः । यदुक्तं नियमादृष्टस्योपयोगो नास्तीति तत्परिहरति—नियमादृष्टं चेति । ननु दृष्टफले ज्ञाने कथमदृष्टस्योपयोग इत्यत आह—तस्य हीति । दृष्ट-फलस्यापि प्रतिबन्धकदुरितनिवृत्त्या सर्वादृष्टसाध्यत्वस्य विधिबलेनोप-गन्तव्यत्वा[2]दिति भावः ॥

ननु श्रवणनियमादृष्टस्य ज्ञाने विनियोग इत्यसङ्गतम् ; तत्कल्पकाभावात् , युक्तं दर्शपूर्णमासप्रकरणश्रुतस्यावहननस्यापूर्वार्थत्वे सति साक्षात्तादर्थ्यासम्भवाद्दृष्टतण्डुलादिरूपे च तन्नियमानुपपत्तेरपूर्वार्थत्व-निर्वाहाय नियमादृष्टं कल्प्यत इति ; प्रकृते तु श्रवणस्यापूर्वार्थत्वा-नवगमात् दृष्टे ज्ञाने तन्नियमानुपपत्तेश्च न नियमादृष्टकल्पनमिति विधिरेव त्याज्य इति वैषम्यमुक्तं, तद्दूषयितुमनुवदति—यत्तु युक्तमिति । साधनत्वायोगादिति । "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्याधिकारवाक्ये येषां फलसम्बन्धः श्रुतस्तेषामेव तन्निर्वाहायापूर्वसाधन-

[1] तद्द्वारभूतं निय—ग. [2] दित्यर्थः—कुं.

भूतनियमादृष्टं कल्प्यत इति, न चैवमिह श्रवणनियमादृष्टस्य कल्पकमस्ति, यत्सर्वापेक्षानयेन ज्ञान विनियुज्येत, न च धनार्जने प्रतिग्रहादिनियमवदेष नियम इति युक्तम्, तन्नियमस्य प्राङ्मुखभोजननियमवत्पृथक्पुरुषार्थत्वात्। न हि धनार्थ एव प्रतिग्रहादिनियमः। तस्मात् दृष्टफलज्ञानार्थ एव श्रवणादि-नियमानुपपत्तिरिति ॥

## रत्नतूलिका

त्वम्, इतरेषां तु तदुपकारकत्वमेवेति भावः। न चैवमिति। केवल-दृष्टफल इवेत्यर्थः। ननु प्रतिग्रहादावपूर्वार्थत्वानवगमेऽपि नियमादृष्ट-कल्पनवदत्रापि भविष्यतीत्याशङ्क्य निषेधति—न च धनार्जन इति। यत्र कल्पितस्य नियमादृष्टस्य दृष्टाक्रियाफलादन्यत्र विनियोगः सम्भवति तत्रैव तत्कल्पनम्। सम्भवति चात्रार्जनक्रियाफलाद्धनादन्यत्र पुरुषार्थे नियमादृष्टोपयोग इति तत्कल्पनम्। श्रवणादौ तु विरक्तकर्तृके नियमा-दृष्टस्य स्वतन्त्राभ्युदयफलकल्पनानुपपत्तेर्दृष्टफले ज्ञान एवोपयोगो वाच्यः। स च न सम्भवतीति नादृष्टकल्पना घटत इति वैषम्यमिति परिहरति—तन्नियमस्येति। "प्राङ्मुखोऽन्नानि भुञ्जीत" इति विहितप्राङ्मुखत्वनियमादृष्टस्य यथा न भोजने विनियोगः, किं तु पृथक्पुरुषार्थे, तद्वदित्यर्थः। तस्मादिति। ज्ञानं च तदर्थश्च ज्ञानार्थं, एकवद्भावः। दृष्टफलं यज्ज्ञानार्थं तत्रेत्यर्थः ॥

अवघातादिष्वपि विधित्वमेवादृष्टकल्पनायां मूलम्; न तु तस्य परमापूर्वार्थत्वमपि; अवहन्तीत्यादेर्विधित्वज्ञानाभावे प्रकरणेऽविहिते अवघातेऽपूर्वार्थत्वस्यावगन्तुमशक्यत्वात्; ततश्च विधिबलान्नियमादृष्टे कल्पिते तस्य चोपयोगाकाङ्क्षायां यत्रापूर्वान्तरमस्ति, यथावघाता-दावाग्नेयाद्यपूर्वं, तत्र तस्योपयोगः, यत्र त्वपूर्वान्तरं नास्ति, फल च

### व्रीहिन्यायेनैव श्रवणनियमापूर्वोपपादनम्

अत्रोच्यते—"व्रीहीनवहन्ति" इत्यत्रापि दृष्टफलांशे नियमबाधादपूर्वांशस्य तदसाध्यत्वाद्विधिरेव हीयताम्। मा भूद्वाक्यानर्थक्यमिति विधित्वमुपेत्य तदुपपत्तये नियमादृष्टं कल्प्यत इति चेत्, हन्तैवं प्रकृतेऽपि श्रोतव्य इति विधिस्वरसत्वे सति तदुपपत्तये नियमादृष्टं कल्प्यताम्। किंतु तदन्यत्र क्रत्वपूर्वसिध्द्यर्थम्, प्रकृते तदभावात्पुरुषार्थमेवावतिष्ठते प्रतिग्रहादिनियमादृष्टवदेव। तत्र च धनसन्यायेनापि सम्भवीति पुरुषार्थोऽपरः कल्प्यते। ब्रह्मविज्ञानं तु परमपुरुषार्थो यज्ञादिश्रुत्या,

"सर्वं कर्माखिलं पार्थ! ज्ञाने परिसमाप्यते।"

इत्यादिस्मृत्या च सार्वादृष्टसाध्यं गम्यत इति नातिरिक्तकल्पना-

### रत्नतूलिका

नियमादृष्टं विनापि सम्भवति, यथा द्रव्यार्जनादौ, तत्र तस्य पुरुषार्थान्तरे उपयोगः; यत्र पुनर्दृष्टं फलं फलान्तरं च कल्पयितुमशक्यं तत्र कथञ्चिद्दृष्ट एवोपयोगः; तथा च प्रकृते न विरोध इति परिहरति—अत्रोच्यत इति। हीयतामिति। नत्वपूर्वार्थस्वनिर्वाहाय द्वारकल्पनामिति भावः। तत्र नियमादृष्टकल्पनमाशङ्कते—मा भूदिति। तत् नियमादृष्टम्। अन्यत्र—अवघातादौ। तदभावादिति। कस्यचित्क्रतोः प्रकरणे विधानाभावादिति भावः। श्रवणादौ प्रतिग्रहादौ च नियमादृष्टस्य पुरुषार्थत्वाविशेषेऽपि पुरुषार्थान्तरकल्पनाऽकल्पनाभ्यां विशेषमाह—तत्र चेति। यज्ञादिश्रुत्येति। तस्या विहितकर्ममात्रोपलक्षणार्थत्वादिति भावः॥

पेक्ष्यते । साध्यविशेषानपेक्षमेव वाक्यावैयर्थ्याय क्लृप्तस्य श्रवणनियमादृष्टस्य कियतोऽपि दुरितस्य निवृत्त्या विज्ञाने सामर्थ्योपपत्तेः ॥

### श्रवणनियमापूर्वस्यैव ज्ञानार्थताकल्पः

अथ वा अत एव विधेर्ज्ञानस्य तददृष्टसाध्यत्वमधिगम्यताम्, वाक्यार्थवत्त्वाय विधित्वे कल्प्यमानादृष्टस्यावहन्त्यादाविव साध्यान्तराभावात् । न ह्यन्यथा धनमर्जयन्निवाधीतमात्रवेदान्तादात्मज्ञानमर्जयन्, प्रत्यवैति ; येन तेन तत्परिहारः साध्येत । न च स्वर्गः कल्प्यः ; गौरवात्, ज्ञानेन सर्वभेदोपमर्दाच्च । न चातिविशुद्धसत्त्वस्य वाक्यश्रवणमात्राधेयज्ञाने तददृष्टव्यभिचारो दोषाय ; अन्यलभ्ये पश्वादौ चित्रादेरपि

### रत्नतूलिका

यज्ञादिश्रुत्या "सर्वं कर्म" इति स्मृत्या च सर्वादृष्टसाध्यत्वावगमादत्रत्यनियमादृष्टस्यापि ज्ञानार्थत्वमित्युक्तम् । इदानीं श्रवणविधेरेव तत्साध्यत्वावगम इति पक्षान्तरमाह—अथ वेति । ननु यज्ञादिश्रुताविवाऽऽहत्य ज्ञानस्य [1]साध्यत्वानवगमात् कथमेतद्विधिबलान्नियमादृष्ट[2]साध्यत्वाधिगम इत्यतस्तदुपपादयति—वाक्यार्थवत्त्वायेति । गौरवादिति । स्वर्गस्वरूपं कल्पनीयं, तस्य साध्यत्वं चेति गौरवमिति भावः । तथा चावहन्त्यादाविव क्रत्वर्थत्वाभावाद्धनार्जनादाविव प्रत्यवायपरिहारार्थत्वाभावाद्विश्वजिदादाविव स्वर्गार्थत्वाभावाच्च परिशेषप्रमाणसहकृतश्रवणविधेरेव ज्ञाने नियमादृष्टसाध्यत्वं बोधयतीति तात्पर्यम् । चित्रादेरपीति । यदि पशुसाध्यसाधनभावबोधक-

---

[1] साध्यत्वावगमात्—च. [2] साध्यत्वावगमः—कुं.

व्यभिचारात्। तन्निवर्तनीयदुरितनिवृत्तिद्वारविशेषोपपत्तेश्चेति॥

श्रवणविधेः काम्यविधित्वाक्षेपः

अथापि स्यात्—न तावदयं काम्यविधिः; कमिपदाद्युपबन्धेन साध्यभावापन्नस्य विध्युद्देशे फलस्याश्रवणात्। न च रात्रिसत्रन्यायेनार्थवादिकममृतत्वं फलतया विपरिणंस्यते; तस्य वैधफलत्वानभ्युपगमात्। इष्यमाणज्ञानस्य वैधफलत्वे तदुपायावृत्तिन्यायविरोधात्॥

रत्नतूलिका

शास्त्रबलाज्जन्मान्तरे तदनुष्ठानमस्तीति निश्चीयते तदा प्रकृतेऽपि तुल्यमिति भावः। तन्निवर्तनीयेति। तन्निवर्तनीयं यद्दुरितं तन्निवृत्तिद्वारा तस्य हेतुत्वं, तथा तादृशद्वाराभावस्थले तदनपेक्षायामपि न व्यभिचार इति भावः॥

प्रकारान्तरेण विधित्वमाक्षिपति—अथापि स्यादिति। किं काम्यविधिः? उत नैमित्तिकविधिः? अथ वा नित्यविधिरिति विकल्प्याद्यं दूषयति—न तावदिति। अयमिति। अश्रुतफलक इत्यर्थः। ननु "द्रष्टव्यः", "एतावदरे खल्वमृतत्वम्" इति श्रुतं दर्शनममृतत्वं वा फलं भविष्यतीत्यत आह—कमिपदेति। आदिपदेन तादर्थ्यचतुर्थ्यादिसङ्ग्रहः। "औदुम्बरो यूपो भवति......ऊर्जोऽवरुध्यै" इत्यादौ चतुर्थ्या साध्यत्वप्रतीतावपि तस्य काम्यत्वनिरासाय विध्युद्देश इति विशेषणम्। तत्र विधेरभावादिति भावः। वैधेति। तथासत्यपरोक्षसाध्यत्वविरोध इति भावः। तदुपायेति। "आवृत्तिरसकृदुपदेशात्" इत्यधिकरणे ज्ञानोपायावृत्तिः प्रतिपाद्यते। तस्य वैधफलत्वे उपायस्य सकृदनुष्ठानेऽपि विधिचारितार्थ्यात्तद्विरोधः स्यादिति भावः॥

### श्रवणविधेर्नैमित्तिकविधित्वाक्षेपः

नापि नैमित्तिकः; उपरागगृहदाहादेरिव निमित्तस्य कस्यचिदनुपादानात् ॥

### श्रवणविधेर्नित्यविधित्वाक्षेपः

नापि नित्यविधिः; "यावज्जीवं" "वसन्ते वसन्ते" इत्यादिवन्नियतनिमित्तवीप्सादेरश्रवणात्; अकरणे प्रत्यवायाभावाच्च ॥

ननु "अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्"

### रत्नतूलिका

द्वितीयं दूषयति—नापीति। "उपरागे स्नायात्" इति स्नाने उपरागस्येव, "यस्य गृहान्दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्" इति क्षामवत्यां गृहदाहस्येव च [1]निमित्तत्वस्याश्रवणादित्यर्थः ॥

तृतीयं दूषयति—नापि नित्यविधिरिति। "यावज्जीवमग्निहोत्रं जुहोति" इत्यत्र जीवनं नियतनिमित्तम्। अत्र निमित्ते नियतत्वविशेषणं नैमित्तिकव्यावृत्त्यर्थम्। तथा च नियतनिमित्तत्वानियतनिमित्तत्वाभ्यां नित्यनैमित्तिकयोर्भेद इति भावः। प्रायश्चित्तस्य तु स्वनिर्घात्यनिमित्तकत्वं विशेष इति बोध्यम्। नन्वेवमध्ययनादेर्नित्यत्वं न स्यादित्यत आह—अकरण इति। तत्र "अश्रोत्रिया अननुवाक्याः" इत्यादिना अकरणे प्रत्यवायः श्रूयत इति भावः ॥

अत्राप्यकरणे प्रत्यवायश्रवणमस्तीति शङ्कते—नन्विति।

---

[1] निमित्तस्या—च. कुं.

"नित्यं कर्म परित्यज्य वेदान्तश्रवणं विना ।
वर्तमानस्तु सन्न्यासी पतत्येव न संशयः ॥"

इत्यादौ तदकरणे दोषो दृश्यत इति चेत्,

अत्राहुः—"त्रिशीर्षाणं त्वाष्ट्रमहनम्" इत्यादीनि साहसान्यनुक्रम्य "तस्य मे तत्र न लोम च मीयते, स यो विजानीयान्नास्य केनचन कर्मणा लोको मीयते" इत्यादिज्ञानप्रशंसार्थवादसमभिव्याहारेण तदेकार्थस्य "अरुन्मुखान्" इत्यादेः श्रवणाकरणप्रत्यवायपरत्वमयुक्तम् । अन्यथाऽऽतुरसन्न्यासविधेरननुष्ठानप्रसङ्गात्, तस्य श्रवणासम्भवात् ॥

श्रवणविधेः सन्न्यासिषु नित्यत्वाभ्युपगमे दूषणान्तरम्

अपि च—

"मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् ।
बाहुजातोरुजातानां नायं धर्मो विधीयते ॥"

## रत्नतूलिका

प्रायपाठाज्ज्ञानप्रशंसार्थत्वम्, न तु श्रवणाकरणे प्रत्यवायप्रतिपादनपरत्वमिति परिहरति—अत्राहुरिति । लोम च न मीयते—न हिंस्यत इत्यर्थः । अन्यथेति । प्रत्यवायपरत्व इत्यर्थः । श्रवणासम्भवादिति । न हि प्रत्यवायहेतुं कश्चिदनुतिष्ठतीति भावः ॥

सन्न्यासिनः सतस्तदकरणे प्रत्यवायश्रवणात्तस्य नित्यत्वमित्यभ्युपगमे येषां सन्न्यासे अनधिकारस्तेषां सत्यामपि मुमुक्षायां नित्यतया श्रवणानुष्ठानं न स्यात्, ज्ञानस्यान्यथापि सम्भवादिति दूषणान्तरमाह—अपि चेति । विष्णोः परमात्मनो लिङ्गं—ज्ञानसाधनं सन्न्यासः, तद्धारणमनुष्ठानमित्यर्थः । मन्वानानां मत इत्युक्त्या "जायमानो

इति स्मरणात्, "ब्राह्मणा व्युत्थायाथ भिक्षाचर्यं चरन्ति", "ब्राह्मणः प्रव्रजेद्गृहात्" इत्यादौ ब्राह्मणग्रहणं विवक्षितार्थं मन्वानानां मते क्षत्रियादेरसन्न्यासात्, तस्य मुमुक्षोः श्रवणविधिरनित्यः स्यात्। सन्न्यासिन एव तदकरणे दोषाम्नानात् ॥

### श्रवणविधेर्नित्यकाम्यत्वाभ्युपगमे दोषः

न च स एव विधिः काम्यो नित्यश्च; संयोगपृथक्त्वकल्पनायां च गौरवात् ॥

### रत्नतूलिका

वै ब्राह्मणः" इत्यत्रेव तद्ग्रहणं त्रैवर्णिकमात्रोपलक्षणम्। अत एव पाण्डुयुधिष्ठिरादीनां क्षत्रियाणामपि सन्न्यासप्रसक्तिर्भारते दृश्यत इति मतान्तरं द्योत्यते। अनित्यः स्यादिति। तथा च मुमुक्षुमधिकारिणं प्रत्यपि तस्यानित्यत्वे नित्यविधित्व[1]मनुपपन्नं भवतीति भावः। ननु श्रवणनियमादृष्टं विना ज्ञानमेव नोत्पद्यत इत्युक्तमित्यत आह—सन्न्यासिन एवेति। तथा च यस्याकरणे प्रत्यवायः श्रूयते तस्यैव श्रवणनियमादृष्टेन विना प्रत्यवायमलीमसचित्तस्य [2]ज्ञानानुपपत्तिरिति कल्प्यत इति भावः ॥

ननु सन्न्यासिनः प्रति श्रवणविधिर्नित्यः, इतरान् मुमुक्षून् प्रति काम्यश्चास्त्वित्यत आह—न च स एवेति। सकृच्छ्रुतस्यार्थद्वयकल्पनायोगादिति भावः। तर्हि संयोगपृथक्त्वमास्त्वित्यत आह—संयोगेति। वाक्यद्वयकल्पनाददृष्टद्वयकल्पनाच्चेति भावः ॥

---

[1] मनुपपन्नम्, तस्य मुक्तिहेतुभूतज्ञानं तु प्रकारान्तरेणापि सम्भवतीति—कुं.

[2] ज्ञानानुत्पत्तिरिति—घ. च. कुं.

### सन्न्यासस्याधिकारिविशेषणत्वानुपपत्तिः

न च सन्न्यासिन एव श्रवणाधिकारः ; "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इति सन्न्यासस्य ज्ञानार्थत्वाव-गमात्, तस्य चातुरसन्न्यासविधिसामर्थ्येन विरोधिदुरितनिवृत्त्य-दृष्टद्वारा जन्मान्तरेऽपि सम्भवतो विचारेण सहाननुष्ठेयत्वात् ॥

### शान्तादिवाक्यतोऽपि सन्न्यासस्याधिकारिविशेषणत्वासम्भवः

"शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत्" इत्यत्रोपरतपदेन सन्न्यासाभिधा-

### रत्नतूलिका

ननु सन्न्यासोऽधिकारिविशेषणम्, तथा च क्षत्रियादेर्मुमुक्षुत्वेऽप्यनधिकारान्न तं प्रत्यनित्यत्वं विधेर्दोष इत्याशङ्क्य निषेधति—न च **सन्न्यासिन इति । ज्ञानार्थत्वेति ।** लोक्यत इति लोक इति व्युत्पत्त्या ज्ञानविषयमात्मानमिच्छन्तः प्रव्रजन्तीत्युक्तेरिति भावः । अस्तु श्रवणविधावधिकारिविशेषणतया तद्द्वारा ज्ञानार्थत्वमित्यत आह— **तस्य चेति । विचारेणेति ।** विधिप्रतिपत्तिदशायामवश्यसत एवाधिकारिविशेषणत्वम् ; न च सन्न्यासस्तथा ; तस्य जन्मान्तरसाधारणस्यैव विरोधिदुरितनिवर्तकत्वादिति भावः ॥

ननु "शान्तो दान्तः" इत्यादिवाक्ये सन्न्यासाधिकारक-श्रवणविधानात्तस्य श्रवणेन सहानुष्ठानं वाच्यम् ; आतुरसन्न्यासस्तु न श्रवणार्थः, किं तु ब्रह्मलोकार्थो भविष्यतीत्यत आह—**शान्तो दान्त इति ।** सन्न्यासाभिधानेऽपीत्युक्तिरुपरतपदेनेष्टविषयमनोराज्यनिवृत्त उच्यते, न तु परिव्राडिति पक्षमभिप्रेत्य । युक्तमित्यनन्तरं येन सन्न्यासिन एवाधिकारः स्यादिति शेषः । तर्हि श्रोतव्य इति

नेऽपि न तावच्छान्त्याद्यधिकारविचारकविधानं युक्तम् । अर्थवादकल्पनीयाधिकारस्य श्रोतव्यादिविधेरेतदधिकारविधित्वायोगेन मुमुक्ष्वधिकारकविचारान्तरविधिकल्पनापातात् ॥

### श्रवणविधौ संयोगभेदानुपपत्तिः

न च स एव विचारः संयोगभेदेन विधीयते, न विचारा-

### रत्नतूलिका

वाक्येऽपि श्रवणान्तरं मुमुक्ष्वधिकारिकं विधीयत इति वाच्यम्, शान्तादिवाक्यविहितश्रवणानुवादेन तत्र विधेयान्तराभावात्, ततश्च यथा "आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः" इत्यनारभ्यश्रुतस्याग्नेययागस्य रुक्काममधिकारिणमुद्दिश्य विधीयमानस्य दर्शपूर्णमासस्थाग्नेययागाद्भेदः, तस्यासन्निधानात्। तथात्रापि मुमुक्षुमुद्दिश्य विधीयमानं श्रवणान्तरं स्यादित्यभिप्रेत्याह—अर्थवादेति। एतदधिकारेति। शान्ताद्यधिकारविधित्वायोगेनेत्यर्थः। तदयोगार्थमेवार्थवादेत्याद्युक्तम्। श्रोतव्य इत्यत्राधिकार्यपेक्षायां समभिव्याहृतार्थवादकल्पित एवाधिकारी युक्तो न तु वाक्यान्तरोपात्तः शान्तादिः; तस्यानाकाङ्क्षितत्वादसन्निहितत्वाच्चेति भावः। तथा च क्षत्रियादिमुमुक्षूणामनित्यः श्रवणविधिः स्यादिति न विधिरिति सिद्धम्॥

ननु यथाग्निहोत्रादि यावज्जीवादिविधिविहितमेव स्वर्गकामवाक्ये संयोगभेदेन विधीयते तद्वदत्रापि स्यादित्याशङ्क्य निषेधति—न च स एवेति। युक्तं तत्र "अग्निहोत्रं जुहोति" इत्युत्पन्नस्याधिकारविध्यपेक्षायां वाक्यद्वयेनाप्यधिकारिसमर्पणमिति; न चेह तथा स्वतन्त्रोत्पत्तिवाक्यमस्ति, अतोऽन्याधिकारितया ज्ञातेऽन्यस्याधिकारितया निवेशा-

न्तरमिति वाच्यम्; [1]निबद्धाधिकारकतया स्वतन्त्रोत्पत्तिशून्यत्वात्। अपि चैवं नित्ये विचारविधौ यतेर्ज्ञानानन्तरमपि यावज्जीवानुष्ठेयो विचारः स्यादजिज्ञासोरपि च। अन्यथा तस्य नित्यत्वायोगात्। न चैवं युक्तम्। "तद्विजिज्ञासस्व", "अथातो ब्रह्मजिज्ञासा" इति विचारे विधेये जिज्ञासापदोपादानानर्थक्यप्रसङ्गात्। तस्मात् "अरुन्मुखान्" इति विद्याप्रशंसार्थवाद एव 'इत्थं महीयसी विद्या, यस्यां यतिद्रोहोऽप्यकिञ्चित्करः' इति ॥

अरुन्मुखादिवाक्यस्य यतेरुपनिषदध्ययनाकरणे दोषपरत्वाभिप्रायः

अस्तु वेदं सन्नयासिनो वेदान्ताध्ययनाकरणप्रत्यवायपरम्; रौतेः शब्दकर्मणः क्विपि रौति यथार्थं ब्रह्मेति रुत्–वेदान्तो येषां

रत्नतूलिका

सम्भवाद्भेदः स्यादिति वैषम्यमाह—निबद्धेति। यतेरेवाधिकार इत्यभ्युपगमेन यतेरित्युक्तम्। जिज्ञासापदोपादानेति। तदुपादानं चावयवार्थविवक्षया ज्ञानस्य फलत्वसूचनाय। तथा च यस्य फलं सिद्धम्, यस्य च फलेच्छा नास्ति, तयोरप्यनुष्ठाने ज्ञानं न फलमिति सन्नन्तपदोपादानं व्यर्थमित्यर्थः ॥

एवमरुन्मुखानित्यादिकं विद्याप्रशंसार्थम्। न विचाराकरणे प्रत्यवायप्रतिपादनार्थम्। अतो न श्रवणविधिर्नित्य इत्युक्तम्। इदानीमुपनिषदध्ययनाकरणे प्रत्यवायप्रतिपादनपरम्, न श्रवणाकरण इत्यभिप्रेत्य तन्निराचष्ट—अस्तु वेदमिति। उक्तेऽर्थे श्रुतिं योजयति—रौतेरिति।

---

[1] निबद्धाधिकारतया–ग. अनुबन्धाधिकारतया–ङ.

मुखे नास्तीति तदर्थोपपत्तेः। यतेश्च "सर्वेषु वेदेष्वारणमावर्तये-दुपनिषदमावर्तयेत्" इत्यादिवेदान्ताध्ययनविधानात् ॥

अरुन्मुखादिवाक्यस्यान्यथानयनम्

अथ वा अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्, अतो वेदान्तानधिकारिणा न प्रव्रजितव्यमित्येवंपरमस्तु ॥

अरुन्मुखादिवाक्यस्यापरथोपपादनम्

यद्वा "प्रक्रमात्तु नियम्येत" इति न्यायात्काम्यस्यापि वैधस्य सन्न्यासदिन एवारब्धश्रवणस्य नित्यवद्भावात् तदकरणे

रत्नतूलिका

ननु विहिताकरणं प्रत्यवायाय भवति; न च वेदान्तमात्राध्ययनं विहितम्, येन तदकरणे प्रत्यवायबोधनेन तदेकवाक्यं स्यादित्याशङ्क्योक्तं स्मारयति—यतेश्चेति ॥

एवमुपनिषदध्ययनविधिशेषतया व्याख्यायाधिकारपरिच्छेदेन सन्न्यासविधिशेषतया व्याचष्टे—अथ वेति ॥

अकरणे प्रत्यवायश्रवणेन न नित्यत्वसिद्धिः; तस्यारब्धकाम्य-साधारणत्वादिति पक्षान्तरमाह—यद्वेति। षष्ठे चिन्तितम्—काम्यं कर्म कामार्थेन प्रक्रान्तं वीतायां फलेच्छायां सिद्धे वा फले किं नियोगतः समापनीयं नेति संशये, फलकाममुद्दिश्य विहितस्य कामनायां निवृत्तायामशास्त्रार्थत्वात्तदसमापनेऽप्यनृतदोषाभावान्न समापनीयमिति पूर्वपक्षे, असमापने शिष्टविगर्हणात् "देवताभ्यो वा एष आवृश्चयते, यो यक्ष्य इत्युक्त्वा न यजते" इति निन्दादर्शनात्प्रायश्चित्त-विधानाच्चानृतत्वमध्यवसीयते! अतः काम्यमारब्धं नित्यवत्समाप-नीयमिति सिद्धान्तितं "प्रक्रमात्तु नियम्येत" इति, तन्न्यायादि-त्यर्थः। सन्न्यासदिन एवेति। तस्य श्रवणाङ्गत्वादङ्गानुष्ठाने प्रधानमुपक्रान्तमेव, अग्नयन्वाधानानुष्ठाने दर्शपूर्णमासोपक्रमवदिति

प्रत्यवायपरमस्तु। एतेन "नित्यं कर्म परित्यज्य" इत्यपि व्याख्यातम्। तस्मान्न श्रवणविधिरिति ॥

### श्रवणेऽमृतत्वफलेन काम्यविधिसमर्थनम्

अत्राभिधीयते—काम्यविधिरेवायं स्यात्; "एतावदरे खल्वमृतत्वम्" इत्याद्यार्थवादिकफलकल्पनात्, "फलमात्रेयो निर्देशात्" इति न्यायात्। तत्र च ज्ञानद्वारा अदृष्टोपयोगो व्याख्यातः ॥

### साक्षात्कारफलमादाय श्रवणे काम्यविध्युक्तिः

अथ वा न तावद्द्रष्टव्य इति दर्शनं विधीयते; अपुंस्तन्त्रत्वात्। ननु "पत्न्यवेक्षते",

"अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः।
दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत नित्यशः ॥",

"न नग्नां स्त्रियमीक्षेत" इत्यादिज्ञानविधिनिषेधा दृश्यन्ते,

### रत्नतूलिका

भावः। तस्मात्सर्वविशेषनिषेधे सामान्यनिषेधः फलितः, निर्विशेषसामान्यायोगादित्युपसंहरति—तस्मादिति ॥

आर्थवादिकफलकरणं जैमिनिना चतुर्थेऽभिहितमिति दर्शयति—फलमात्रेय इति। "ज्योतिर्गौरायुः" इत्युत्पन्नानां यागानां प्रतिष्ठैव फलमित्यात्रेयो मन्यते। तस्यैव वाक्यशेषे स्तुत्यर्थतया वा निर्देशात्। अश्रुतस्वर्गस्वरूपस्य तत्फलत्वस्य च कल्पनापेक्षया श्रुतस्यैव फलत्वेन विपरिणामे लाघवादिति सूत्रार्थः। नैयोगिकफलत्वे मोक्षस्यानित्यत्वं स्यादिति यदुक्तं तत्रोत्तरमाह—तत्र चेति। ततश्चाहत्यादृष्टद्वारा विहितक्रियासाध्यत्वाभावान्नानित्यत्वमिति भावः ॥

एवममृतत्वफलमादाय काम्यत्वमुक्तम्। इदानीं साक्षात्कारलक्षणफलमादायापि तदाह—अथ वेति। दृश्यन्त इति। तथा च

सत्यं दृश्यन्ते; किं तु मा भूदशक्यार्थविधानादप्रामाण्यमिति तदुपायविषया व्यवस्थाप्यन्ते। न च ज्ञानमेवोपायमुपनिबध्य कार्यतया बोध्येत, केवलमिष्टसाधनतया वेति वाच्यम्; तदुपायप्रवृत्तेः श्रोतव्य इत्यादिनैव सिद्धौ तत्प्रयोजनाभावात्। तस्मादपेक्षितफलपरत्वेऽर्थवत्त्वाद्द्रष्टव्य इति स्ववाक्यनिर्दिष्टं विज्ञानमेव फलं कल्प्यते। कमिपदाद्यश्रवणात् द्रष्टव्य इति साध्यरूपासमर्पणेऽपि विधितः साधनावगमे योग्यसमाभि-

## रत्नतूलिका

दृष्टस्य तत्र योपपत्तिः; सैवात्रापीति भावः। तत्र विधिनिषेधत्वव्यतिरेकेण प्रकारान्तराभावाल्लक्षणया उपायविषया व्यवस्थाप्यन्ते, न चात्र तथागतिकत्वम्, फलपरत्वेनापि लक्षणां विनोपपत्तेरिति परिहरति—सत्यमिति। ननु "श्रोतव्यो मन्तव्यः" इति विधिप्रायपाठादत्रापि विधिरस्तु, न लक्षणापत्तिः, यथा उपायं यागमुपनिबध्यापूर्वं कार्यतया बोध्यते, तस्य स्वरूपेण कृत्यनर्हत्वात्, तथात्रापीत्याशङ्क्य निषेधति—न च ज्ञानमेवेति। केवलमिष्टेति। तत्रोपायोपनिबन्धनस्यानपेक्षितत्वादिति भावः। एवं ज्ञाने कार्यत्वादिबोधनं न तत्र प्रवृत्त्यर्थम्, ज्ञानस्य तदयोग्यत्वात्, किं तु तदुपाये, स च श्रवणादिरूपः, तत्र च प्रवृत्तिः श्रोतव्य इत्यादिनैव सिद्धेति न विधेः सप्रयोजनत्वमिति दूषयति—तदुपायप्रवृत्तेरिति। यदर्थं द्रष्टव्य इत्यत्र विधित्वं निराकृतं तद्दर्शयति—तस्मादिति। अपेक्षितानपेक्षितयोरपेक्षितस्य समर्पणं ज्याय इति न्यायान्तरं सूचयितुमपेक्षितत्वविशेषणम्। स्ववाक्यनिर्दिष्टेत्यनेनामृतत्वापेक्षया वैलक्षण्यं दर्शने द्योतयति। यदुक्तं कमिपदाद्यश्रवणान्न दर्शनस्य साध्यत्वप्रतीतिरिति तत्रोत्तरमाह—कमिपदेति। योग्यता आसत्तिराकाङ्क्षा चेति त्रयमन्वयबोधे हेतुः, तत्रयं द्रष्टव्य इत्यत्रास्तीत्याह—योग्येति॥

व्याहारेणैवाकाङ्क्षितफलपरत्वोपपत्तेः। ग्रामो गन्तव्योऽश्वमानयेत्यादौ साध्यसाधनभावावगमस्य सर्वजनीनत्वात् ॥

समभिव्याहृतफलकल्पनेऽनिष्टशङ्कापरिहारः

न चैवं विधिवन्निगदनयविरोधः; तत्र विधिविभक्त्यभावेनोदुम्बरताया हितसाधनतानवगमे पशूदुम्बरतासमभिव्याहारमात्रेण फलसाधनभावासिद्ध्या "पशूनाप्नोति" इत्यफलपरत्वव्यवस्थापनात् ॥

रत्नतूलिका

नन्वेवं समभिव्याहारेण फलत्वकल्पने "विधिर्वा स्यादपूर्वत्वात्" इत्यधिकरणविरोधः, तत्र "औदुम्बरो यूपो भवति" इति श्रुताया उदुम्बरतायाः "पशूनाप्नोति" इति श्रुताः पशवः फलं, समभिव्याहारादिति पूर्वपक्षं कृत्वा तथा सति ततोऽपि सन्निहितत्वादुदुम्बरतैव स्वभावनायाः फलं स्यान्न तु पशवः, अतोऽर्थवाद इति सिद्धान्तितम्. तद्विरोधः स्यादित्याशङ्क्य निषेधति—न चैवमिति। विधिविभक्तिसत्त्वासत्त्वाभ्यां वैषम्यमाह—तत्रेति। कथं तदभावमात्रेण पशूनां फलत्वासिद्धिरित्यतस्तदुपपादयति—उदुम्बरताया इति। विधिना इष्टसाधनत्वे बोधिते किं तदिष्टमित्यपेक्षायामतिसन्निहितमप्युदुम्बरत्वमपुरुषार्थत्वादुल्लङ्घ्य पशूनेव भावनाफलत्वेन स्वीकुर्यात्, नत्वेवम्; प्रकृते तु श्रोतव्य इति विधिना श्रवणकरणिकाया भावनायाः समीहितभाव्यकत्वावगमात् योग्यस्य सन्निहितस्य [1]दर्शनस्य फलत्वसिद्धिरिति वैषम्यमित्यर्थः ॥

---

1 दर्शनफलत्व—घ.

दर्शनस्य श्रवणफलत्वे परकीयशङ्कानुवादः

यत्तु न द्रष्टव्य इति फलदशाभिप्रायम्; "येनाहं नामृता स्याम्", "एतावदरे खल्वमृतत्वम्" इत्यर्थवादोपहृतफलत्वात्; किं तु निदिध्यासितव्य इति विधित्सितोपायदशाभिप्रायम्; अपरोक्षदशापन्नस्योपासनस्य कर्माविद्याकृत[1]प्रकृतिबन्धनिवृत्तौ निरतिशयविकासिनित्यविज्ञानेन ब्रह्मानन्दानुभवलक्षणमोक्षफलत्वोपगमात्। "स्मृतिप्रतिलम्भे सर्वग्रन्थीनां

रत्नतूलिका

ननु द्रष्टव्य इति न फलपरम्; किं तूपायस्यैव दर्शनसमानाकारतालक्षणावस्थान्तरपरम्, अर्थवादे विधित्सितस्य फलनिर्देशात्, एतस्यापि फलत्वे फलस्य फलान्तरानन्वयादिति यत्परोक्तं तद्दूषयितुमनुवदति—यत्त्विति। ननु तर्हि द्रष्टव्य इति केवलमर्थवादः स्यात्, उक्तविधया अपुरुषतन्त्रस्य दर्शनस्य विधेयत्वायोगादिति शङ्कते—किं त्विति। परिहरति—निदिध्यासितव्य इतीति। विधित्सितो य उपायस्तस्यावस्थान्तराभिप्रायमित्यर्थः। तस्योपायदशात्वे मानमाह—अपरोक्षेति। निदिध्यासितव्य इति विधित्सितस्यैवावस्थान्तरमित्यत्र मानमाह—स्मृतिप्रतिलम्भ इति। स्मृतिप्रतिलम्भ इति वाक्ये स्मृतिरूपध्यानस्य प्रकृतिसम्बन्धनिवृत्तिहेतुत्वं प्रतीयते, "भिद्यते हृदयग्रन्थिः" इति वाक्ये तस्यैव दर्शनसमानाकारतापत्त्या तद्धेतुत्वम्। ततश्चास्यापि वाक्यस्य "द्रष्टव्यो निदिध्यासितव्यः" इति निर्देशेन तदैकार्थ्यात्तत्रोक्तं दर्शनरूपत्वमत्रापि वक्तव्यतयापेक्षितमिति तदुपसंहार इत्यर्थः। ननु तयोर्वाक्ययोर्नैका विद्या विधीयते; भिन्न-

---

[1] प्रकृतिप्रतिबन्धनि—ग.

विप्रमोक्षः", "भिद्यते हृदयग्रन्थिः . . . . तस्मिन् दृष्टे परावरे" इत्यैकार्थ्येन रूपविशेषोपसंहारात्। अन्यथा साधनभेदे सत्यन्याय्यविकल्पापत्तेः, समुच्चये सापेक्षत्वकल्पनापत्तेः, तदनुपपत्तेश्च, ध्यानवद्दर्शने दर्शनस्यासाधनत्वात्। मोक्षे च ध्यानस्याव्यव-

रत्नतूलिका

प्रकरणस्थयोर्ध्रुवानुस्मृतिदर्शनयोर्दहरशाण्डिल्यादिविद्ययोरिव निरपेक्षसाधनत्वप्रतीतेः; अतो नात्र तदनुसारेण विशेषोपसंहार इत्यत आह—अन्यथेति। उभयोर्निरपेक्षसाधनत्वे विकल्पः समुच्चयो वा स्यात्। तत्राद्यमयुक्तमित्याह—अन्याय्येति। तत्त्वं च प्रागेव दर्शितमिति भावः। द्वितीयं दूषयति—समुच्चय इति। तथा च निरपेक्षसाधनत्वबोधकश्रुतिविरोध इति भावः। ध्यानदर्शनयोः समुच्चयो द्वेधा घटते। ध्यानकार्ये साक्षात्कारस्योपयोगेन वा तत्कार्ये ध्यानस्य वेति। ततश्च किं तयोः साक्षात्कारे समुच्चयः? किं वा मोक्षे? आद्येऽपि किं समुच्चेयं दर्शनं निदिध्यासनफलीभूतदर्शनादाभिन्नम्? उत भिन्नं [1] दर्शनासमानाकारमिति विकल्प्याद्ये आद्यं दूषयति—ध्यानवदिति। ध्यानवत् ध्यानस्येव। अयं च व्यतिरेकदृष्टान्तः। यथा ध्यानं दर्शने हेतुस्तथा दर्शने स्वस्य स्वं प्रति पूर्वभावपश्चाद्भावयोरनुपपत्तेरित्यर्थः। न द्वितीयः; निदिध्यासितव्य इति स्वसाध्ये निदिध्यासनस्य निरपेक्षसाधनत्वप्रतीतिविरोधेन ध्यानातिरिक्ततादृशज्ञानाभावादिति भावः। महाविकल्पे द्वितीयं दूषयति—मोक्षे चेति। तथा च मोक्षसाधनस्य ध्यानसाध्यस्य कस्यचित्किञ्चित्कारस्याभावान्न तद्व्यवधानेनापि ध्यानस्यमोक्षं प्रति दर्शनेन समुच्चय इति भावः। ननु दर्शनमेव किञ्चित्कारो

[1] दर्शनसमान—च. कुं.

हितकिञ्चित्कारायोगात्, दर्शनेनैव व्यवधाने तेन सह समुच्चयायोगात्। तस्माद्द्रष्टव्य इत्यस्य सन्निहितनिदिध्यासनविध्यपेक्षितदर्शनसमानाकारत्वरूपविशेषणसमर्पकतया विशिष्टे निदिध्यासने विधेये श्रवणं मननं च स्वरूपोपकार्यङ्गमर्थप्राप्तमनूद्यत इति ॥

द्रष्टव्य इत्यस्य फलपरत्वम्

तत्र वदामः—द्रष्टव्य इति दृशिपरकृत्यप्रत्ययो न विधि-

रत्नतूलिका

भविष्यतीत्यत आह—दर्शनेनैवेति। यथा यागनिष्पत्त्यर्थानामवघातप्रोक्षणादीनामपूर्वोत्पत्तौ न यागेन समुच्चयः, तथा दर्शनोत्पत्त्यर्थस्य ध्यानस्य न मोक्षं प्रति दर्शनेन समुच्चय इत्यर्थः; एवं द्रष्टव्यो निदिध्यासितव्य इत्यनयोर्भिन्नोपायपरत्वं निराकृत्य स्वाभिमतमुपसंहरति—तस्मादिति। द्रष्टव्य इत्यनेन दर्शनसमानाकारत्वरूपविशेषणे प्रतिपादिते तस्य विशेष्यापेक्षायां सन्निहितं निदिध्यासनं विशेष्यतया सम्बध्यते, तेन तस्य विशेषणाकाङ्क्षा उत्थाप्यते, ततो विशेषणविशिष्टनिदिध्यासनविधिरिति, तदेतदाह—सन्निहितनिदिध्यासनविध्यपेक्षितेति। ननु यदि द्रष्टव्य इत्यस्योपायविशेषणता, आर्थवादिकममृतत्वमपि निदिध्यासनफलं, केन तर्ह्येतद्वाक्यविहितश्रवणस्य फलाकाङ्क्षाशान्तिरित्यत आह—श्रवणं मननं चेति। निदिध्यासनहेतुभूतवाक्यार्थज्ञानं, तद्द्वारा श्रवणमननयोः स्वरूपोपकार्यङ्गत्वमिति भावः ॥

द्रष्टव्य इत्यस्य साधनापेक्षितार्थसमर्पकत्वं सिद्धं कृत्वा, किं फलसमर्पकत्वम्? किं वा विधेयविशेषणसमर्पकत्वमिति विचारयितुं तस्य विधित्वाभावो मतद्वयसिद्ध इत्याह—द्रष्टव्य इतीति।

रिति परस्यापि सम्प्रतिपन्नम्; तदर्पितविशेषणविशिष्टनिदिध्यासनविध्युपगमात्। पृथग्विशेषणविधौ च वाक्यभेदप्रसङ्गात्। ततश्च किं द्रष्टव्य इति सन्निहितविहितसाधनस्य फलसमर्पणपरोऽस्तु? किं वा दर्शनसमानाकारलक्षणया विधेयविशेषणसमर्पणपर इति। वयं तु पश्यामः—युक्तं विध्यपेक्षितफलसमर्पणमिति। सन्निहितानुपातिनी हि फलाकाङ्क्षा विधेः

## रत्नतूलिका

निदिध्यासितव्य इति विहितस्य निदिध्यासनस्य विशेषणविधिरस्तु, तथा च न फलपरत्वं वाक्यस्य; विधिस्वारस्यभङ्गापत्तेरित्यत आह—**पृथग्विशेषणेति**। एवं विधित्वाभावे सिद्धे विधेयं विमृशति—**सन्निहितेति**। अनेन श्रवणस्यैवेदं फलसमर्पणम्, "द्रष्टव्यः श्रोतव्यः" इति तस्य सन्निहितत्वात्, न तु निदिध्यासनस्येति सूचितम्। अस्मिन् पक्षे लक्षणा च दोष इत्यभिप्रेत्य—**समानाकारलक्षणयेत्युक्तम्**। तस्य फलपरत्वसिद्धये स्वर्गकामाधिकरणसिद्धं सन्निहितस्य फलत्वेनान्वयं दर्शयति— **सन्निहितानुपातिनीति**। विधेः—भावनाया इत्यर्थः। यजेतेत्यादौ प्रत्ययेन कुर्यादिति भावना प्रतीयते। तस्याश्च किं कुर्यादिति भाव्याकाङ्क्षा जायते। सा च धात्वर्थं यागमेव फलत्वेनादित्सते। तस्यैकपदोपात्तत्वेनातिसन्निहितत्वात्। तथापि धात्वर्थस्य क्लेशात्मककर्मफलरूपस्य स्वत इष्टत्वाभावात्तमुल्लङ्घ्य पुरुषार्थं भाव्यं मृगयते। लडादिसाधारणेनाख्यातत्वेन रूपेणोपात्तायां भावनायां लिङादिसाधारणविधित्वरूपेणेष्टसाधनताया बोधनात्। तत्र यदि स्ववाक्ये फलमुपात्तं, यथा ज्योतिष्टोमादौ स्वर्गः, तदा तदेवादत्ते। यदि न श्रुतं, स्तुत्यर्थप्राप्तार्थवादोपात्तं मृगयते; यथा रात्रिसत्रे प्रतिष्ठाम्। तस्याप्यभावे

समानपदोपात्तं भावार्थमेवादित्समाना कुतोऽपि हेतोस्ततो विच्छिन्ना सती यदि स्ववाक्येऽपि फलं न लभेत ततः काल्पनिकमार्थवादिकं वा मृगयते। प्रकृते च स्ववाक्यगतदर्शनशब्दाभिधेयसाक्षात्कारस्यार्थवादिकामृतत्वपर्यवसायिनः फलत्वसम्भवान्न सा दूरमनुधावति ॥

अमृतत्वस्य श्रवणफलत्वानौचित्यम्, दर्शने तदौचित्यं च

न चैवमावश्यकत्वादार्थवादिकामृतत्वमेव फलाकाङ्क्षा आदत्तामिति वाच्यम्; प्रथममेव सन्निधिबलग्राहितफलभावे साक्षात्कारे तदुपपादनायार्थवादापेक्षायामपि प्राथमिकंदर्शन-

रत्नतूलिका

फलं [1] मृगयते, यथा विश्वजिदादौ स्वर्गम्। तथा चात्र सान्निहितं दर्शनं स्वर्गादिवत्फलत्वेनैवान्वययोग्यमित्यर्थः। समानपदोपात्तं—एकपदोपात्तम्। कुतोऽपीति। विधिना भावनाया।मिष्टसाधनत्वबोधनादित्यर्थः। ननु धात्वर्थवत्साक्षात्कारोऽपि न स्वतः पुरुषार्थ इति न तस्य फलत्वमित्यत आह—आर्थवादिकेति। दूरमिति। आर्थवादिकामृतत्वपर्यन्तमित्यर्थः ॥

ननु दर्शनस्यापि फलत्वममृतत्वनिर्वाह्यं चेदावश्यकत्वात्तदेव फलमस्त्वित्याशङ्क्य निषेधति—न चैवमिति। एवम्—उक्तरीत्येत्यर्थः। तदुपपादनाय—फलभावोपपादनाय। अन्यथा पशुपुत्रादेरपि फलभावो न स्यात्; तेषां सुखदुःखाभावान्यत्वेन स्वतः पुरुषार्थत्वाभावात्। यदि च सुखसाधनत्वेन मानान्तरगृहीतानां तथात्वं तदा प्रकृतेऽपि तुल्यम्। तच्च मानमर्थवादो लौकिकं वेत्यन्यदेतदिति

[1] ।.त्ययति—घ. च.

फलभावाधिगतिबाधेनार्थवादिकामृतत्वस्य दविष्ठस्य फलत्वकल्पनानौचित्यात् । विधेश्च न स्वरसतो विधेयविशेषणापेक्षा यथा फलापेक्षा, अन्तरङ्गत्वात् । अतो यावत्प्रकरणान्तरपर्यालोचनामूलापेक्षावशेन विधेयविशेषणपरत्वं द्रष्टव्यशब्दस्य ताव-

## रत्नतूलिका

भावः । नन्वेवं धात्वर्थस्यापि फलभावेऽवगते तदुपपादनाय च स्वर्गाद्यपेक्षास्त्विति शङ्कानिवृत्तये पुनर्दर्शनग्रहणम् । तत्र धात्वर्थस्वर्गयोः साध्यसाधनभावबोधो विध्यधीन इति तस्य फलत्वपरित्यागेन करणत्वेनान्वयः, प्रकृते तु गृहीतस्य फलभावस्य निर्वाह इति वैषम्यमिति भावः । ननु विधेयाकाङ्क्षाया अविशेषात्तद्विशेषणत्वेनान्वयः किं न स्यादित्यत आह—विधेश्चेति । विधेयभावनास्वरूपप्रतिपत्त्यर्थत्वेनान्तरङ्गत्वं कुर्यादिति भावनाप्रतीतेरिदमिति कर्मसमर्पणं विना अपर्यवसानादिति भावः । फलाकाङ्क्षाया अन्तरङ्गत्वमुपपादयन् द्रष्टव्य इत्यस्य फलपरत्वमुपसंहरति—अतो यावदिति । "स्मृतिप्रतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः", "भिद्यते हृदयग्रन्थिः.................तस्मिन्दृष्टे परावरे" इति प्रकरणान्तरे ग्रन्थिविमोकहेतुत्वेन श्रुतयोः स्मृतिदर्शनयोर्नानोपायत्वे विकल्पादिदोषादेकत्वेन विशेषणविशेष्यभावेऽवगते श्रोतव्य इत्यत्रापि तदैकार्थ्येन प्रकरणान्तर इव साक्षात्कारत्वस्य विशेषणत्वेऽवगते तस्य च विशेष्याकाङ्क्षायां निदिध्यासनस्यान्वयात्त्राकाङ्क्षोत्थाप्यत इति वक्तव्यम् । ततः पूर्वमेव स्वरससि[1]द्धफलाकाङ्क्षया फलत्वेनैवान्वय इत्यर्थः । नन्वेवमपि श्रवणमेव सन्निहितविहितं साधनम्, तस्यैव साक्षात्कारः फलमित्यत्र किं विनिगमक-

---

[1] फलाकाङ्क्षायाः—च.

त्प्रथमतरवृत्तस्वारसिकापेक्षावशेन फलपरत्वमवसीयते। स च साक्षात्कारोऽविद्यामुच्छिन्दन्नात्मस्वरूपनित्यानुभवपर्यन्तोऽमृतत्वफलो मनननिदिध्यासनयोगपरिशुद्धमनस्सनाथेन विचारितवेदान्तेन जन्यत इति श्रवणमेव साक्षात्कारहेतुतया चोद्यते॥

## श्रवणस्य प्रमाणांशतया दर्शनफलकत्वम्, तत्र सम्भावितदोषपरिहारश्च

अर्थविशेषतात्पर्यावधारणस्य प्रमाणांशतया तद्धेतुविचारस्यापि तथाभावात्। अत एव च नावृत्तिन्यायविरोधः; शब्दस्य परोक्षप्रमाणत्वस्वाभाव्यानुगमेन प्रथमप्राप्तसाक्षात्कार-

### रत्नतूलिका

मित्यत आह—स चेति। स्वरूपानुभवपर्यन्ततोपपादनायाविद्यामुच्छिन्दन्निति विशेषणम्। तदुच्छेदकत्वं च प्रमाणजन्यज्ञानस्यैव भवति, न कृत्रिमसाक्षात्कारस्येति वेदान्तजन्यतेति भावः। मननादिरपि फलोपकार्यङ्गमित्यभिप्रेत्य मननेत्याद्युक्तम्॥

नन्वस्तु तस्य वेदान्तजन्यता, तथापि श्रवणस्य तत्फलकत्वे किमायातमित्यत आह—अर्थविशेषेति। तथाभावात् प्रमाणांशत्वादित्यर्थः। तथा चावधृततात्पर्यकवेदान्तस्य साक्षात्कारहेतुत्वे तदवधारणानुकूलमनोव्यापारस्यापि तद्धेतुत्वमिति भावः। यदुक्तमिष्यमाणज्ञानस्य वैधफलत्वे तदुपायावृत्तिन्यायविरोध इति, तत्रोत्तरमाह—अत एव चेति। यतः साक्षात्कारस्य श्रवणानुगृहीतवेदान्तं प्रति दृष्टफलत्वमत इत्यर्थः। ननु यदि दृष्टफलत्वं तदा लोकसिद्धसाधनभावे तस्मिन्विध्यनुपपत्तिः, अथ तत्परिहारायादृष्टफलत्वं तथासत्यावृत्तिविरोध इत्युभयतःपाशा रज्जुरित्यतस्तदुपपादयति—शब्दस्येति। विधिप्रवृत्तिवेलायां न वेदान्तविचारस्य साक्षात्कार-

साधनभावेन तदंशविचारविधौ सङ्घटिते, तत एव प्रमाणफलस्य विषयस्वभावानुपातिस्वाभाव्यानुगमन्यायोन्मेषेण वैधस्यापि साक्षात्कारस्य प्रमाणवस्तुतन्त्रतया विचारानुगृहीतवेदान्तजननीयत्वावमर्शे दृष्टफलसिध्यर्थविचाराद्यावृत्त्यनपवादात् । अदृष्टस्यापि तादर्थ्ये दृष्टसामग्रीघटकतयाविरोधात् । चित्रादेस्तु

## रत्नतूलिका

हेतुत्वावगमः; येन तदंशविचारे तत्प्रवृत्तिरेव न स्यात् । अनन्तरं त्वेतद्विधिबलादेव परोक्षप्रमाणस्वभावस्यापि शब्दस्य यथा साक्षात्कारहेतुत्वं तथा तादृशन्याय उन्मिषति । एवमपि दृष्टफलत्वं न विहन्यत इति नावृत्तिन्यायविरोधोऽपीति भावः । तदंशेति । शब्दप्रमाणांशेत्यर्थः । तत एव–विचारविधेरेवेत्यर्थः । तदुन्मिषितन्यायं दर्शयति— प्रमाणफलस्येति । प्रमाणफलं ज्ञानस्य परोक्षत्वमपरोक्षत्वं चेति द्वयमपि विषयस्य प्रमात्रपेक्षया व्यवधानाव्यवधानकृतम्, न तु प्रमाणस्वभावकृतमिति न्यायोन्मेषेणेत्यर्थः । वैधस्येति । विध्यवगमितसाधनस्यापीत्यर्थः । ननु भिक्षाचरणसन्न्यासादिबहुनियमयुक्ततया विधीयमानं [1]श्रवणमदृष्टफलकम्, अतः कथं तदुपायावृत्तिसिद्धिरित्यत आह—अदृष्टस्यापीति । नन्वेवं चित्रादिजन्यादृष्टस्यापि दृष्टसामग्रीघटकत्वसम्भवात्तत्राप्यावृत्तिः स्यादित्यत आह—चित्रादेस्त्विति । श्रवणस्य प्रमाणतात्पर्यग्रहणादिरूपदृष्टद्वारा कार्यजननसामर्थ्ये सति तत्रादृष्टस्योपयोगमात्रं कल्प्यते; चित्रादौ तु न यागस्य दृष्टद्वारोपयोग इति [2]केवलादृष्टद्वारैव जनकत्वमिति विशेष इत्यर्थः । तर्हि श्रवणस्यानियतफलत्वं न स्यात्, उपायानुष्ठाने सति दृष्टकार्यविलम्बा-

[1] श्रवणं दृष्ट–घ. [2] केवलदृष्ट–घ.

पश्चादि न दृष्टफलमिति विशेषः। विधिबलादेव तु श्रवणमप्यदृष्टद्वारा प्रस्तुतप्रतिबन्धक्षये जन्मान्तरेऽपि फलजनकमित्यनियतफलमिष्यते ॥

### मननिदिध्यासनयोः श्रवणाङ्गत्वम् , तत्स्वरूपं च

मनननिदिध्यासने च तदङ्गतया विधीयेते, विषयासम्भावनादिनिवृत्त्या फलोपकारित्वात् ॥

तत्र तत्त्वविदाचार्याधीनन्यायोपायग्रहणावधारितवेदान्ततात्पर्यविषयार्थस्यैवमेव युक्तमिति युक्तितः प्रतिष्ठापनं मननम् ।

### रत्नतूलिका

योगात्, ततश्च वामदेवादीनां श्रवणमन्तरापि ज्ञानसद्भावप्रतिपादकश्रुत्यादिविरोध इत्यत आह—विधिबलादेवेति। दृष्टहेतुत्वेऽपि विधिवैयर्थ्यं मा भूदित्यदृष्टद्वारा ज्ञानप्रतिबन्धकदुरितनिवृत्तेरपि स्वीकारात् प्रबलप्रारब्धेनास्मिन् जन्मनि तदनिवृत्तौ जन्मान्तरे तन्निवृत्तिमपेक्ष्य ज्ञानोदयसम्भवान्न विरोध इति भावः ॥

यदुक्तममृतत्वफलाय निदिध्यासने विधेये मननमनूद्यत इति तद्दूषयति—मननेति। तदङ्गतयेति। श्रवणाङ्गतयेत्यर्थः। विषयेति। प्रमाणासम्भावनायाः श्रवणेन निवर्तितत्वादिति भावः। आदिपदेन विपरीतभावना गृह्यते ॥

असम्भावनादिनिवृत्तिसामर्थ्यस्फोरणाय तयोः स्वरूपं दर्शयति—तत्रेति। तयोर्मध्य इत्यर्थः। स्वतन्त्रविचारव्यावृत्त्या गुर्वधीनो विचारो नियम्यत इति पक्षेणाह—तत्त्वविदिति। आचार्याधीनं यन्न्यायरूपोपायग्रहणं तदवधारितं यद्वेदान्ततात्पर्यं

श्रुते मते ब्रह्मैकात्म्ये विजातीयप्रत्ययवासनोद्सनेन तदेकप्रत्यय-सन्ततीकरणं निदिध्यासनम् ॥

निदिध्यासनमात्रस्याविधेयत्वम्, तदुपपादनं च

न चेदमेव विधीयते, श्रोतव्यो मन्तव्य इति चानुवादः, तादर्थ्येन प्राप्तत्वात्, विधिलाघवाच्चेति वाच्यम्; अफल-विधानानुपपत्तेः। न च निधिध्यासनं ब्रह्मतत्त्वसाक्षात्कार-

रत्नतूलिका

तद्विषयार्थस्येत्यर्थः। तथा चैतादृशमननस्य विषयासम्भावनानिवर्तकत्वं स्पष्टमिति भावः। उत्तरोत्तरस्य पूर्वपूर्वाधीनत्वमिति दर्शयति—**श्रुते मत इति** ॥

एवं श्रवणं साक्षात्काराय विधीयते, मनननिदिध्यासने च श्रवणं प्रति फलोपकार्यङ्गत्वेन विधीयेते इत्युक्तम्। परेण तु निदि-ध्यासितव्य इत्यत्रैव विधिः, श्रोतव्यो मन्तव्य इति चार्थप्राप्तयोरनुवाद इत्युक्तम्, तदाशङ्क्य निषेधति—**न चेदमेवेति**। **तादर्थ्येनेति**। ध्यानार्थतयेत्यर्थः। अश्रुते अमते ब्रह्मणि निर्णयाभावेन निदि-ध्यासनानु[1]पपत्तेरिति भावः। **विधिलाघवादिति**। त्रयाणां विध्यपेक्षया एकस्य विधानं लघु। अन्यथादृष्टत्रयकल्पनागौरवमिति भावः। **अफलेति**। सिद्धान्ते [2]त्वङ्गिफलेनैव फलवत्त्वं सिध्यति। स्वतन्त्रविधौ तु नैवमिति भावः। स्वतन्त्रविधावपि फलमस्तीति वदता वक्तव्यम्—किं द्रष्टव्य इति निर्दिष्टः साक्षात्कारः? किं वार्थवादिकी मुक्तिरिति। आद्येऽपि किं सिद्धान्त इवाकृत्रिमः? किं वा ध्यानपरिपाकमयसाक्षात्काराभास इति विकल्प्याद्यं निषेधति—**न च**

---

[1] पपत्तिरिति—कुं. [2] त्वङ्ग फलेनैव—घ.

फलम्; तस्याप्रमाणत्वात्। ध्यानपरिपाकमयसाक्षात्कारस्य च वस्तुयाथात्म्यानवभासितया अमृतत्वफलापर्यवसायित्वात्। न हि परोक्षावगतं वस्तु परमार्थसदपि स्वरूपेण भावनामयसाक्षात्कारे प्रकाशीभवति; कामिपरिभावितकामिनीसाक्षात्कारादावदर्शनात्॥

साक्षात्काराभासस्येश्वरात्मप्रकाशफलकत्वशङ्कापरिहारौ

ननु श्रद्धाभक्तिप्रणिधानैर्यतमानस्य तदावर्जितः परमात्मा स्वात्मानं प्रकाशयति,
"यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्।"

रत्नतूलिका

निदिध्यासनमिति। तत्र हेतुमाह—तस्येति। सिद्धान्ते तु प्रमाणांशश्रवणाङ्गत्वात्तत्फलत्वमिति भावः। द्वितीयं निरस्यति—ध्यानपरिपाकेति। अमृतत्वेति। तथा च तात्पर्यावसायितयैव तस्य फलत्वं वाच्यम्। सा चाविद्यानिवर्तकतया। तन्निवर्तकता च वस्तुयाथात्म्याव-[1]भासितत्वेनेति तस्या न फलत्वमिति भावः। एतदेवोपपादयति—न हीति॥

साक्षात्काराभासस्य तथाविधसामर्थ्याभावेऽपीश्वर[2]स्तत्रैवोपासकानुजिघृक्षया स्वात्मानं प्रकाशयतीत्याशङ्कते—नन्विति। सत्यमुपासकावर्जितः परमात्मा तदनुजिघृक्षयात्मानं प्रकाशयतीति। तत्प्रकाशनं च प्रमाणमूले साक्षात्कार एव; परमात्मनोऽपि वस्तुस्वरूपस्यानुसरणीयत्वात्। इयता सन्दर्भेण विधेयध्यानसाध्यत्वं साक्षात्काराभासस्याङ्गीकृत्य तस्य फलत्वं नास्ती-

[1] भासित्वेन—कुं. [2] स्तत्रोपासका—च,

"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥"

इत्यादिदर्शनादिति चेत्, सत्यम्; तथापि नाप्रमाणमूले परोक्षस्मृतिसन्ततिपरिपाकात्मकसाक्षात्काराभासे स प्रकाशतेति लोकदर्शनादुपेयते, दृष्टानुसारित्वात्कल्पनायाः। तदवधेरेव तव ध्यानस्य विधेयतया तत्फलत्वानुपपत्तेश्च । एतेन--

"तत्त्वमस्यादिवाक्यार्थभावनाजापरोक्षधीः ।
मूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यते ॥"

इति प्रत्युक्तम्; वस्तुतत्त्वावभासिसाक्षात्कारस्य प्रमाण-फलत्वात् ॥

ध्यानस्य साक्षात्कारफलकत्वश्रवणविरोधशङ्कापरिहारौ

न चैवम्—

"ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः",

"योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्"

रत्नतूलिका

त्युक्तम्। इदानीं तस्यापि विधेयकोटौ निवेशान्न विधेयफलत्वमित्याह— तदवधेरेवेति । एतच्छब्दार्थमाह—वस्तुतत्त्वेति ॥

नन्वेवं सति ध्यानस्य साक्षात्कारफलकत्वश्रवणविरोध इत्याशङ्क्य निषेधति—न चैवं "ज्ञानेति। ज्ञानप्रसादेन—श्रवण-मननादिसम्पादितवाक्यार्थज्ञानेन, विशुद्धसत्त्वः—असम्भावनाया निवृत्त-त्वात्परिशुद्धान्तःकरणः, ध्यायमानः पश्यत इति श्रुत्यर्थः । योगिनः—ध्यायिनः, तं—भगवन्तं पश्यन्तीति स्मृत्यर्थः। आदिपदात् "यं विनिद्रा जितश्वासाः" इत्यादिसङ्ग्रहः। अनयोः श्रुतिस्मृत्यो-

इत्यादिविरोधः; ध्यानस्य साक्षात्कारोपयोगाप्रत्याख्यानात् प्रमाणसहकारित्वेऽपि तदुपपत्तेः। अन्यथा तस्य ज्ञानकरणत्वमपरोक्षप्रमाणत्वं च कल्पनीयमिति गौरवात्। ध्यानयोगपरिशुद्धेन मनसा ब्रह्मसाक्षात्कारः स्यादिति चेत्, स्यान्नाम। ध्यानं तु पराङ्गमेवेति समभिव्याहृतश्रवणाङ्गमेवास्तु; सन्निहितत्वात् ॥

## मनसः प्रमाणत्वप्रतिषेधः

अपि च न मनोऽपि प्रमाणम्; प्रमाणसहकारित्वादालोकादिवत्। न च व्याप्यदर्शने व्यभिचारः; संशयोत्तरप्रत्यक्षे मानसहकारित्वेऽपि तस्यानुमितौ प्रमाणत्वादिति

## रत्नतूलिका

ध्यानस्य साक्षात्कारोपयोगः प्रतिपाद्यते। तच्चास्माकमपीष्टमेवेत्याह—ध्यानस्येति। तर्हि विवादविरम इत्यत आह—प्रमाणसहकारित्व इति। प्रमाणस्य—विचारितवेदान्तस्य, सहकारी—विपरीतभावनानिवृत्तिद्वारा तज्जननीयसाक्षात्कारोपयोगीति यावत्। ननु साक्षात्कारफलत्वे सिद्धे साक्षादेव तदस्तु, किमन्यमुखनिरीक्षणेनेत्यत आह—अन्यथेति। ननु नानेनाहत्यापरोक्षज्ञानमुत्पद्यते; येन प्रमाणत्वादिकल्पनं स्यात्; किं तु क्लृप्तं मन एव प्रमाणम्; तस्य चानुग्राहकमिदमित्याशङ्कते—ध्यानयोगेति। पराभिमानं खण्डयति—स्यान्नामेति। तथा चान्याङ्गत्वे सति सन्निध्याम्नानरूपस्थानप्रमाणेन श्रवणाङ्गत्वमेव प्रामाणिकमित्यर्थः॥

व्यभिचारमुपपादयति—संशयोत्तरप्रत्यक्ष इति। तथा च तत्र प्रमाणसहकारित्वादिति हेतुर्वर्तते। प्रमाणत्वाभावलक्षणसाध्यं

वाच्यम् ; विशेषदर्शने सति संशयसामग्र्यभावेन स्वसामग्र्यादेव प्रत्यक्षसम्भवात्तस्यापि तद्धेतुत्वे कल्पनागौरवात् । अपि च यदि मनः प्रमाणं स्याद्रूपादिप्रत्यक्षं मानसमापद्येत । न च करणान्तरासहकृतमनोजन्यत्वाभावादमानसत्वमिति वाच्यम् ; मनःप्रामाण्ये तदेकप्रमाणत्वापत्त्या करणान्तराभावात् । इन्द्रियादीनामालोकादिवत्तत्सहकारित्वोपपत्तेः । अथेच्छादिसाधारणकारणत्वान्मनसो न तदेकप्रमाणत्वम्, प्रमासाधारणकारणस्यैव प्रमाणत्वादित्युच्येत, तर्हि तत एव न प्रमाणमेव मन इति ब्रूमः । न च सुखादिप्रत्यक्षे मन इन्द्रियत्वेन

## रत्नतूलिका

नास्तीति व्यभिचार इत्यर्थः । हेत्वभावान्न व्यभिचार इति परिहरति—**विशेषदर्शने सतीति ।** तथा च संशयसामग्रीविघटनेनान्यथासिद्धं विशेषदर्शनं न प्रमाणसहकारीति भावः । **न च करणान्तरेति ।** चक्षुरादिलक्षणेत्यर्थः । नन्वेवं रूपादिज्ञानेषु व्यवस्थया चक्षुराद्यपेक्षा न स्यादित्यत आह—**इन्द्रियादीनामिति ।** आदिशब्देनानुमानादेर्ग्रहणम् । **आलोकादी**त्यादिशब्देन व्यजनपवनादेर्लीलादेश्च ग्रहणम् । नन्वात्मविशेषगुणमात्रे मनसः कारणत्वान्न प्रमां प्रत्यसाधारणकारणत्वम् । अतश्च न तदेकप्रमाणपरिशेष इति मन्दः शङ्कते—**अथेच्छादीति ।** **तत एवेति ।** इच्छादिसाधारणकारणत्वादेवेत्यर्थः । तथा च तदेकप्रमाणत्वदूषणं परिहरता त्वया तस्य प्रमाणत्वमेव परिहृतमिति [1] व्याघात इति भावः । प्रमाविशेषं प्रत्यसाधारणकारणत्वात्प्रमाणत्वमाशङ्क्य निषेधति—**न च सुखादिप्रत्यक्ष इति ।** तथा च प्रमामात्रे

---

[1] स्वव्याघात–कुं.

करणत्वात्प्रमाणम्, जन्यप्रत्यक्षत्वावच्छेदेनेन्द्रियत्वेन करणत्वस्य चक्षुरादौ क्लृप्तत्वात्, वैधर्म्यावच्छिन्नानेककार्यतायामेकधर्मानवच्छेद्यकारणताकत्वस्य चासाधारणकारणार्थत्वादिति वाच्यम्; चक्षुरादिकरणत्वकल्पनामनपेक्ष्यैव मनसः सुखादिप्रत्यक्षरूपकार्यविशेषे इच्छादिसाधारणकारणरूपव्यावृत्तेन्द्रियत्वेन करणत्वे कल्प्यमाने लाघवेन जन्यप्रत्यक्षत्वावच्छेदेन तदेककरणत्व-

## रत्नतूलिका

इच्छादिसाधारणरूपेण मनस्त्वेन कारणत्वान्न तदेकप्रमाणत्वम्, सुखादिप्रत्यक्षे इन्द्रियत्वेनासाधारणकारणत्वान्प्रमाणत्वं चेति भावः। मनस इन्द्रियत्वेन तत्र करणत्वे हेतुमाह—जन्यप्रत्यक्षेति। तथा च रूपादिज्ञाने चक्षुरादेः करणत्वग्रहदशायां जन्यप्रत्यक्षत्वेनेन्द्रियत्वेन च कार्यकारणभावो गृह्यते। सुखादिप्रत्यक्षे चेन्द्रियान्तरस्याभावान्मन एव तथा करणमिति भावः। इच्छादिसाधारण्येनात्मविशेषगुणमात्रे साधारणकारणस्य मनसः कथं तद्विशेषऽसाधारणकारणत्वमित्यतस्तन्निर्वक्ति—वैधर्म्यावच्छिन्नेति। वैधर्म्यावच्छिन्ना या अनेककार्यता जन्यात्मविशेषगुणत्वावच्छिन्ना जन्यप्रत्यक्षत्वावच्छिन्ना च, तत्र मनसो नैकधर्मावच्छेद्यकारणताकत्वम्। आत्मविशेषगुणकार्यतायां मनस्त्वावच्छिन्नकारणताकत्वम्। सुखादिप्रत्यक्षनिष्ठकार्यतायामिन्द्रियत्वावच्छिन्नकारणताकत्वम्। कालादृष्टादौ तु नैवम्। तत्र नानाकार्यतायां कालत्वादृष्टत्वाद्यवच्छेद्यकारणताकत्वादित्यर्थः। अनपेक्ष्यैवेति। रूपादिज्ञाने चक्षुरादेरेव प्रथमं करणताग्रहः, न तु सुखादिज्ञाने

कल्पनापत्तेरपरिहार्यत्वात्। अनुमित्यादावपि तस्यैव तथैव स्वरूपभेदकल्पनया करणत्वोपपत्तेः॥

सुखाद्यनुभवस्यान्यथोपपत्त्या तत्र मनसः प्रमाणत्वानपेक्षा

लाघवेन निसर्गसिद्धनित्यसाक्षिण एव सुखाद्युपधानेन सुखादिसाक्षात्कारतया तत्र करणवैफल्याच्च। न च घटमणिकाकाशवदौपाधिकसुखादिज्ञानभेदावभाससम्भवेऽपि घटाकाशादेराकाशमात्रादिव सुखादिज्ञानस्य साक्षिमात्राद्भेदाभावे 'मयि सुखानुभवः, सुखमनुभवामि' इति [1]प्रतिपत्त्यनुपपत्तिरिति

रत्नतूलिका

मनस इत्यत्र नियामकाभावादिति भावः। अपरिहार्यत्वादिति। तथा च रूपादिप्रत्यक्षाणां करणान्तरासहकृतमनोजन्यत्वेन मानसत्वापत्तिदोषस्तदवस्थ इति भावः। तस्यैव—मनस एव। तथैव—इच्छादिकरणव्यावृत्तरूपेणैव॥

एतावता सुखादिप्रत्यक्षस्य जन्यत्वमङ्गीकृत्य तत्करणतया मनसः प्रमाणत्वे बाधकमुक्तम्। इदानीं तस्य नित्यसाक्षिरूपतया तत्र करणापेक्षाभावान्न मनसः प्रमाणत्वमित्याह—लाघवेनेति। निसर्गसिद्धेत्यनेन पक्षान्तरे ज्ञानान्तरकल्पनागौरवं, नित्यत्वविशेषणेन करणान्तरकल्पनागौरवं च सूचितम्। सुखाद्यनुभवस्य साक्षिमात्रत्वे तेन सह धर्मधर्मिभावानुपपत्तिरित्याशङ्क्य निषेधति—न च घटेति। अवभास्यसुखस्य साक्ष्याश्रिततया तदवभासस्यापि तद्धर्मत्वप्रतीतिरिति

[1] प्रतीत्यनु—ग. ङ.

वाच्यम्; स्वाश्रितसुखाद्यवभासितया तथा प्रतिभासोपपत्तेः। अवभासकस्य रक्तवृत्ताद्यवभासकालोकवदवभास्यसरूपावभासित्वात्। एतेन सुखादिप्रत्यक्षोत्पादविनाशानुभवोऽपि व्याख्यातः॥

## सुखाद्यवभासस्य स्वप्रकाशत्वम्

न च सुखं जानामि घटं जानामीति वा ज्ञानविषयतया ज्ञानमवभासेत; अप्रकाशमानस्य विषयानवभासतया स्वयमवभासोपपत्तेः। [1]चाक्षुषादिवृत्तयोऽपि प्रकाशविषया एव तदैकात्म्येनावभासन्ते, न पृथज्ज्ञानविषयाः॥

## रत्नतूलिका

परिहरति—स्वाश्रितेति। तथेति। स्वाश्रितत्वेनेत्यर्थः। रक्तवृत्तेति। यथा रक्तस्यावभासक आलोको रक्तवदवभासते, वृत्तावभासको वृत्तः, दीर्घावभासको दीर्घः, तथा स्वाश्रितस्य सुखादेरवभासकः स्वाश्रिततया प्रतीयत इत्यर्थः। एतेनेति। अवभास्यसरूपावभासित्वकथनेनेत्यर्थः। अवभास्यस्योत्पादे विनाशे चावभासकस्यापि तथात्वानुभव इति भावः॥

ननु ज्ञानविषयतया प्रकाशमानस्य सुखादिज्ञानस्य न नित्यज्ञानरूपता; स्वस्य स्वविषयत्वायोगादित्याशङ्क्य निषेधति—न च सुखमिति। सुखादिप्रकाशस्य प्रकाशविषयतामन्तरेण यः स्वयमवभासः स एव विषयविषयिभावेन विकल्प्यते, न तु वस्तुतो विषयविषयिभावः, येन भेदः स्यादिति परिहरति—अप्रकाशमानस्येति। अन्धकारस्य विषयानवभासकत्वात् सौरालोकादेः प्रकाशमानस्यैव तदवभासकत्वदर्शनात्प्रकाशमानत्वं तत्र प्रयोजकमिति भावः। न पृथगिति। येन वृत्तिगोचरापरोक्षज्ञानकरणतया मनसः प्रामाण्यं सिध्येदिति भावः॥

---

[1] चक्षुरादि—ख.

सुखादिप्रकाशे मनसोऽकरणत्वेऽपि ज्ञानपदवाच्यतोपपत्तिः

न चैवं मनःकरणकसुखादिवृत्त्यनुपगमे सुखादिप्रकाशस्य ज्ञानपदवाच्यत्वानुपपत्तिः, वृत्तिविशिष्टस्यैव तथात्वोपगमादिति वाच्यम्; विषयप्रकाशत्वेन सर्वत्र ज्ञानपदवाच्यत्वात्। तच्च क्वचित्साक्षात्क्वाचिद्वृत्त्युपाधिकमित्यन्यदेतत्॥

चैतन्ये परप्रकाशत्वस्यौपाधिकतया स्वाभाविकस्वप्रकाशत्वानपोहः

न च स्वप्रकाशस्वभावस्य नित्यचैतन्यस्य परप्रकाशत्वानुपपत्तिरिति वाच्यम्। न हि चैतन्यमेव परप्रकाशकतारूपान्तरमापद्यते, अविकारित्वात्। सुखादिकं तु तत्र सम्बध्यमानमालोक इव घटादि सोपाधिकमेव परप्रकाशत्वमापादयति॥

रत्नतुलिका

एवं सुखादिगोचरमनःकरणकवृत्तौ सुखादिप्रकाशस्याश्रितत्वावभासानुपपत्तिर्ज्ञानविषयत्वावभासानुपपत्तिश्च न प्रमाणमित्युक्तम्। इदानीं ज्ञानपदवाच्यत्वानुपपत्तिमाशङ्क्य निषेधति—न चैवं मनःकरणकेति। सर्वत्रेति। यत्र वृत्तिर्यत्र वा सा नास्ति तत्र सर्वत्रेत्यर्थः। तर्हि घटादावपि तामन्तरेण प्रकाशस्य ज्ञानपदवाच्यतापत्तिरित्यत आह—तच्चेति। विषयप्रकाशत्वमित्यर्थः। क्वचित्साक्षात् प्रमात्रव्यवहितविषये। क्वचिद्वृत्त्युपाधिकम् प्रमातृव्यवहितविषये॥

परप्रकाशत्वे स्वभावहानप्रसङ्गादिति दूषणाय स्वप्रकाशस्वभावस्येति विशेषणम्। आपादयतीति। तथा चौपाधिकधर्माणां न स्वभावहानिहेतुत्वम्; कालाकाशादावौपाधिकपरिच्छेदस्य तद्धेतुत्वादर्शनादिति भावः॥

### प्रकारान्तरेण सुखादिप्रकाशे मनःकरणकत्वशङ्कासमाधाने

अथ यदि प्रकाशसम्बन्ध एव प्रकाशमानता, रूपवदालोकसम्बन्धे गन्धरसादेरपि तत्प्रसङ्गः। को दोषः? तद्गोचरज्ञानाभावादेवात्मनस्तदप्रतिभासोपपत्तेः॥

### धर्मादिप्रकाशे सुखादिप्रकाशवैलक्षण्यम्, मनसः प्रमाणत्वे दूषणान्तरं च

धर्मादिस्तु चैतन्यप्रकाशसम्बन्धेऽपि न प्रतिभासते, अयोग्यत्वात्। तदाकारवृत्त्युपजने च तस्यां प्रकाशमानायां तदेकावभासो धर्मादिरिति फलबलादेव कल्प्यते। सुखादि चोत्पत्त्यैव प्रकाशत इति न तद्गोचरमानसवृत्त्यपेक्षेत्यास्तां तावत्। तस्मादसाधारणविषयाभावाच्च मनो न प्रमाणम्।

### रत्नतूलिका

तत्प्रसङ्ग इति। प्रकाशप्रसङ्ग इत्यर्थः। तथा च तदाकारवृत्तिविशिष्टप्रकाशसम्बन्ध एव तथेति वाच्यमिति मनःकरणकसुखादिवृत्तिसिद्धिरिति भावः। किं तन्मात्रमापाद्यते? उतात्मानं प्रतीति विकल्प्याद्यमङ्गीकरोति—को दोष इति। द्वितीय आह—तद्गोचरेति। तथा च प्रमात्रपेक्षया व्यवहितत्वाद्वृत्तिं विना तदनुपपत्तेस्तस्य नात्मानं प्रति भानमित्यर्थः। सुखादौ तु विनापि वृत्तिं तदव्यवधानमस्ति, तस्याहमर्थ एवाध्यासादिति भावः॥

तर्हि धर्मादीनामपि सुखादिवद्भानं स्यादित्यत आह—धर्मादिस्त्विति। अयोग्यत्वे वृत्तौ सत्यामपि तन्न प्रकाशेतेत्यत आह—तदाकारेति। सुखादौ वृत्त्यनपेक्षायां मानान्तरमाह—सुखादीति। तथा चोत्पन्ने वस्तुनि यत्र वृत्तिविलम्बात् प्रकाशविलम्बस्तत्रैव तदपेक्षा, सुखादौ नैवं विलम्ब इति न तदपेक्षेति भावः। लाघवेनेत्यारभ्योक्तं दूषणमुपसंहरति—तस्मादिति। एवं प्रमाणान्तरसहकारित्वादसा-

प्रमाद्युपादानत्वाच्च, "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा-धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इत्यादिश्रुतेः। एत-च्चाग्रे निपुणतरं वक्ष्यामः॥

मनसः करणान्तरवैलक्षण्यम्

अपि च सर्वं करणं विषयव्याप्त्या फलमाधत्ते। न चात्मगोचरवृत्त्यतिरेकेण मनसस्तद्व्याप्तिरधिका शक्या कल्प-यितुमिति [1] तत्करणगवेषणायां विचारितवेदान्त उपतिष्ठते॥

मनसः करणत्वपरगीताभाष्यश्रुतिवाक्ययोरभिप्रायः

"शास्त्राचार्योपदेशसंस्कृतं मन आत्मसाक्षात्कारकरणम्" इति गीताभाष्यं "मनसैवानुद्रष्टव्यम्" इति श्रुतिश्च मनस-स्तदुपादानत्वादन्तरङ्गसाधनत्वाभिप्रायम्, अन्यथा ब्रह्मण औपनिषदत्वविरोधात्; "आत्मा द्रष्टव्यः श्रोतव्यः" इति

रत्नतूलिका

धारणविषयाभावाच्च मनो न प्रमाणमित्युक्तम्। इदानीं दूषणान्तरमाह—प्रमाद्युपादानत्वाच्चेति। तत्र श्रुतिं प्रमाणयति—काम इति। यथा मृद्घट इति सामानाधिकरण्यान्मृदस्तदुपादानत्वमेवं मनस इति भावः॥

सर्वमिति। कुठारादौ द्वैधीभावादिरूपफलातिरिक्तायाः संयोगादिलक्षणाया वृक्षादिरूपविषयव्याप्तेर्दर्शनादिति भावः। मनसस्तु न फलातिरिक्ता व्याप्तिरस्तीत्याह—न चात्मेति। इतिर्हेतौ। तथा च विषयव्याप्त्या फलाधायकत्वाभावस्य तत्र करणत्वाभावनिर्णयद्वारा करणान्तरगवेषणाहेतुत्वमिति भावः॥

ननु मनसः करणत्वनिषेधो गीताभाष्यविरुद्धः श्रुतिविरुद्धश्चेत्यत-स्तत्परिहरति—शास्त्राचार्योपदेशेति। औपनिषदत्वेति। "तं त्वौप-

[1] तत्कारण-ग.

तद्दर्शनाय श्रवणविधिविरोधाच्च ॥

मोक्षस्य ध्यानासाध्यत्वम्

नापि मुक्तिफलं ध्यानं विधेयम्; "तमेव विदित्वाति-मृत्युमेति", "तमेवं विद्वानमृत इह भवति" इत्यादौ मुक्तेर्ज्ञानसाध्यत्वावगमात् ॥

परमते उपासनस्य कर्मरूपता, तत्र तदभियुक्तसम्मतिश्च

उपासनं च कर्मेति परस्यापि सम्प्रतिपन्नम्। यथाह तान्त्रिकः "प्रकाशश्च कर्मण्यभ्यासात्" इति सूत्रवृत्तौ—"उपासनात्मके कर्मणि" इति। अन्यत्रापि "यागात्मकमुपा-सनात्मकं च कर्म" इति। श्रुतप्रकाशिकाकारश्च "उपासनस्य कर्मत्वम्, सन्ततिरूपतया प्रयत्नसाध्यत्वात्" इति ॥

रत्नतूलिका

निषदं पुरुषं पृच्छामि" इति श्रुतावौपनिषदत्वं ब्रह्मणः प्रतीयते। तच्च तदेकगम्यत्वे घटते, नान्यथा, व्यपदेशस्यासाधारण्यनिमित्तकत्वादिति भावः। तद्दर्शनायेति। श्रवणस्य साक्षात्कारफलकत्वं वेदान्तरूप-प्रमाणांशतया निर्वहणीयम्, नान्यथा, अतस्तद्विधिफलात्तदंशिन एव वेदान्तस्य साक्षात्कारहेतुत्वं वाच्यमिति भावः ॥

एवं साक्षात्कारफलं निदिध्यासनं विधीयत इति महाविकल्पे प्रथमं निरस्य द्वितीयं निरस्यति—नापीति ॥

ननूपासनारूपज्ञानसाध्यत्वमस्मन्मते[1]ऽप्यविरुद्धमित्यत आह—उपासनं चेति ॥

[1] प्यसिद्ध–कुं.

विद्युपास्योरभेदशङ्कानिरासौ

ननु च "मनो ब्रह्मेत्युपासीत" इत्यत्र "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद," "यस्तद्वेद यत्स वेद स मयैतदुक्तः" इत्युपक्रम्य "अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से" [1]इत्यादौ विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारादैकार्थ्यमवगम्यत इति चेन्न; विदेर्ज्ञानरूढस्योपासिक्रियार्थत्वानुपपत्तेः ॥

"मनो ब्रह्म", "तमेवम्" इत्यनयोर्वैलक्षण्यम्

"मनो ब्रह्म" इत्युपासनाप्रकरणे चोपक्रमोपसंहारैकरूप्यसिद्धिरेव लक्षणाहेतुरिति युक्तं वेदनशब्देन तत्सन्ततिरूपक्रिया लक्ष्यत इति। न च "तमेवं विद्वान्" इत्यादौ तथा;

रत्नतुलिका

विद्युपास्योरभेदमाशङ्कते—ननु चेति। व्यतिकरः सम्पर्क इत्यर्थः। "मनो ब्रह्मेत्युपासीत" इत्युपासिनोपक्रमः, "कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद" इति विदिनोपसंहारः। एवं "यस्तद्वेद यत्स वेद स मयैतदुक्तः" इति विदिनोपक्रमः, "यां देवतामुपास्से" इत्युपासिनोपसंहार इति परस्परसम्पर्क इति भावः॥

कथं तर्हि "मनो ब्रह्म" इत्यादावैकार्थ्यमित्यत आह—"मनो ब्रह्म" इतीति। वेदनशब्दस्यैव तत्सन्ततौ लक्षणा, न तूपासनावाचकस्य वेदन इति नियमाय उपासनाप्रकरण इत्युक्तम्, तदाह—युक्तं वेदनशब्देनेति। वेदनस्य शब्देन वेदेतिशब्देनेत्यर्थः। तथेति।

[1] इत्यादिवि—ख.

" निचाय्य तं मृत्युमुखात्प्रमुच्यते," " भिद्यते हृदयग्रन्थिः.... तस्मिन् दृष्टे परावरे " इत्यादिनैकार्थ्यात् ॥

आत्मेत्येवेतिवाक्यस्य सोदाहरणमुपासनाविधिपरत्वाभावोक्तिः

" आत्मेत्येवोपासीत " इति च नोपासनाविधिपरम् ; एवकारोपबन्धेन विशेषणपरत्वात् । तदयमर्थः—यः प्राणनादिकर्तारमात्मानं जानाति न स वेद, अकृत्स्नो ह्येषः, विशिष्टभेदात्, ततः प्राणनादिसर्वव्यापारानानुबन्तं साधारण-

रत्नतूलिका

लक्षणेत्यर्थः। ऐकार्थ्यादिति। वेदेतिज्ञानसामान्यवाचकस्य साक्षात्कारलक्षणज्ञानविशेषवाचकस्य निचाय्येत्यस्य चैकार्थ्यादित्यर्थः। अन्यथा तत्रापि लक्षणा स्यादिति भावः॥

विशेषणपरत्वादिति। साधारणात्मरूपविशेषणपरत्वादित्यर्थः। तदेव दर्शयति—तदयमिति। अत्र " तद्धेदं तर्ह्यव्याकृतमासीत् " इत्युपक्रान्तस्यात्मनः " स एष इह प्रविष्ट आनखाग्रेभ्यः " इति जीवभावमुक्त्वा, " तन्न पश्यन्ति " इति तस्य ज्ञानाभावं प्रतिज्ञाय, तत्र " अकृत्स्नो हि सः " इत्यकृत्स्नत्वं प्राणनादिव्यापाररूपविशेषणभेदाद्भिन्नरूपेणावस्थितत्वं हेतुमुक्त्वा, " प्राणन्नेव प्राणो नाम भवति " इत्यादिना तमेव हेतुमुपपाद्य, " स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषः " इति प्राणिमि वदामि पश्यामीत्यादिज्ञानवतोऽनात्मवित्त्वमुक्त्वा, सर्वविशेषणपरित्यागेनात्मस्वरूपमात्रमेव ज्ञेयमिति प्रतिपाद्यत इति आत्मेत्येवोपासीतेति प्रकरणार्थः। " अकृत्स्नो ह्येषः " इति श्रुत्युपात्ते अकार्त्स्न्ये हेतुमाह—विशिष्टभेदादिति। आत्मशब्दार्थं वदन्विशेषणपरत्वं दर्शयति—तत इति।

मात्मानमेव पश्येदिति। तत्र चोपासीतेति [1] साक्षात्कारादिफलमुपासनादिकमन्यसिद्धमनूद्यते। एवकारोपहतविधिशक्तित्वाद्वा "षड्विंशतिरित्येव ब्रूयात्" इत्यादिवदिदं स्यात्॥

आत्मानमेवेत्यादावप्युपासनाभावः, भगवत्पादाशयश्च

एतेन "आत्मानमेव लोकमुपासीत" इति व्याख्यातम्। भगवत्पादास्तु स्ववाक्यावगतात्मनोऽनुस्मृतिरर्थप्राप्ता बलवदारब्धभोगविक्षेपात्पाक्षिकी नियम्यत इत्यप्याहुः॥

रत्नतूलिका

तर्ह्युपासीतेत्यस्य का गतिरित्यत आह—तत्र चेति। अन्यसिद्धमिति। "निदिध्यासितव्यः" इति विधिसिद्धमित्यर्थः। तथा च प्राप्तत्वान्नात्रोपासनाविधिरिति भावः। उपासनाविधित्वाभावे हेत्वन्तरमाह—एवकारेति। षड्विंशतिरिति। अश्वमेधे "अश्वस्तूपरो गोमृगस्ते प्राजापत्याः" इति श्रुतम्। तत्राश्वस्य वङ्क्रयः—पार्श्वास्थीनि चतुस्त्रिंशत्। तत्र "चतुस्त्रिंशद्वाजिनो देवबन्धोः" इति वैशेषिको मन्त्रः पठितः। तं च पाठप्राप्तं "न चतुस्त्रिंशदिति ब्रूयात्" इति निषिध्य "षड्विंशतिरित्येव ब्रूयात्" इति विधानात्प्राकृत एवाध्रिगुप्रैषः प्रयोक्तव्य इति पूर्वपक्षे, एवकारोपहतविधिशक्तित्वात् "षड्विंशतिरित्येव" इति न विधिः, किं तु "न चतुस्त्रिंशत्" इत्यनेन वैशेषिकमन्त्रे निषिद्धे चोदकप्राप्तस्यानुवादः। निषेधश्च प्राप्तिपूर्वक इति, प्राप्तिश्च प्रकरणपाठकल्पितशास्त्रेणेति विहितप्रतिषिद्धत्वाद्विकल्प इति नवमे स्थितमिति भावः॥

अर्थप्राप्तेति। वाक्यार्थज्ञानेन दृढतरे संस्कारे आहिते सति तत्सामर्थ्यादात्मसाक्षात्कारस्य मोक्षोपायत्वावगमाच्च स्मृतिर्भवतीति भावः॥

---

[1] साक्षात्कारफल—ख.

नापि "स यः सर्वेषां भूतानामन्तरपुरुषः स म आत्मेति विद्यात्" इत्युपासनाविधिपरम्; विदेर्ज्ञानार्थत्वात्। न च ज्ञानमेव विधीयमानमशक्यतयाऽभ्यासरूपोपासनात्मतामाक्षिप्य विधीयत इति वाच्यम्; विधित्वसिद्धेः प्रागाक्षेपानुपपत्तेः। न च विदेः क्वचिदुपासनार्थता बलादुपेतेति सर्वत्रैवोपगन्तव्या; ब्रह्मात्माभेदस्य [1] तथाभावेन सम्यग्ज्ञानपरत्वोपपत्तेः॥

स य इत्यादिवाक्यस्य ज्ञानपरत्वे इतिशब्दविधिप्रत्यययोरुपपत्तिः

न चैवमितिशब्दो विधिप्रत्ययश्च विरुध्येयातामिति

रत्नतूलिका

विधित्वसिद्धेरिति। तथाभ्यासाक्षेपे विधित्वसिद्धिः, सिद्धे च विधित्वे तदाक्षेप इत्यन्योन्याश्रय इति भावः। ननु "मनो ब्रह्मेत्युपासीत" इत्यत्र "भाति च तपति च कीर्त्या ब्रह्मवर्चसेन य एवं वेद" इत्युपासनायां वेदेति प्रयोगात्तस्य तदर्थत्वमित्याशङ्क्य निषेधति—न च विदेरिति। बलादिति। उपक्रमोपसंहारैकरूप्यबलादित्यर्थः। तर्हि वाक्यस्य का गतिरित्यत आह—ब्रह्मात्माभेदस्येति। तथाभावेन—अबाधितत्वेनेत्यर्थः॥

नन्वेवं सम्यज्ज्ञानपरत्वे "यः सर्वेषां भूतानामन्तरतमः स म आत्मा" इत्येतावद्वक्तव्यं "अहं ब्रह्मास्मि" इत्यादिवत्, न तु इति विद्यादिति, ततश्च इतिशब्देन वस्तु तथाभूतं न भवति, किं तु तथा ज्ञातव्यमिति प्रतीयते, तादृशं पुरुषप्रयत्नाधीनज्ञानमेवोपासनम्, तथाविधिविरोधश्चेत्याशङ्क्य निषेधति—न चैवमिति। अत्र इतिर्न

[1] तथाभावे स—ख.

वाच्यम्; स्वरूपमात्रसमाप्तिपरत्वेन साधनविषयत्वेन चोपपत्तेः। छन्दसि व्यत्ययबाहुल्येन विधित्वसिद्धेश्च ॥

मोक्षस्य ध्रुवानुस्मृतिफलत्वाभावः

न च "स्मृतिप्रतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति ध्रुवानुस्मृतिध्यानक्रियाफलं मोक्ष उच्यते; साक्षात्कारफलत्वश्रुतिविरोधात् ॥

ध्रुवानुस्मृतेर्दर्शनरूपत्वशङ्कापरिहारौ

न च ध्रुवानुस्मृतिरेव दर्शनरूपोपसंहर्तव्या; "भिद्यते हृदयग्रन्थिः" "सर्वग्रन्थीनां विप्रमोक्षः" इत्यर्थप्रत्यभिज्ञानादिति

रत्नतूलिका

प्रकारवचनः, किं तु समाप्तिवचनः, तथा च ज्ञेयता आत्मस्वरूपमात्रे समाप्ता, न तत्र किञ्चिज्ज्ञेयमस्तीति न विरोधः, विधिश्च ज्ञानोपायस्य, न तु ज्ञानस्येति परिहरति—स्वरूपेति ॥

ध्रुवानुस्मृतीति। ध्रुवानुस्मृतिरूपं यत् ध्यानं तल्लक्षणक्रियाफलमित्यर्थः। साक्षात्कारेति। "भिद्यते हृदयग्रन्थिः........ तस्मिन् दृष्टे परावरे", "निचाय्य तं मृत्युमुखात्प्रमुच्यते" इत्यादिश्रुतिविरोधादित्यर्थः॥ ननु ध्यानस्यैवायमवस्थाविशेषो न तु पृथग्ज्ञानम्, अतो न विरोध इत्याशङ्क्य निषेधति—न च ध्रुवानुस्मृतिरेवेति। अर्थप्रत्यभिज्ञानादिति। प्रयोजनप्रत्यभिज्ञानादित्यर्थः। तथा चैकप्रयोजनार्थयोस्तयोर्भेदे विकल्पः समुच्चयो वा स्यात्। तदुभयमप्यनुपपन्नमित्यतो ध्रुवानुस्मृतेरेव दर्शनरूपत्व-

युक्तम्; स्मृतिप्रतिलम्भ इत्यादेः प्रत्यगात्मस्मृतिपरिशुद्धौ कामात्मकग्रन्थिविप्रमोक्षपरत्वेनार्थभेदात्।

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।"

इत्युक्तकामानामुत्तरवाक्ये—

"यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः।"

इति ग्रन्थिरूपत्वाभिधानात्। यथाहुः—

"कामा ग्रन्थिस्वरूपेण व्याख्याता वाक्यशेषतः॥" इति। तदर्थ एव चेह प्रत्यभिज्ञायते; सर्वशब्दान्मुचिग्रहणाद्ग्रन्थिबहुत्वोक्तेश्च। एवं सति निरन्तरायं ब्रह्मतत्त्वसाक्षात्कारे मुच्यते। तथा च श्रुतिः—"ततस्तु तं पश्यते निष्कलं ध्यायमानः" इति। स्मृतिश्च—

"यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रियाः।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः॥ इति।

रत्नतूलिका

मित्यर्थः। अर्थप्रत्यभिज्ञानमसिद्धमिति परिहरति—स्मृतिप्रतिलम्भ इत्यादेरिति। अस्तु कामानां ग्रन्थित्वम्, तथापि "स्मृतिप्रतिलम्भः" इत्यादिवाक्ये तेषामेव ग्रहणमिति कुतोऽवसीयत इत्यत आह—तदर्थ एवेति। न त्वविद्याग्रन्थिरित्यर्थः। कुत इत्यत आह—सर्वशब्दादिति। नन्वेतादृशग्रन्थिविमोको न प्रतिपाद्यः; अपुरुषार्थत्वादित्यत आह—एवं सतीति। तथा च साक्षात्कारद्वारा मुक्त्युपायत्वात्तस्यापि पुरुषार्थत्वमिति भावः। स्मृतौ युञ्जाना ध्यायिनः ज्योतिः पश्यन्तीत्यभिधानात् ध्यानस्य साक्षात्कारहेतुत्वमिति भावः॥

विपरीतभावनादिचित्तमलापनयनेन "दृश्यते त्वग्र्यया बुद्ध्या" इत्यादिश्रुतिसमर्पितसाक्षात्कारापेक्षितचित्तैकाग्र्योपकारव्यवधानेन च ध्यानस्य मुक्तिहेतुत्वायोगात् ॥

भक्त्येत्यत्र भक्तिशब्दार्थविवरणपूर्वकं भक्तेः परम्परया मुक्तिहेतुतोक्तिः

न च "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन! ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप! ॥"

इति परमात्मप्रवेशेऽपि भक्तिर्हेतुरुच्यते; यदि हीह विशिष्टनिदिध्यासनरूपा भक्तिरिष्येत, सा शास्त्रविज्ञानादिसाध्येति तत्साधनत्वाभिधानं द्विष्येत भक्त्या ज्ञातुं शक्यो द्रष्टुं चेति ।

रत्नतूलिका

एवं "स्मृतिप्रतिलम्भः" इति वाक्ये कामलक्षणग्रन्थिविमोक एव प्रतीयते, न त्वविद्याग्रन्थिविमोक इत्युक्तम् । इदानीं ध्यानसामर्थ्यपर्यालोचनायामपि तस्य न मुक्तिहेतुत्वमित्याह—विपरीतेति । नाहं ब्रह्मेति विपरीतभावनारूपे चित्तमले अपनीते वस्तुभूताभेदावभासो भवतीति भावः । तत्तत्कामरूपचित्तविक्षेपनिवृत्त्या तदैकाग्र्येण व्यवधानं वक्तुमैकाग्र्यस्य साक्षात्कारापेक्षितत्वं श्रुतिसिद्धमित्याह—दृश्यते त्विति ॥

ननु "भक्त्या त्वनन्यया शक्यः" इति स्मृतौ भक्तेः परमात्मप्रवेशलक्षणमुक्तिहेतुत्वमवगम्यते, सा च निदिध्यासनस्यावस्थान्तरमिति तस्य मुक्तिहेतुत्वमित्याशङ्क्य निषेधति—न च "भक्त्येति । अत्रोपात्ता भक्तिर्मुक्तिसाधनत्वेन त्वदभिमताया भक्तेरन्येति वक्तुं निदिध्यासनावस्थारूपभक्तिपरत्वे बाधकमाह —यदि हीति । विज्ञानादीत्यादिशब्देन मननं गृह्यते । का तर्हि भक्तिरत्रोपात्तेत्यत्राह—

तस्माच्छ्रुतमताधिगते ब्रह्मणि श्रद्धा चोत्कण्ठा च भक्तिरिह गृह्यते। न च सा परमात्मप्रवेशहेतुः। न चैवं भक्त्या शक्योऽहं प्रवेष्टुं चेति निर्देशानुपपत्तिः; अश्वेन शक्यो ग्रामो गन्तुं भोक्तुं चेतिवत् पारम्पर्येऽपि तथा निर्देशोपपत्तेः।

"भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥"

इति पारम्पर्यस्मरणाच्च ॥

ततो मामित्यत्र तत इत्यनेन भक्त्यपरामर्शः, प्रकृते तदर्थश्च

न च तदनन्तरशब्दापौनरुक्त्याय तत इति भक्तिः परामृश्यत इति वाच्यम्; तथापि "सप्तदशारत्निर्वाजपेयस्य यूपः"

## रत्नतूलिका

तस्मादिति। श्रद्धा—अस्त्यनेन श्रेय इति बुद्धिः। उत्कण्ठा—इच्छाविशेषः। सैव भक्तिरिह गृह्यतामित्याशङ्क्य, तथा सति न तवेष्टसिद्धिरित्याह—न च सेति। न चैवमिति। तस्याः प्रवेशहेतुत्वाभाव इत्यर्थः। प्रयोजकत्वेऽपि तथा निर्देश उपपद्यत इति सदृष्टान्तमाह—अश्वेनेति। पारम्पर्येति। भक्त्या ज्ञानं, तेन च परमात्मप्रवेश इति पारम्पर्यमित्यर्थः। अस्मिन्पक्षे मां तत्त्वतो ज्ञात्वा ततः अनन्तरं विशत इति ततः अनन्तरमित्यनयोर्व्याख्यानव्याख्येयरूपतेति भावः ॥

न च तदनन्तरेति। व्याख्यानस्यानतिप्रयोजनत्वात्पौनरुक्त्यमिति भावः। सप्तदशारत्निरिति। अयं दृष्टान्तस्तदधिकरणपूर्वपक्षन्यायेन। इत्थं तदधिकरणम्—"सप्तदशारत्निर्वाजपेयस्य यूपः" इति श्रुतम्। तत्किं सप्तदशारत्नित्वं वाजपेयसाधनभूतोर्ध्व-

इतिवत् ततो मां ज्ञात्वेत्यव्यवहितान्वयेनोक्तार्थस्यैवोत्तरार्थमनुवादोपपत्तेः। यतो मदभिज्ञानं मुक्तिसाधनं वृत्तं तत इत्यर्थेऽप्यपौनरुक्त्ये व्यवहितभक्तिपरामर्शायोगाच्च।

"पुरुषः स परः पार्थ! भक्त्या लभ्यस्त्वनन्यया।"

इत्यत्राप्यात्मभूतस्य साक्षात्कारातिरिक्तलब्ध्ययोगाच्च॥

रत्नतूलिका

पात्रद्वारा वाजपेयाङ्गम्? उत यूपद्वारा पश्वङ्गमिति संशये, "सप्तदशारत्निर्वाजपेयस्य" इत्यव्यवहितसम्बन्धे सति परिमाणस्य साक्षाद्वाजपेये निवेशाभावात्तदीयोर्ध्वपात्रद्वारा निवेशः, यूपशब्दश्च सादृश्यादूर्ध्वपात्रे वर्तत इति पूर्वपक्षे, यूपश्रुतेर्गौणत्वं मा भूदिति अव्यवहितसम्बन्धमनादृत्य सप्तदशारत्निर्यूप इत्येव सम्बध्यत इति वाजपेयसम्बन्धियूपद्वारा पश्वङ्गमिति सिद्धान्त इति। उक्तार्थस्येति। "भक्त्या मामभिजानाति" इत्युक्तार्थस्येत्यर्थः। ततो मदभिज्ञानाद्धेतोरित्यव्यवहितवृत्तहेतुपरामर्शे सम्भवति न व्यवहितभक्तिपरामर्श इत्याह—यत इति। ननु भक्तेरात्मलाभहेतुत्वं प्रतीयते, तल्लाभश्च मुक्तिरिति तद्धेतुत्वसिद्धिरित्यत आह—पुरुषः स पर इति। सर्वात्मभूतस्य परमात्मनोऽविद्यामात्रे[1]णालाभो वाच्यः, तल्लाभश्च तत्साक्षात्कार एवेति भक्तेस्तद्धेतुत्वमिति भावः॥

[2]अपि च प्रकृतिसम्बन्धलक्षणवरणभङ्ग एव मोक्षोपायस्योपयोगो वाच्यः; स च सम्बन्ध आविद्यकः, अन्यस्यानिरूपणात्, आविद्यकं सर्वं तत्त्वज्ञानैकनिवर्त्यम्, न तु क्रियानिवर्त्यम्; रज्जुसर्पादौ दर्शनात्; उपासनं च कर्म, न तु तत्त्वज्ञानरूपमित्यतो न तन्निवर्तक-

[1] ण लाभो—च. [2] अथ च—कुं.

### परमते उपासनस्य क्रियारूपतया मुक्त्यहेतुत्वम्

अपि च प्रकृतिसम्बन्धवरणापगमे निरवधिविकासिनित्यविज्ञानेन ब्रह्मस्वरूपगुणविभवानुभवो मोक्ष इति ते मतम्। तत्रोपासिक्रिया स्वगुणवरणभङ्ग एव हेतुरेषितव्या, मलप्रक्षालने मणिज्योत्स्नाप्रसरस्येव नित्यसिद्धात्मगुणविकासे पुंव्यापारानपेक्षणात् ॥

### बन्धस्य स्वाभाविकत्वकर्मनिबन्धनत्वयोर्दोषः

स तु प्रकृतिसम्बन्धरूपो बन्धो न स्वभाविकः; स्वभावस्यापरिहरणीयत्वेनोपासनावैयर्थ्यप्रसङ्गात्। स कर्मनिबन्धन इति चेत्, अथ कर्मसम्बन्ध एव किंनिबन्धनः? स देहसम्बन्ध-

### रत्नतूलिका

मिति न मुक्तिहेतुरिति साध्यसाधनस्वरूपालोचनेन दूषणान्तरमाह—अपि च प्रकृतीति। ब्रह्मस्वरूपं—सत्यज्ञानानन्दात्मकं, गुणाः—सर्वज्ञत्वादयः, विभवः—चराचरलक्षणं जगत्, तेषामनुभव इत्यर्थः। स्वगुणेति। स्वस्य—जीवस्य ये गुणाः—अपहतपाप्मत्वादयः, तेषां यद्वरणं—प्रकृतिसम्बन्धलक्षणं, तद्भङ्ग एवेत्यर्थः ॥

स सम्बन्धः किं स्वाभाविकः? उत कर्मनिबन्धनः? इति विकल्प्याद्यं निषेधति—न स्वाभाविक इति। तत्र हेतुमाह—स्वभावस्येति। द्वितीयं शङ्कते—स कर्मनिबन्धन इति। सोऽपि किं स्वाभाविकः? उत देहनिबन्धन इति विकल्प्याद्ये पूर्वोक्तदोष इत्यभिप्रेत्याऽऽह—कर्मसम्बन्ध इति। किमित्याक्षेपे। काका स्वभावस्य तन्निबन्धनत्वानुपपत्तिः। उपासनावैयर्थ्यादित्युक्तत्वादिति सूचयन् द्वितीयं शङ्कते—देहसम्बन्धेति। उक्तेऽर्थे सूत्रं संवादयति—

निबन्धनः, "अनुज्ञापरिहारौ देहसम्बन्धात्" इति सूत्रणादिति चेत्? स पुनः कर्मसम्बन्धनिबन्धन इतीतरेतराश्रयता। अन्धपरम्परा चानादित्वकल्पना ॥

बन्धे कर्मसम्बन्धमूलकत्वस्य प्रामाणिकत्वम्

अथ वा नान्धपरम्परा; "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्, अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्",

"शुभैराप्नोति देवत्वं निषिद्धैर्नारकीं गतिम्।
उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः ॥"

रत्नतूलिका

अनुज्ञापरिहाराविति। विधिनिषेधावित्यर्थः। ज्योतिरादिवदिति सूत्रशेषः। यथा अग्नित्वे समानेऽपि श्रोत्रियागाराग्नेः शुचित्वादुपादेयत्वं इतरस्य परिहार्यत्वं तथैव ब्रह्मांशत्वे ज्ञत्वे च समानेऽपि देहसम्बन्धात्कस्यचित्कर्मस्वधिकारः कस्यचिन्नेति सूत्रार्थः। स पुनरिति। देहसम्बन्धस्यैव प्रकृतिसम्बन्धत्वात्तस्य कर्मसम्बन्धनिबन्धनत्वस्य त्वयैवोक्तत्वादिति भावः। बीजाङ्कुरवदनादित्वान्न दोष इत्यत आह—अन्धपरम्परेति ॥

तयोरनादित्वेऽप्यविद्यामात्रत्वमेवेति वास्तवं दूषणमभिप्रेत्य पूर्वोक्तामन्धपरम्परामुद्धरति—अथ वेति। मूलप्रमाणसत्त्वादिति भावः। तदेवाह—तद्य इहेति। रमणीयाचारा रमणीयचरणाः। अभ्याशो ह यदिति निरर्थको निपातः। कपूयचरणाः कुत्सिताचारा इत्यर्थः। देहसम्बन्धस्य कर्मसम्बन्धनिमित्तत्वे श्रुतिस्मृती प्रमाणमुक्तम्। कर्मसम्बन्धस्य देह-

इत्यादौ प्रत्यक्षमूलदेहसम्बन्धाश्रयपुण्यापुण्यकर्मनिमित्तसदसद्देह-सम्बन्धप्रतिपादनात् ॥

### देहादिसम्बन्धस्याविद्यकता

तथापि देहसम्बन्धो नाविद्यारूपतामतिवर्तते । तथैव क्लेशमूलः कर्मसम्बन्धोऽपि भवितुमर्हति ; असङ्गाविक्रियात्मनोऽन्यादृशसम्बन्धानिरूपणात् ॥

### देहसम्बन्धस्य स्वस्वामिभावताद्यनुपपत्तिः

न च स्वस्वामिभावः ; देहेन्द्रियादावात्मत्वविभ्रमस्य सर्वजनीनत्वात् । तन्निमित्तसम्बन्धस्यापि निमित्तान्तरसम्बन्धाधीनत्वेऽन्धपरम्पराप्रसङ्गाच्च ॥

## रत्नतूलिका

सम्बन्धनिबन्धनत्वे प्रत्यक्षं प्रमाणमाह—**प्रत्यक्षेति** ॥

वास्तवं दूषणमाह—**तथापीति। क्लेशेति।** "अविद्यास्मिता-रागद्वेषाभिनिवेशाः पञ्च क्लेशाः" इति योगैरुक्ताः कर्माशयस्य मूलमिति भावः। ननु संयोगादिसम्बन्धोऽस्तु ; किमविद्यारूपत्वाङ्गी-कारेणेत्यत आह—**असङ्गाविक्रियेति।** संयोगाङ्गीकारे—

"उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्"

इति न्यायेनात्मनो विकारापत्तिः। तादात्म्याङ्गीकारे असङ्गत्वमवि-क्रियत्वं च न स्यादिति भावः॥ **आत्मत्वविभ्रमस्येति।** नात्र देह-योगादिः स्वस्वामिभावः, तथा सति स्वभूते गवादावेव तादृशविभ्रमो न स्यादिति भावः। किं च स्वस्वामिभावोऽपि लोके सम्बन्धान्तर-निमित्तको दृष्टः, यथा गवादौ क्रयक्रेतृभावादिः, सोऽपि नात्मनः स्वाभाविक इति निमित्तान्तरसम्बन्धाधीनो वाच्यः, तथा चान्धपरम्परा ; देहकर्मसम्बन्धयोरिवात्र मूलप्रमाणाभावादिति दूषणान्तरमाह—**तन्निमि-त्तेति।** स्वस्वामिभावस्य निमित्तभूतसम्बन्धस्यापीत्यर्थः ॥

**अविद्यासम्बन्धस्यात्मस्वभावत्वाद्यनुपपत्त्या स्वनिबन्धनत्वम्**

न चाविद्यासम्बन्धोऽप्यात्मनः स्वभावः ; विद्यया तद्बाधे स्वभावहानप्रसङ्गात् । यथाहुः—

"स्वभावाद्विनिवृत्तोऽर्थो निःस्वभावः खपुष्पवत्"॥ इति। न खल्वौष्ण्यप्रकाशविनाशेऽप्यग्निरवतिष्ठत इति युक्तिमत्। किन्तु सोऽप्यविद्यैव। न चैवमात्माश्रयादिदोषः ; असङ्गस्यात्मनः सम्बन्धापादनस्वभावाया एव तस्या अनादिसिद्धत्वात् ॥

रत्नतूलिका

ननु देहादिसम्बन्धस्याविद्यामयत्वे तत्सम्बन्धः किमात्मनः स्वभावनिबन्धनः? किं वा निमित्तान्तरसम्बन्धनिबन्धनः? किं वा स्वनिबन्धन इति विकल्प्याद्यं दूषयति—न चाविद्यासम्बन्धोऽपीति। उक्तमर्थं दृष्टान्तेन द्रढयति—न खल्विति। द्वितीयनिराकरणपूर्वकं तृतीयमङ्गीकरोति—किं तु सोऽपीति। अविद्यैव। न तु निमित्तान्तर-सम्बन्धाधीनः; अन्धपरम्परापत्तेरिति भावः। किं स्वयमेव स्वसम्बन्धे हेतुः? उताविद्यान्तरमिति? स्वस्य स्वसम्बन्धहेतुत्वे आत्माश्रयः, अविद्यान्तरानिबन्ध[1]नत्वे तत्सम्बन्धस्य स्वनिबन्धनत्वे अन्योन्याश्रयः, तत्राप्यविद्यान्तरगवेषणायामनवस्थाद्यापत्तिरित्याशङ्क्य निषेधति—न चैवमिति। आदिपदादन्योन्याश्रयादिपरिग्रहः। स्वेनैव स्वसम्बन्धः, न चैवमात्माश्रयः; अविद्यातत्सम्बन्धयोरनादित्वेनोत्पत्तौ तदभावात्, नापि ज्ञप्तौ ; अविद्यासिद्धिदशायामेव धर्मिग्राहकमानेनासङ्गस्यात्मनः सम्बन्धापादकत्वेन तत्सम्बन्धितयैवानादिसिद्धौ दोषाभावात्, अविद्या-तत्सम्बन्धयोरिव तद्भ्रमस्याप्यनादित्वादिति परिहरति—असङ्गस्येति ॥

---

[1] नत्वे अन्योन्याश्रयः—कुं.

### सोदाहरणं चिदात्मनोऽविद्यासम्बन्धस्य स्वरूपप्रकाशता

स चायं चिदात्मनोऽविद्यासम्बन्धस्तच्छायापत्त्याभेदेन तत्प्रकाशात्मतैव, यथांशुमालिमरीचिपटलस्य जलच्छायापत्त्याभेदेन तत्प्रकाशात्मता तद्वत् ॥

### चिदात्मनोऽविद्यासम्बन्धतो जीवभावतः संसारित्वादिकम्

स चायमविद्यामनुबध्नन् जीवो नाम अनादिसिद्धाविद्याकामकर्माशयानुशयी हायंहायमुपादायमुपादायं चानेकदेहसम्बन्धप्रबन्धारूढो दुरन्तानन्तदुःखोपसृष्टः संसारी विविधकर्मज्ञानाधिकारी स्वर्गापवर्गयोग्यो भवति ॥

### रत्नतूलिका

ननु प्रकाशस्वभावस्यात्मनः कथमविद्यासम्बन्धः ? सम्बन्धे वा न किञ्चिदपि प्रकाशेत ; विरोधिसम्बन्धे प्रकाशस्वरूपस्यैवाभावादित्यत आह—स चायमिति । तच्छायापत्त्या—अविद्याच्छायापत्त्या । अभेदेन—अविद्यातादात्म्येन । न हि स्वरूपप्रकाशस्याविद्याविरोधित्वम् ; तस्य सर्वविभ्रमसहत्वात् । किं तु स्वमात्रावसितप्रकाशस्यैव । तादृशत्वं च प्रकाशस्य तत्त्वसाक्षात्काराधीनमिति भावः । एवमविद्यायाः स्वरूपज्ञानादिविरोधे सति तस्य तत्प्रकाशतालक्षणः सम्बन्धः सम्भवतीति दृष्टान्तमुखेन द्रढयति—यथेति । अथ वा भेदेनेति च्छेदः । यथा सौरालोकस्य जलप्रकाशरूपेण महाप्रकाशाद्भेदः तद्वत्प्रकाश्याविद्यातादात्म्यापत्त्या तत्प्रकाशरूपेण स्वरूपप्रकाशाद्भेदापत्तिरिति ॥

नन्वेवं परमात्मनस्तत्सम्बन्धे जीवस्य तत्त्वसाक्षात्कारेण कथं तन्निवृत्तिः ? व्यधिकरणत्वादित्यत आह—स चायमविद्यामिति । अविद्याकामकर्मणामाशयः—वासना, तदनुशयी—तदनुसारीत्यर्थः । हायं हायं त्यक्त्वा त्यक्त्वा । उपादायमुपादायम् उपादायोपादायेत्यर्थः ।

## अविद्यामयबन्धस्य सोदाहरणं कर्माविनाश्यत्वं, तत्त्वसाक्षात्कारनाश्यता च

सोऽयमात्मनः प्रकृतिसम्बन्धरूपो बन्धोऽविद्यात्मको न मनोवाक्कायनिर्वर्तनीयेन कर्मणा निवर्तितुमर्हति ; "न रज्ज्वारोपितः सर्पो घण्टाघोषान्निवर्तते" इति न्यायात् । किन्तु रज्जुसर्पादिरिव वस्तुतत्त्वसाक्षात्कारेणैवेति साम्प्रतम् ॥

## मुक्तेरुपासनासाध्यत्वे दोषः

अपि चैवमुपासिक्रियासाध्यत्वे मुक्तेरनित्यत्वप्रसङ्गः ; देवभूयादिवत् यत्क्रियासाध्यं तदनित्यमिति व्याप्तेः ; "पुण्यचितो लोकः क्षीयते" इति श्रुतेश्च ॥

## रत्नतूलिका

तथा चाविद्यासम्बन्धनिब[1]न्धनः परमात्मन एव जीवभाव इति नोक्तदोष इति भावः ॥

अस्त्वेवं प्रकृतिसम्बन्धोऽविद्यामयः, तथाप्युपासनाया मुक्तिहेतुत्वाभावे किमायातमित्यत आह—सोऽयमात्मन इति । उपासनं च मानसं कर्मेति पूर्वमेवोक्तमिति भावः ॥

एवं प्रकृतिसम्बन्धवरणभङ्गरूपमोक्षस्योपासनासाध्यत्वं नास्तीत्युक्तम् । इदानीं साध्यत्वमङ्गीकृत्य दूषणान्तरमाह—अपि चैवमिति । मुक्तिरनित्या, क्रियासाध्यत्वात्, [2]देवताभाववदित्यनुमाने अप्रयोजकत्वमाशङ्क्य निरुपाधिक[3]व्याप्तिलक्षणं तर्कमाह—यत्क्रियासाध्यमिति । श्रुत्युपोद्बलितत्वादनुमानस्य नाप्रयोजकत्वमित्याह—पुण्यचित इति ॥

---

[1] न्धः—च. [2] देवभाव—कुं. [3] व्याप्तिभङ्गलक्ष—च.

### कृतकानित्यत्वनियमे परकीयव्यभिचारशङ्का

अथ प्रकृतिसम्बन्धकर्माविद्यावरणनिवृत्तिरुपासनाजन्या नानित्या। अन्यथा प्रायश्चित्तक्रियासाध्यपापनिवृत्तेरनित्यत्वे पापोन्मज्जनप्रसङ्गेन प्रायश्चित्तसातत्यप्रसङ्गात्। अत एव न्यायश्चाभासः॥

### कृतकानित्यत्वनियमे परकीयश्रुतिबाधोद्भावनम्

या क्रिया सा न स्वर्गसाधनमिति न्यायस्य "स्वर्गकामो यजेत" इत्यादिश्रुत्येव "तमेवं विद्वानमृत इह भवति", "तयोर्ध्वमायन्नमृतत्वमेति" इत्यादिश्रुत्या तस्य बाधितत्वाच्च॥

### कृतकानित्यत्वनियमबाधकश्रुत्या तत्समानार्थकश्रुत्यन्तर-सङ्कोचोद्भावनम्

अत एव श्रुतिरपि ब्रह्मोपासनातिरिक्तपुण्यचितलोक-

### रत्नतूलिका

प्रायश्चित्तसाध्यपापध्वंसे व्यभिचारान्न व्याप्तिरित्यभिप्रेत्य शङ्कते—अथेति। प्रकृतिसम्बन्धरूपं कर्माविद्यारूपं च यद्वरणं तन्निवृत्तिरित्यर्थः। ननु तत्रापि साध्यसत्त्वान्न व्यभिचार इत्यतो बाधकमाह—अन्यथेति। अत एवेति। यतो व्यभिचारेण व्याप्तेराभासता अत एवेत्यर्थः॥

एवं व्याप्यत्वासिद्धिमुक्त्वाऽऽगमबाधमप्याह—या क्रियेति। श्रुत्येति। ज्योतिष्टोमेनेति वाक्येनेत्यर्थः॥

अत एवेति। यतः श्रुत्या अनुमानस्य बाधः, अतस्तत्समानार्थकश्रुतेरपि सङ्कोच इत्यर्थः। ननु कृतकत्वन्यायोपोद्बलितया "पुण्यचितो लोकः क्षीयते" इति श्रुत्यैव "तमेवं विद्वान्" इत्यादे-

विषया। "यदि ह वा अप्यनेवंविन्महत्पुण्यं करोति तद्धा-स्यान्ततः क्षीयते", "स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते"[1] इत्याद्युपासनाकर्मणो[2]ऽक्षयश्रुत्यन्तरात् ॥

परमते आवरणनिवृत्तावप्यात्मनः कर्मफलभोगोपपत्तिः

उपासनयावरणनिवृत्तौ चात्मनः स्वाभाविकसत्यसङ्कल्पादिगुणाविर्भावे छन्दतो नानादेहभोगोपकरणसर्गसंहारेऽप्यविरोधात् ॥

परमते उपासनातारतम्यतो फलतारतम्यशङ्कासमाधानम्

न चैवमपि प्रायणकालपरिमाणानियमेन तदवधिविधेयोपासनापरिमाणानियमान्मुक्तौ तरतमभावप्रसङ्गः ।

रत्नतूलिका

राभूतसम्प्लवस्थानावाप्त्यभिप्रायत्वं किं न स्यात्? प्रायश्चित्तस्थलेऽपि दुःखप्रागभावस्यैव परिपाल्यतया पापध्वंसस्य तत्साध्यत्वाभावेन तत्र व्यभिचाराप्रसङ्गेन न्यायस्यापि समीचीनत्वादित्यत आह—यदि ह वा इति। आहत्य क्षयाभाववचने सत्याभूतसम्प्लवनाभिप्रायत्वानुपपत्तेरिति भावः॥

ननु कर्माविद्यावरणनिवृत्तौ कथं "स यदि पितृलोककामो भवति" इत्यादिश्रुतिप्रतिपादितभोगः स्यात्? तस्य कर्मसाध्यत्वादित्यत आह—**उपासनयेति**। उपासनाया न गुणाविर्भावे व्यापार इति द्योतयितुं स्वाभाविकेति विशेषणम्। तथा च सांसारिकभोगे तदपेक्षायामपि सत्यसङ्कल्पस्य तदुपनतभोगे न तदपेक्षेति भावः॥ नन्वेवं क्रियासाध्यत्वप्रयुक्तानित्यत्वाभावेऽपि तारतम्यप्रयुक्तानित्यत्वं स्यादित्याशङ्क्य निषेधति—**न चैवमपीति**। नन्वेकस्य साधनस्य स्वल्पदीर्घकालानुष्ठानमात्रेण कथं फले तारतम्यम्? तथा सति अग्निहोत्रादीनामपि कुशलाकुशलाभ्यामल्पदीर्घकालानुष्ठानेन फले तारतम्यं स्यादित्यत आह—**तदवधीति**। प्रायणावधीत्यर्थः। युक्तमग्निहोत्रादौ धृष्ट्या-

---

[1] इत्युपासना—ख. [2] ऽक्षयत्वश्रु—ख.

अग्निहोत्रज्योतिष्टोमादिसाधनतारतम्यस्य स्वर्गतारतम्यप्रयोजकत्वकल्पनादिति वाच्यम्; ध्येयब्रह्मसाक्षात्कारपरिपाकावधिनियमात्पुनरप्रस्मरणेनान्त्यप्रत्ययाय तु प्रायणान्तानुवृत्तिराद्रियते।

"अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम्।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥

इति स्मरणात् ॥

परमते ब्रह्ममीमांसायाः पूर्वतन्त्रगतार्थत्वमाशङ्क्य समाधानम्

न चैवमदृष्टफलोपासनाविधिनिष्ठे वेदान्ते विधिवृत्त-

रत्नतूलिका

दानादिमार्जनान्ताः क्रियावयवा इयन्त इति निश्चयादनुष्ठानकालतारतम्येऽपि न साधने तारतम्यमिति; इह त्वियत्य उपासनाव्यक्तयः साधनमिति निर्णयाभावादनुष्ठानकालतारतम्ये साधनतारतम्यमवर्जनीयमिति फलेऽपि तत्स्यादिति भावः। एतदेव दृष्टान्तोक्त्या द्रढयति— **अग्निहोत्रेति**। अन्यथा लघूपायस्यैवानुष्ठानं स्यादिति ज्योतिष्टोमादेरनुष्ठानमेव न स्यादिति भावः। इदं च "फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात्" इति सूत्रोक्तमिति ध्येयम्। अत्रापि नियामकमस्तीति परिहरति—**ध्येयब्रह्मेति**। तथा च साक्षात्कारावधिकोपासनारूपसाधनसम्पत्तये कालतारतम्येऽपि न साधनरूपे तारतम्यमिति भावः। ननु तर्हि स्वल्पकालेन तादृशसाधननिष्पत्तौ प्रायणान्तमुपासनानुष्ठानं न स्यादित्यत आह— **पुनरिति**। तुशब्देन साधनसम्पत्त्यर्थता व्यावर्त्यते। अन्त्यप्रत्ययापेक्षायां मानमाह—**अन्तकाले चेति** ॥

वेदान्तानामुपासनाविधिनिष्ठत्वे पूर्वतन्त्रेणैव गतार्थत्वाच्छास्त्रानारम्भप्रसङ्ग इत्याशङ्क्य निषेधति—**न चैवमदृष्टेति**। सिद्धान्ते तु

मीमांसयैव विद्याविधेरपि निरूपितचातूरूप्यतया तद्विचारानारम्भप्रसङ्गः; सिद्धप्रामाण्यब्रह्मस्वरूपविद्याभेदाभेदविकल्पसमुच्चयादिप्रतिपादनस्य न्यायान्तरापेक्षतया तद्व्युत्पादनाय तदारम्भोपपत्तेरिति ॥

परकीयावरणनिवृत्तेः क्रियासाध्यायाः सविमर्शमनित्यत्वोपपादनम्

उच्यते—न तावत्तन्निवृत्तिस्तदुपादानावस्थान्तरमित्युक्त्वा प्रकृतिसम्बन्धनिवृत्तिनित्यत्वमु[1]च्यते; क्रियाजन्याया घटादिनिवृत्तेः कपालाद्यवस्थाया अनित्यत्वात्। कर्माविद्या च तवात्मोपादानेति तन्निवृत्तिरात्मावस्थान्तरं क्रियया साध्यते।

रत्नतूलिका

दृष्टफलसाक्षात्काराय विचार आरम्भणीय इति भावः। निरूपितचातूरूप्यतयेति। उत्पत्तिविनियोगप्रयोगाधिकारविधिभेदेन चातूरूप्यमित्यर्थः। तत्रानिर्णीतानां सिद्धप्रामाण्यब्रह्मस्वरूपादीनामुत्तरतन्त्रे निर्णेयतया तादर्थ्येन न्यायान्तरव्युत्पादनाय ब्रह्ममीमांसारम्भोऽर्थवानिति परिहरति—सिद्धप्रामाण्येति ॥

प्रकृतिसम्बन्धवरणनिवृत्तेः क्रियासाध्यत्वेऽपि नित्यत्वं वदतः का निवृत्तिरभिप्रेता? किमुपादानस्यावस्थान्तररूपा? किं वार्थान्तररूपेति विकल्प्याद्यं दूषयति—न तावदिति। प्रकृतिसम्बन्धनिवृत्तिरूपावस्था अनित्या, क्रियाजन्यावस्थात्वात्, कपालाद्यवस्थावदित्यनुमानमभिप्रेत्य दूषयति—क्रियाजन्याया इति। एवमात्मानात्मानिर्धारणेन क्रियाजन्यमवस्थान्तरमनित्यमित्युक्तम्। इदानीमात्मन उपादानत्वप्रतिपादनमुखेन तत्र विकारित्वाद्यापत्तिं दर्शयति—कर्माविद्या चेति। कर्मजन्यादृष्टविशेषरूपाया अविद्याया आत्मोपादानत्वादिति भावः। तवेत्यनेन सिद्धान्ते अहमर्थोपादानत्वमेव, नात्मोपादानत्वमिति सूचयति।

---

[1] च्येत–ख.

तथा च विक्रियापत्तेरात्मनोऽविकारित्वशास्त्रमुपरुध्येत "अविकार्योऽयमुच्यते" इत्यादि । अनित्यत्वं च प्रसज्येत, विकारित्वान्मृदादिवत् । अथार्थान्तरमेव निवृत्तिरिष्येत, तदपि कार्यत्वादनात्मत्वाच्च घटादिवदनित्यं स्यात् । आत्मातिरिक्तकालादेरपि नित्यत्वासम्प्रतिपत्तेरव्यभिचारात् ॥

### कार्यत्वादाद्युपाधिविवेचनं, तस्यादूषकता च

न च साधनावच्छिन्नसाध्यव्यापकं भावत्वमुपाधिः; तद्व्यतिरेकस्य साध्यव्यतिरेकाप्रयोजकत्वात्, प्रागभावे व्यभि-

### रत्नतूलिका

अविकारित्वशास्त्रमेव दर्शयति—अविकार्योऽयमुच्यत इति । द्वितीयमाशङ्कते—अथेति । ननु ध्वंसोऽनित्यः, कार्यत्वादनात्मत्वाद्वा, घटादिवदिति हेतुद्वये अनात्मत्वादितिहेतोः कालाकाशपरमाण्वादिषु व्यभिचारमाशङ्क्य साध्यस्यापि सत्त्वान्न व्यभिचार इत्याह— आत्मातिरिक्तेति ॥

यत्र यत्रानित्यत्वं तत्र तत्र भावत्वं नास्ति ; प्रागभावे व्यभिचारादतः साधनावच्छिन्नेति साध्यं विशेषितम् । तथा च कार्यत्वावच्छिन्नानित्यत्वं यत्र तत्र भावत्वमिति भवत्युपाधिरिति भावः । उपाधेर्द्वेधा दूषकत्वम्, साध्यव्यतिरेकोन्नायकतया, हेतोस्तद्व्यभिचारोन्नायकतया वा । तत्राद्यं नास्तीत्याह— तद्व्यतिरेकस्येति । ध्वंसोऽनित्यत्वाभाववान्, भावत्वाभाववत्त्वादिति तद्व्यतिरेकेण साध्यव्यतिरेकसाधने प्रागभावे व्यभिचारादित्यर्थः । ध्वंसः कार्यत्वावच्छिन्नानित्यत्वाभाववान्, भावत्वाभाववत्त्वादित्यनुमानम् । तत्र पूर्वोक्तं प्रागभावे व्यभिचारं परिहरन् पक्षे विवक्षितसाध्यसिद्धिप्रकारं दर्शयति — प्रागभाव इति ।

चारात्। न चावच्छिन्नसाध्यव्यतिरेकः साध्यः प्रागभावे कार्यत्वाभावप्रयुक्तः स्यात्, पक्षे च कार्येऽनित्यत्वाभावप्रयुक्त इति वाच्यम्; नित्यत्वानित्यत्वविवादे विशिष्टव्यतिरेकसाधनस्याप्राप्तकालत्वात्। विशिष्टाभावस्यातिरेके सविशेषणे हीति न्यायस्य ध्वंसादिविषयत्वेनानित्यत्वाभावविषयतयैवानुमितिपर्यवसानकल्पनायोगात्। तदनतिरेके च प्रागभावे व्याप्तिप्रसङ्गात्। अनित्यत्वे सत्यपि तत्र भावत्वाभावात्। अत एव नानित्यत्वव्यापकव्यभिचारित्वेन कार्यत्वस्य तद्व्यभिचारित्व-

## रत्नतुलिका

अनित्यत्वाभावप्रयुक्त इति छेदः। अप्राप्तकालत्वादिति। अनपेक्षितसाधनत्वादित्यर्थः। किं विशिष्टाभावो विशेषणाभावविशेष्याभावाभ्यामतिरिक्तः, किं वा तावेवेति विकल्प्याद्यं दूषयति—**विशिष्टाभावस्येति**। अतिरेकपक्षे विशिष्टाभावस्यान्यतरसत्त्वे नान्यतराभावमादाय पर्यवसानम्; अन्याभावस्यान्याभावमादाय पर्यवसानायोगात्, किं तु विशेषणाभावो विशेष्याभावो वा विशिष्टाभाव इति पक्षे। इममेव पक्षमवलम्ब्य "सविशेषणे हि" इति न्यायप्रवृत्तिर्नत्वन्यमिति भावः। द्वितीय आह—**तदनतिरेके चेति**। अत्र पक्षे ध्वंसः कार्यत्वे सत्यनित्यत्वाभाववान्, भावत्वाभाववत्वादित्युपाधिव्यतिरेकेण साध्यव्यतिरेकः साध्यमानः किं कार्यत्वव्यतिरेकः? किं वा अनित्यत्वव्यतिरेकः? अथवा उभयव्यतिरेकः? यद्वा अन्यतरव्यतिरेक इति। नाद्यः; बाधादिति दूषणमभिप्रेत्य द्वितीयतृतीयौ दूषयति—**प्रागभाव इति**। तत्र हेतुसाध्याभावौ दर्शयति—**अनित्यत्वे सत्यपीति**। न चतुर्थः; अन्यतरसन्देहाभावेन तदभावसाधने अप्राप्तकालत्वादिति भावः। द्वितीयमपि नेत्याह—**अत एवेति**। यतो भावत्वस्य न साध्यव्यापकता अत इत्यर्थः। अत्रापि कार्यत्वमनित्यत्व-

मनुमेयम्। तथा च सूत्रकारः—"नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः" इति जीवस्य जन्माभावे नित्यत्वं हेतुमाचक्षाणो ध्वंसस्यान्यस्य वा जनिमतोऽनित्यत्वं मन्यते। अन्यथा तस्य ध्वंसे व्यभिचारात्। न च नियतसत्त्वमेव विनाशानवच्छिन्न-सत्ताकत्वं नित्यत्वम्, "त्यब्नेर्ध्रुवे" इति भवत्यर्थे त्यब्विधानात्, तथा च ध्वंसस्य जनिमत्त्वेऽपि निरुक्तनित्यत्वाभावादेवाव्यभि-

## रत्नतूलिका

व्यभिचारि, अनित्यत्वव्यापकभावत्वव्यभिचारित्वात् इति साधने हेत्वसिद्धिः। भावत्वस्य [1] साध्याव्यापकत्वादिति भावः। नात्मा जीव उत्पद्यते, कस्मात् अश्रुतेः, किं चोत्पत्तिरेवास्य न सम्भवति, नित्यत्वाच्च। चकारादजत्वादिभ्यश्च, केनास्य नित्यत्वमवगम्यत इति चेत्ताभ्यः "न जीवो म्रियते", "न जायते म्रियते वा विपश्चित्", "अजो नित्यः शाश्वतोऽयं पुराणः" इत्यादिश्रुतिभ्य इति सूत्रार्थः। अनेन सूत्रेण कथं जनिमतो नित्यत्वाभावसिद्धिरित्यत उपपादयति—जीवस्येति। अन्यथेति। ध्वंसस्य नित्यत्व इत्यर्थः। व्यभिचारादिति। जीवो नोत्पद्यते, नित्यत्वादिति हेतोर्ध्वंसे व्यभिचारः स्यात्। अतो नित्यत्वहेतोस्तत्राभावादेव न व्यभिचार इति सूत्रकाराभिप्राय इति भावः। ध्वंसे सूत्रोक्तहेत्वभावमाशङ्क्य निषेधति—न च नियत-सत्त्वमिति। तस्य व्याख्या विनाशानवच्छिन्नेत्यादि। उक्तेऽर्थे कात्यायनवाक्यं प्रमाणयति—त्यब्नेरिति। नेः—नि इति निपातात् त्यबिति प्रत्ययो भवति ध्रुवे—नियतसत्तायां वाच्यायामिति तस्यार्थः। एवं हेतोरर्थमुक्त्वा ध्वंसे व्यभिचारं परिहरति—तथा चेति। निरुक्तेति। सत्तायोगित्वस्य तत्राभावादित्यर्थः। किं नियतसत्त्व-

[1] साध्यव्यापक-कं.

चार इति वाच्यम्; तत्र ध्वंसे नित्यपदप्रयोगविरोधात्, लाघवे-नोत्तरावधिविधुरत्वस्याविनाशित्वस्य नियतत्वस्यैव वा नित्य-शब्दार्थत्वाच्च। ध्वंसेऽपि स्वतोऽन्यतो वानुपाख्यत्वव्यावृत्तिरूप-भवत्यर्थसम्भवाच्च ॥

ध्वंसे प्रकारान्तरेणानित्यत्वोपपादनम्

अथ वा तत एव ध्वंसस्यानित्यत्वम्; नित्यपदप्रवृत्ति-निमित्तनियतसत्ताभावात्, निःस्वरूपस्य तस्याविनाशित्व-विकल्पायोगाच्च ॥

रत्नतूलिका

मिति सत्ताजातियोगो विवक्षितः? उत निरुपाख्यव्यावृत्तं प्रमाणसम्बन्धा-र्हत्वमिति विकल्प्याद्यं दूषयति—तत्रेति। सत्तायोगित्वपर्यन्तवादिन इत्यर्थः। प्रवृत्तिनिमित्ताभावादिति भावः। नन्वात्मादौ ध्वंसादौ चान्यदन्यदेव प्रवृत्तिनिमित्तमतो न प्रयोगानुपपत्तिरित्यत आह—लाघवेनेति। नानार्थत्वे तत्तद्धर्मावच्छेदेन सम्बन्धग्रहणे गौरवमिति भावः। अथ वा न सत्तायोगित्वपर्यन्तं प्रवृत्तिनिमित्तम्; गौरवात्, किं तु नियतत्वादिकमेवेत्याह— लाघवेनेति। उत्तरावधिविधुरत्वस्येत्यस्य व्याख्या—अविनाशित्वस्येति। द्वितीय आह—ध्वंसेऽपीति। अवस्थान्तरं ध्वंस इति पक्षे स्वत एवोपाख्यायते ज्ञायते, अर्थान्तरमिति पक्षे अन्यतः प्रतियोगित इति। तथा च प्रमाणार्हत्वमेव निरुपाख्य-व्यावृत्तरूपं सत्त्वं भवत्यर्थत्वेन विवक्षितम्। अन्यथा ध्वंसोऽस्तीति प्रयोग-ज्ञानयोरनुपपत्तिः स्यात्। तथा च तत्र व्यभिचारस्तदवस्थ इति भावः॥

पक्षद्वयेऽपि प्रकारान्तरेण दूषणमाह —अथ वेति। सौत्रहेतो-र्ध्वंसे व्यभिचारं परिहर्तुं तद्व्यावृत्तनित्यत्वनिर्वचनं कुर्वता त्वयैव तत्र नित्यत्वं त्याजितमिति व्याघात इति भावः। द्वितीयं तु ध्वंसेऽपि वर्तत इति व्यभिचार इत्यभिप्रेत्य तत्र तद्वृत्त्यनङ्गीकारे बाधकमाह—निःस्वरूपस्येति। विकल्पायोगादित्युक्त्या वस्तुनोऽविनाशित्वं

### कृतकानित्यत्वनियमे परकीयव्यभिचारशङ्कानिरासः

न चैवं पापध्वंसनिवृत्तौ पापोन्मज्जनप्रसङ्गः; उपादानावस्थान्तररूपध्वंसवादेऽवस्थान्तरसामग्रीसन्निपाते तदप्रसङ्गात्। पापसामग्रीसन्निपाते च पापजातीयमवस्थान्तरमेव, न तु ध्वस्तमेवोन्मज्जति; अवस्थान्तरप्रतिबन्धात्। अत एवातिरिक्तध्वंसवादेऽपि प्रतियोग्युन्मज्जनं प्रत्युक्तम्; विनष्टघटायां मृदि घटसामग्रीसमवधानेऽपि सजातीयोत्पत्तिप्रतिबन्धात्। न च ध्वंसप्रागभावकालातिरिक्तकालस्य प्रतियोगिकालत्वनियमः; अप्रयोजकत्वात्, लाघवेन स्वविरोधिकालातिरिक्तकालस्यैव प्रतियोगिकालत्वाच्च। ध्वंसध्वंसस्यापि विरोधित्वस्य फलबलकल्प्यत्वात् ॥

### रत्नतूलिका

नास्तीति द्योतयति। तथा च ध्वंसस्यापि विनाशोऽस्तीति वदतो ममैतादृशनित्यत्वाङ्गीकारो न बाधक इति भावः ॥

यदुक्तं पापध्वंसस्यापि नाशे पापोन्मज्जनप्रसङ्गेन प्रायश्चित्तसातत्यं स्यादिति, तदनूद्य निषेधति—न चैवमिति। कर्माविद्यावरणनिवृत्तिवदित्यर्थः। अवस्थान्तरसामग्रीति। पापध्वंसरूपावस्थान्तरसामग्रीसमवधाने न पापरूपावस्थान्तरप्राप्तिः। न हि मृदो घटावस्थासामग्रीसमवधाने न शरावादिरूपावस्थान्तरप्राप्तिरित्यर्थः। पापजातीयमिति। ध्वस्तपापजातीयमित्यर्थः। अवस्थान्तरेति। मृदादौ तथा दृष्टत्वादिति भावः। अत एवेति। यतः कार्यान्तरं प्रतिबन्धकम्, तच्च कार्यमुपादानस्यावस्थान्तरं तदपेक्षया अवस्थान्तरं वेत्यन्यदेतत् अत एवेत्यर्थः। अतश्शब्दार्थमाह—विनष्टघटायामिति। नन्वेवमपि ध्वंसप्रागभावयोरेव विरोधित्वात्तदनाधारकालस्य प्रतियोग्याधारत्वनियम इत्यत आह— ध्वंसध्वंसस्यापीति ॥

सिद्धान्तेऽविद्यानिवृत्तौ परकीयावरणनिवृत्तिवैषम्यम्

न चैवं विद्यया अविद्यादिध्वंसस्याप्यानित्यत्वापत्तिः; तस्य क्रियाव्याप्यत्वाभावेनाकार्यत्वात्। पुनर्ब्रह्मणोऽवस्थान्तरापादकसामग्र्यन्तराभावाच्च। वस्तुतस्तु विद्यया नाविद्यादेर्ध्वंसः, किन्तु बाध एवेत्यग्रे वक्ष्यामः ॥

कृतकानित्यत्वनियमे परकीयबाधकोद्भावननिरासः

न चैवमात्मोपासनासाध्यब्रह्मलोकफलस्याप्यनित्यत्वे "न च पुनरावर्तते" इत्यादिविरोध इति वाच्यम्; "स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" इति श्रुतेर्ब्रह्मलोक एव साक्षात्कृतात्मतत्त्वस्य परान्तकाले कार्यात्यये तदध्यक्षेण

रत्नतूलिका

न चैवमिति। उपासनासाध्यध्वंसस्येवेत्यर्थः। अकार्यत्वादिति। तथा च तस्यैव तत्प्रयोजकत्वाज्ज्ञानसाध्ये तस्मिन् पुंव्यापाररूपक्रियासाध्यत्वाभावादिति भावः। पुनरिति। अविद्यायाः सवासनाया नाशात्। तत्र तु स्त्र्यादिभोगप्रदसामग्र्या एवावस्थान्तरापादकत्वादिति भावः। बाध एवेति। "स चास्तिनास्तिप्रत्ययानर्हत्वापादनं" इत्यग्रे वक्ष्याम इत्यर्थः ॥

उपासनासाध्यस्यानित्यत्वे परोक्तं बाधकमाशङ्क्य निषेधति—न चैवमिति। क्रममुक्त्यभिप्रायत्वान्न विरोध इति परिहरति—स एतस्मादिति। "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत" इति प्रक्रान्तस्त्रिमात्रप्रणवेन परब्रह्मोपासकः पूर्ववाक्ये "स सामभिरुन्नीयते ब्रह्मलोकम्" इत्युक्तोऽत्र स इति परामृश्यते। सः एतस्माज्जीवघनात्—हिरण्यगर्भात्परं—कारणं ब्रह्म तस्मादपि परं कारणोत्तीर्णरूपं पुरुषमीक्षत इति श्रुत्यर्थः। "तमेवं

सह मोक्षाभिप्रायत्वादनावृत्तिशब्दस्य । अत एवोपासनासाध्यस्यानित्यत्वे "तमेवं विद्वानमृतः" इत्यादिश्रुतिबाध इति निरस्तम् ; विदेर्ज्ञानार्थत्वेन ततोऽविद्यादिबाधे इह परामृतत्वोपपत्तेः । "तयोर्ध्वमायन्नमृतत्वमेति" इति चाप्लुष्टाविद्याकामकर्माशयस्यैवाभूतसम्प्लवस्थानाभिप्रायत्वात् । तथा च सूत्रम्—"अमृतत्वं चानुपोष्य" इति । उक्तविधया क्रममुक्त्यभिप्रायत्वाद्वा । आत्मोपासनाकर्मणोऽक्षयत्ववचनं चेतरकर्मवैलक्षण्यादाभूतसम्प्लवस्थानफलत्वात् । परामृतहेतुसाक्षात्कारफलत्वाद्वा ॥

## परमते मुक्तौ तारतम्यप्रसक्तिः

अपि चैवमुपासिक्रियायाः साक्षात्कारावधेरेव मुक्तिसाधनरूपत्वेऽपि कालदैर्घ्यादिकृतं तारतम्यं न निन्होतुं

### रत्नतूलिका

विद्वान्" इत्यत्राप्युपासनापरत्वमङ्गीकृत्यापि पूर्वोक्तं परिहारमतिदिशति—अत एवेति । क्रममुक्त्यभिप्रायत्वादेवेत्यर्थः । वास्तवं परिहारमाह—विदेरिति । इहेति । उपासनाप्रतिपादने तस्य देशान्तरे मोक्षसाधनत्वादिहामृतो भवतीत्युक्त्यनुपपत्तिरिति भावः । अप्लुष्टेति । अदग्धाविद्याकामकर्मवासनस्येत्यर्थः । उक्तेऽर्थे सूत्रं संवादयति—तथा चेति । "समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य" इति सूत्रे अपेक्षितांशः पठितः । इदमुपासनासाध्यममृतत्वं अविद्यादिकमदग्ध्वैव । तथा चापेक्षिकमिति तदर्थः । यदुक्तं "स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते" इत्युपासनाकर्मणोऽक्षयत्ववचनविरोध इति तत्परिहरति—आत्मोपासनेति । परामृतेति । साक्षात्कारहेतुत्वं च पूर्वोक्तरीत्या ब्रह्मलोकप्राप्तिद्वारा वा अत्रैव चित्तवशीकारद्वारा वोपपद्यत इति भावः ॥

शक्यमिति मुक्तितारतम्यप्रसङ्गः। न च साधनरूपे तारतम्याभावः; आद्यप्रत्ययप्रभृति साक्षात्काररूपतापरिपाकावधेरेव साधनत्वात्। न हि साक्षात्काररूपान्तिमप्रत्ययोऽन्त्यप्रत्यय एव वा मुक्तिहेतुः; तावन्मात्रस्योपासनाशब्दार्थत्वानुपपत्तेः। क्रियाबाहुल्ये च फलभूम्नोऽन्यत्र क्लृप्तत्वात् ॥

परमते ब्रह्ममीमांसायाः धर्ममीमांसातः पृथगनारम्भणीयत्वम्

अपि चोपासनाविधिरपि धर्ममीमांसयैव मीमांसित इति ब्रह्ममीमांसानारम्भप्रसङ्गः। श्रुत्यादिभिरेव *मन्त्रन्यायेन ब्रह्मणि

रत्नतूलिका

साक्षात्कारपरिपाकावधेरेव साधनरूपत्वात्तद्रूपे तारतम्यं नास्ति, किं तु तादृशसाधनसम्पादनार्थमेव कस्यचिदकुशलस्य दीर्घकालमुपासनानुष्ठानमित्युक्तमाशङ्क्य निषेधति—न च साधनरूप इति। भवेदेवं यदि साक्षात्काररूपान्त्यप्रत्यय एव साधनं स्यात्, तदा तत्सम्पादनं कस्याचिद्दीर्घकालानुष्ठानेन कस्याचित्स्वल्पकालानु[1]ष्ठानेनेति न तारतम्यम्, आद्यप्रत्ययप्रभृति साक्षात्काररूपतापरिपाकावधेरेव साधनत्वे तु साधने तारतम्यमस्त्येवेति परिहरति—आद्यप्रत्ययप्रभृतीति। अन्त्यप्रत्यय एव वेति पक्षान्तरव्यावृत्त्यर्थः। दृष्टान्तार्थं वा। तावन्मात्रस्यैवोपासनत्वे ध्रुवानुस्मृतित्वरतित्वप्रीतित्वभक्तित्वाद्यनेकरूपविशिष्टमुपासनं विधीयत इति भवदङ्गीकारविरोधः स्यादिति भावः। एवं साधनरूपस्यावयवबहुत्वमुपपाद्य तद्बहुत्वकृतं फलबाहुल्यं दर्शयति—क्रियाबाहुल्ये चेति। अन्यत्र अग्निहोत्रदर्शपूर्णमासादौ पूर्वतन्त्रे क्लृप्तमित्यर्थः ॥

श्रुत्यादिभिरिति। आत्मब्रह्मादिश्रुत्या ईक्षणादिलिङ्गैश्चेत्यर्थः।

---

* "तदर्थशास्त्रात्" (जै-सू-१-२-३१) इत्यादिना मन्त्राणामर्थपरत्वमुपपादितं तन्न्यायेनेत्यर्थः।

[1] ष्ठानेनैव—कुं.

विनियुज्यमाने वेदान्ते तद्विषयस्य ब्रह्मणोऽलौकिकस्यापि यूपाहवनीयन्यायेन सिद्ध्युपपत्तेः। लाघवानुगृहीतकार्यत्वाद्यनुमानस्य सार्वज्ञाद्युपहारसमर्थस्यानुग्राहकत्वात्। यदि हि ब्रह्मात्मतादात्म्यमुपेयेत, तर्ह्येव प्रत्यक्षादिविरोधशङ्कापरिहारेण विचारशास्त्रमर्थवत्स्यात्। न च परेण तदुपेयते। न च सिद्धे ब्रह्मणि समन्वयप्रतिपादनाय विचारारम्भः; वेदान्तस्य

रत्नतूलिका

नन्वथाप्यलौकिकस्य तैः प्रतिपादनं तदपेक्षितन्यायव्युत्पादनाधीनमित्यतः शास्त्रारम्भोऽर्थवानित्यत आह—तद्विषयस्येति। तथा चालौकिकयूपादिपदार्थसिध्यर्थैस्तत्रत्यैर्न्यायैरेव ब्रह्मपदार्थस्यापि सिद्धेर्न पृथक् तद्व्युत्पादनापेक्षेति भावः। अनुग्राहकत्वादिति। तथा च यूपाहवनीयादयः पदार्था असत्यप्यनुग्राहके श्रुत्या सिध्यन्ति, किं वक्तव्यं स्वयमेव सर्वज्ञसर्वशक्तेश्वरसाधनसमर्थे अनुमानेऽनुग्राहके सतीति भावः। अथवा सिद्धान्तवैषम्यं द्योतयितुं भवत्पक्षे श्रुतेर्न मानान्तरविरोधः; अपि तु तैरनुग्रह एवेत्याह—लाघवेति। यत्प्रतिपादनाय परमते अनुग्रह उक्तस्तद्दर्शयति—यदि हीति। ब्रह्मण आत्मनो-जीवस्य च तादात्म्यमैक्यमुपेयेतेत्यर्थः। ननु वेदान्तानां ब्रह्मणि समन्वये सिद्धे तैरलौकिकब्रह्मसिद्धये न न्यायान्तरापेक्षा, सिद्धे ब्रह्मणि समन्वय एव न्यायान्तरनिरूपणमपेक्षत इति तदर्थतया शास्त्रारम्भ इत्याशङ्क्य निषेधति—न च सिद्धे ब्रह्मणीति। वेदान्तानां विधितात्पर्यमभ्युपगच्छतस्तव पृथग्ब्रह्मणि समन्वयाङ्गीकारः परस्परव्याहत इत्याह—वेदान्तस्येति। अस्माकं तु श्रवणादिविध्यङ्गीकारेऽपि तेषां सिद्धब्रह्मप्रतिपत्त्यर्थतया स्वतन्त्रविधित्वाभावान्न तेषु वेदान्तानां तात्पर्यमिति समन्वयसिद्धिरिति भावः। अस्तु वा

ज्ञानविधितात्पर्योपगमेन ब्रह्मणि पृथक्समन्वयायोगात्। लोके सिद्धेऽपि शब्दव्युत्पत्तेरुपगमाच्च। न हि वेदे सिद्धशक्तिरन्येन निरस्यते; जैमिनेरर्थवादनयेऽपि वेदान्तकार्यपरत्वविवक्षाया भवतानभ्युपगमात्। अन्यथार्थविरोधे तव शास्त्रैक्यानुपपत्तेः। न हि प्रभाकरस्येव लोकव्युत्पत्तिविरुद्धकार्यार्थत्वशङ्कोन्मेषः सूत्रकारस्य शक्यशङ्कः, न वार्वाचीनप्राभाकरपक्षस्यैव प्रतिक्षेपः प्राचीनस्य महर्षेः सूत्रकारस्य युक्तः कल्पयितुम्॥

### परमते उपनिषदां प्रधानादिपरत्वनिरासायापि पृथक् शास्त्रारम्भानावश्यकता

अथोपनिषदां प्रधानाद्यर्थान्तरपरत्वव्युदासेन ब्रह्मसमन्वयाद्युपपादनाय शास्त्रारम्भः। न स्वप्रयोजनाय। सूत्रप्रणयन-

### रत्नतूलिका

समन्वयसिद्धिः, तथापि न तादर्थ्येन पृथङ्न्यायान्तरव्युत्पादनं कर्तव्यमित्याह—**लोके सिद्धेऽपीति**। पुत्रस्ते जात इत्यादाविति भावः। लोकव्युत्पत्तेर्वेदेऽपवादः किं "आम्नायस्य क्रियार्थत्वात्", "विधिना त्वेकवाक्यत्वात्" इत्यादिक्रियापरत्वप्रतिपादकजैमिनिवाक्यमूलः? किं वा बादरायणस्य स्वोत्प्रेक्षामूलः? अथ वा प्रभाकरवाक्यमूल इति विकल्प्याऽऽद्यं दूषयति—**जैमिनेरिति**। **अनभ्युपगमादिति**। भवता तत्रोत्सर्गापवादन्यायाङ्गीकारादिति भावः। द्वितीयं निषेधति—**न हीति**। महर्षेर्वस्तुयाथात्म्यदर्शित्वादिति भावः। तृतीयं निरस्यति—**न वेति**॥

ननु सिद्धे समन्वयप्रतिपादनमात्रं न शास्त्रारम्भप्रयोजनम्, अपि तु प्रधानाद्यर्थान्तरसमन्वयनिरासश्चेत्याशङ्कते—**अथेति**। किमर्थान्तरपरत्वाशङ्का स्वस्य सूत्रकृतः? किं वा परस्येति विकल्प्य नाद्य इत्याह—**न स्वप्रयोजनायेति**। स्वज्ञानाय स्वेन वाक्यस्याप्रयोज्यत्वादित्यर्थः।

वैयर्थ्यात्। परस्य तवाधीतवेदमात्रस्य विचारप्रवृत्तौ शास्त्रान्तरावसराभावेन प्रधानाद्यर्थान्तरशङ्कानवकाशात्। न चौपनिषदैरेव सदादिपदैः प्रधानाद्यर्थान्तरोपस्थितिसम्भवः; तस्यालौकिकत्वेन व्युत्पत्त्यसम्भवात्। अनुपस्थितमसम्भावितं चोपस्थाप्य तन्निरासः सूत्रकारस्य श्रममात्रफलः स्यात्; अधीतमात्रवेदान्तावगतब्रह्मोपासनोपपत्तेः। यथाश्रुतगुणविशिष्टवस्तूपासनासाध्ये फले वस्तुनः प्रधानादिविवेकवैफल्यात्॥

## रत्नतूलिका

द्वितीयेऽपि किं शास्त्रान्तरात्तदाशङ्का? किं वा सदादिपदैरिति विकल्प्याद्यं दूषयति—**परस्य तवेति**। [1]अनवसरव्यवधिसापेक्षविवेकादेः पूर्ववृत्तत्वव्युदासायायेत्यनेनानन्तर्यं प्रतिपाद्यत इति वदत इति भावः। द्वितीयमाशङ्क्य निषेधति—**न चौपनिषदैरिति**। **तस्येति**। प्रधानस्येत्यर्थः। ननु जगत् संहतोपादानकम्, कार्यत्वात्, घटादिवदित्याद्यनुमानैस्तदुपस्थितिरिति तत्र सदादिपदानां व्युत्पत्तिसम्भव इत्यत आह—**अनुपस्थितमिति**। अधीतमात्रवेदस्य न स्वरसत एतादृशोपस्थितिरिति भावः। **श्रममात्रेति**। न तूपासनायां कश्चिदुपयोग इति मात्रशब्दार्थः। तदेवोपपादयति—**अधीतमात्रेति**। ननु सर्वव्यावृत्ततया ब्रह्मस्वरूपज्ञानाभावे उपासनमेव न सिध्यति, तस्य वस्तुयाथात्म्यज्ञानसाध्यत्वात्, अतः सम्भावितमर्थमुपस्थाप्य सूत्रकारेण तद्व्यावृत्तिर्वक्तव्येत्यत आह—**यथाश्रुतेति**। उपासनानिर्वृत्तौ श्रुतमात्रमेवालम्, न तु तस्य स्वरूपमपि न्यायेन निर्धारणीयमिति भावः॥

ननु सदादिपदैरलौकिकस्य प्रधानस्योपस्थित्यभावेऽप्याकाशप्राणादिशब्दैरर्थान्तरोपस्थितिः सम्भवतीति तन्निरासाय शास्त्रारम्भ

---

[1] अनवसरस्य विधिसापेक्षविवेकादेः—कुं.

परमते ब्रह्ममीमांसाया आकाशादिकतिपयपदार्थशङ्कापरिहार-
कत्वेऽपि शेषवैयर्थ्यम्

यद्यप्याकाशादिपदस्यार्थान्तरशङ्कासम्भवः, तथापि तावन्मात्रविचार उपयुज्यताम्। एतेनोपासनाविकल्पसमुच्चयादिकमपूर्वमिह व्युत्पादनीयमिति निरस्तम्; तथापि शेषविचारवैयर्थ्यापरिहारात्॥

निदिध्यासनस्य स्वतन्त्रविधित्वे सहकार्यन्तरविध्यनुपपत्तिः

अपि चैवं निदिध्यासनविधेः स्वप्रधानत्वे "सहकार्यन्तरविधिः पक्षेण तृतीयम्" इति सूत्रं पाण्डित्यबाल्यशब्दितश्रवणमननापेक्षया तृतीयं यतो न पाण्डित्यमेव, अतो

रत्नतूलिका

इत्याशङ्क्ते—यद्यपीति। तावन्मात्रेति। आकाशादिशब्दमात्रेत्यर्थः। तथा च "आकाशस्तल्लिङ्गात्", "अत एव प्राणः" इत्यादिविचारमात्रोपयोगेऽपि शेषस्य वैयर्थ्यमिति भावः॥

अपि च सूत्रकारः "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्, बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः, अमौनं च मौनं च निर्विद्याथ ब्राह्मणः" इति बृहदारण्यकश्रुतौ पाण्डित्यशब्देन श्रवणं बाल्यशब्देन मननं च विधीयते। मौनशब्देन च तदपेक्षया तृतीयं निदिध्यासनं श्रवणस्य सहकार्यन्तरं विधीयते, न तु पाण्डित्यशब्दोक्तमेवानूद्यत इति वक्ष्यति, तन्निदिध्यासनस्य स्वतन्त्रविधित्वाङ्गीकारे विरुध्यत इत्याह—अपि चैवमिति। सूत्रे तृतीयशब्दापेक्षितमवधिं निर्दिशति—पाण्डित्यबाल्येति। तृतीयत्वोक्तेः फलमाह—यतो न पाण्डित्यमेवेति। तथा च मौनशब्देन पाण्डित्यमेवानूद्यत इति पूर्वपक्षनिरासः। तेन च मौनस्यापूर्वत्वाद्विधेयत्वमिति भावः।

**ब्रह्मसाक्षात्कारे वेदान्तवाक्यविचारस्य सहकार्यन्तरं मुनिशब्दाभिधेयं निदिध्यासनं विधीयते, पक्षेण प्राप्तमपि भेददर्शनप्राबल्यादप्राप्तमपि कथं न स्यादिति नियम्यत इत्येवमर्थकं विरुध्येत। यथा च साधनान्तराप्राप्तावपि नियमस्तथा श्रवणनियमे दर्शितमस्माभिः ॥**

## सहकार्यन्तरविधिसूत्रस्य परकीयाभिप्रायानुवादस्तन्निरासश्च

**कश्चित्पुनराह—श्रवणमननाभ्यामन्यदेव पाण्डित्यादित्रयमुपासनाया विद्यायाः सहकार्यन्तरं विधीयते। तत्र च मौनं श्रवण-**

### रत्नतूलिका

सहकार्यन्तरमित्यत्रापेक्षितसम्बन्धिनं निर्दिशति—**वेदान्तवाक्येति**। विचारस्येदं फलोपकार्यङ्गमिति दर्शयति—**ब्रह्मसाक्षात्कार इति**। ननु तद्वत इत्यनेन श्रवणमननाधीनानुभववतो विवक्षितत्वात्तस्य चानुभूते सुखरूपे वस्तुनि स्मृतिसन्ततिरूपस्य ध्यानस्य प्राप्तत्वात् किं विधिनेति शङ्काव्युदासाय पक्षेणेत्यमुमंशं व्याचष्टे—**पक्षेणेति**। **नियम्यत इति**। तथा चाप्राप्तांशपरिपूरणार्थत्वान्न वैयर्थ्यमिति भावः। ननु निदिध्यासनस्येव साक्षात्कारे साधनान्तरस्याप्राप्तत्वात्कथं तन्निवृत्तिफलको नियमविधिरित्यत आह—**यथा चेति**। अप्राप्तांशपरिपूरणे नियमविधेर्व्यापारः, अर्थादितरनिवृत्तिः। इतरस्य च विरोधमात्रमपेक्षितम्, न तु साधनत्वमपीति श्रवणविधावुक्तमित्यर्थः ॥

परस्तु यथा "यज्ञेन दानेन" इत्यादिना "शान्तो दान्तः" इत्यादिना च यज्ञादिकं शमादिकं च विद्यासहकारित्वेन विधीयते, यथा वा श्रवणं मननं चार्थप्राप्तं गृह्यते, तथा "तस्माद्ब्राह्मणः" इत्यादिना पाण्डित्यं बाल्यं मौनमिति त्रयं विद्यायाः सहकार्यन्तरं विधीयते, न श्रवणादिकमित्याह। तत्र पाण्डित्यस्वरूपं वदन् ततो विविक्तं विधेयमौनस्वरूपं दर्शयति—**तत्र च मौनमिति**। श्रवणमननाभ्या-

मननावगतेश्वरभक्तिविवृद्धसत्त्वोपनतात्ततोऽतिशयितपरिशुद्धपरि-
पूर्णब्रह्मवेदनरूपात्पाण्डित्यादन्यदालम्बनसंशीलनरूपं बाल्य-
पाण्डित्यापेक्षया तृतीयं सहकार्यन्तरं विधीयते। मुनिशब्द-
स्याश्रमविशेष इव पक्षेण ज्ञानविशेषवति व्यासादौ "मुनीना-
मप्यहं व्यासः" इत्यादिप्रयोगदर्शनादित्येवमर्थके सूत्रे न
श्रवणादेः प्रसङ्ग इति तन्न; "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य
बाल्येन तिष्ठासेत्, बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः,

रत्नतूलिका

मीश्वरस्वरूपेऽवगते तत्र भक्तिर्जायते, तया च सत्त्वस्य विवृद्धिर्भवति,
तद्विवृध्या च श्रवणमननलब्धज्ञानापेक्षया अतिशयितमूहापोहकुशलं
नवनवोन्मेषशालि श्रुतमतानुकूल्येन सर्ववेदान्ततात्पर्यप्रतिष्ठापनरूपं
परिशुद्धपरिपूर्णब्रह्मवेदनमुपजायते, एतदेव पाण्डित्यम्, तस्मादन्य-
दालम्बनस्य—उपासनालम्बनस्य भगवद्विग्रहादेः संशीलनं—पुनः पुनः
संशीलनात्मकं मौनमित्यर्थः। उक्ते मौने अपेक्षितावधिनिर्देशपूर्वकं
सूत्रोक्तं तृतीयत्वं दर्शयति—बाल्यपाण्डित्यापेक्षयेति। तत्र बाल्यं
नाम दम्भदर्पादिराहित्येनाऽऽभिजात्यादिस्वमहिमानाविष्करणं विवक्षि-
तम्। सूत्रे सहकार्यन्तरविधिरित्यंशं व्याचष्टे—सहकार्यन्तरमिति।
मौनस्य विद्यासहकारित्वं चित्तैकाग्र्यसम्पादकत्वेन। यस्य ह्युपासना-
कालव्यतिरिक्तकालेष्वपि गच्छतस्तिष्ठतः शयानस्य वोपास्यविषये चित्तं
भवति, तस्यैवोपासनाकालेऽपि तद्विषयचित्तैकाग्र्याद्विद्या दृढा भवति,
नान्यस्येति भावः। पक्षेणेत्यमुमंशं व्याचष्टे—मुनिशब्दस्येति।
"गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ्यम्" इत्यत्रोत्तमाश्रमे प्रयोग
इति भावः। न श्रवणादेरिति। तथा च सूत्रकारेण निदिध्यासनस्य
श्रवणसहकारित्वस्यानुक्तत्वात्तस्य स्वतन्त्रविधौ न तद्विरोध इति भावः।

अमौनं च मौनं च निर्विद्याथ ब्राह्मणः" इत्यत्र पाण्डित्यादिशब्दैः श्रवणादेरेवाभिधेयत्वात् । "आत्मा वा अरे द्रष्टव्यः" इत्यादि-वाक्यच्छायानुकारेण त्रिसाधनफलप्रत्यभिज्ञानात् । तथा हि— ब्रह्म जानातीति ब्राह्मणः,

"य एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया ।"

इत्यादिस्मरणात् । तस्माद्ब्राह्मण इति द्रष्टव्यपदार्थः प्रति-सन्धीयते । पण्डा—शास्त्रविज्ञानमस्य सञ्जातमिति पण्डितः, तस्येदं कर्म पाण्डित्यमित्यनेन वाक्यार्थज्ञानावसायि श्रवणम्, बाल्यशब्देन च दम्भदर्पादिवैधुर्यपरेण मननं लक्ष्यते, विना मननमप्रतिष्ठितश्रौतविज्ञानो हि दम्भदर्पादिना पूर्यते, "अनू-चानमानी स्तब्ध एयाय" इत्यादिलिङ्गदर्शनात् । "अथ

## रत्नतूलिका

कथं श्रवणादेरेवाभिधानमित्यतो हेतुमाह—आत्मा वा इति । नन्वस्मिन्वाक्ये दर्शनश्रवणमनननिदिध्यासनादिप्रतिपादकशब्दाभावात् कथं तच्छायानुकारित्वम् ? कथं वा त्रिसाधनफलप्रत्यभिज्ञान-मित्यतस्तत्तत्पदानां तं तमर्थं दर्शयति—तथा हीति । एतादृशार्थ-विवक्षायां मानमाह—य एवेति । सत्यात् ब्रह्मण इत्यर्थः । अपायो विश्लेषः, स चाज्ञानादिति तदविश्लेषस्तदधिगम इति भावः । शास्त्रार्थज्ञानवत इदं श्रवणं कर्मेत्यत्र सम्बन्धमुपपादयति—वाक्यार्थ-ज्ञानावसायीति । तदीयज्ञानसाधनत्वं सम्बन्ध इत्यर्थः । वयोवस्था-विशेषवाचित्वानुपपत्तेराह—दम्भदर्पादीति । लक्षणासिद्धये सम्बन्धं दर्शयति—विना मननमिति । तथा च मननस्य दम्भदर्पादि-वैधुर्यस्य च प्रयोज्यप्रयोजकभावः सम्बन्ध इति भावः । अशब्दार्थस्य

मुनिः" इति परिशेषात् मननान्मुनिरिति व्युत्पत्त्या ज्ञानातिशयवति व्यासादौ प्रयोगदर्शनाच्च निदिध्यासनमेव। तत्र हि सर्वेन्द्रियव्यापारोपरमरूपं मौनमुपपद्यते। "अथ ब्राह्मणः" इति तदेव फलमनुकीर्त्यते स्तवनाय। अन्यथा श्रवणमननपरिशुद्धावगते वस्तुनि भक्तिपर्यन्तध्रुवानुस्मृतिरूपनिदिध्यासनातिरिक्तस्य पाण्डित्यस्य भक्तिनिष्पाद्यस्यालम्बनसंशीलनस्य वा दुर्निर्वचनत्वात्सूत्रस्य निर्विषयत्वप्रसङ्गः॥

**परमते भक्तेर्निदिध्यासनपरिपाकात्मतामुक्त्वा तत्साधनपाण्डित्यसाधनतोक्त्या स्वोक्तिव्याहतिः**

"भक्त्या त्वनन्यया शक्य अहं.........प्रवेष्टुं च"

इति श्रवणादिसाध्यनिदिध्यासनपरिपाकात्मा भक्तिः ब्रह्मप्राप्ति-

## रत्नतूलिका

कथं परिशेषात्सिद्धिरित्यत आह—मननादिति। तथा च निदिध्यासनं कुर्वति मननमवश्यमिद्धमिति भावः। अथ वा सर्वेन्द्रियव्यापारोपरमो मुनिशब्दप्रवृत्तौ निमित्तम्। अतस्तत्सहचरितं निदिध्यासनं तच्छब्देन प्रतिपाद्यत इति पक्षान्तरमाह—तत्र हीति। दुर्निर्वचनत्वादिति। पाण्डित्यादिस्वरूपविवेचने क्रियमाणे ध्रुवानुस्मृतित्वाद्यनेकपर्वोपेतनिदिध्यासनस्यैव नामान्तरम्, न तु ततोऽतिरिक्ततया वक्तुं शक्यमित्यर्थः। सर्ववेदान्तानां तात्पर्यप्रतिष्ठापनं च पाण्डित्यं मननाशिरस्कश्रवणान्नातिरिच्यते। सर्वदा तदेकमनस्कत्वलक्षणमालम्बनसंशीलनं च "युवतीनां यथा यूनि" इत्यादिना प्रतिपादितरत्यात्मकत्वान्नातिवर्तत इति भावः॥

किं च या भक्तिः पूर्वं निदिध्यासनस्यावस्थान्तरं ब्रह्मप्राप्तौ साधनमिति प्रतिपादिता "भक्त्या त्वनन्यया" इत्यादिना, सैव भक्तिरिदानीं निदिध्यासनसाधनभूतपाण्डित्यादिसाधनमिति प्रतिपादयतो व्याघात इत्याह—भक्त्या त्वनन्ययेति। विधेयज्ञानस्वरूप-

साधनमुच्यत इत्युदाहृत्य, तत्साधनपाण्डित्यादिसाधनमिहोच्यते भक्तिरिति व्याहतवचनस्य दासविनेयैरप्युपहास्यत्वात् ॥

### सिद्धान्ते सहकार्यन्तरसूत्रयोजनासौलभ्यम्, परमते तत्र क्लेशप्रदर्शनं च

एवं सति मौनस्य विधेयत्वे, तृतीयशब्दस्य पाण्डित्यादिव्यवच्छेदेनापेक्षितहेतुपरत्वसम्भवे च, सहकार्यन्तरस्य विधिरिति समासादिसामञ्जस्यसम्भवे च, पक्षेण सहकार्यन्तरविधिरित्ये-

### रत्नतूलिका

निर्णयदशायामुदाहृतान्येव वचनानि तदीयभाष्ये अत्रोदाहृतानि। तच्च भगवद्भक्तिकृतसत्त्वविवृद्धिकृतम्। यथोक्तम्—"नाहं वेदैः" इत्यारभ्य "भक्त्या त्वनन्यया शक्यः....ज्ञातुम्" इति। श्रुतिश्च—"यस्य देवे परा भक्तिः", "नायमात्मा प्रवचनेन" इत्यादिकेति। तद्वाक्योदाहरणं च विधेयज्ञानानतिरेकं गमयतीति भावः॥

परमते सूत्रयोजना क्लिष्टेति वक्तुं स्वमते तदभावं दर्शयति—एवं सतीति। श्रवणादिरेव विधीयत इति स्थिते सतीत्यर्थः। पाण्डित्यमेव मुनिरित्यनेनानूद्यते, न तु विधिरिति पूर्वपक्षे तन्निरासाय मौनस्य विधेयत्वं वाच्यम्, तत्र च कुतो विधेयत्वमित्यपेक्षायां तृतीयमित्यनेन हेतुः समर्प्यते, यतः पाण्डित्यबाल्यापेक्षया मौनं तृतीयं, अतः पाण्डित्यापेक्षया अन्यदेव, यतोऽन्यदतः सहकार्यन्तरं विधीयत इति हेतुपरत्वसम्भव इत्यर्थः। चकारो वक्ष्यमाणसमासादिसामञ्जस्यसमुच्चयार्थः। तदेव दर्शयति—सहकार्यन्तरस्येति। आदिपदाद्विधिशब्दसामञ्जस्यपरिग्रहः। एवं तृतीयशब्दसार्थक्यं, समाससामञ्जस्यं, आदिपदेन विधिपदसामञ्जस्यं चोपपाद्य, पदयोजनासामञ्जस्यं च दर्शयति—पक्षेणेति। एवं स्वमते सूत्रयोजनायां क्लेशाभाव-

वान्वयसामञ्जस्ये च, तृतीयं मौनं सहकार्यन्तरं च तद्विधीयत इति विधिश्च सहकार्यन्तरविधिरिति तृतीयशब्दानर्थक्येन विशेषणसमासकल्पनाक्लेशेन विधिरितिशब्दासामञ्जस्येन च, पक्षेण प्रकृष्टमननशीले मुनिशब्दप्रयोगादित्यध्याहारेण च सूत्रयोजना चासङ्गतेति स्वावसरे वक्ष्यामः ॥

सहकार्यन्तरेऽप्राप्ततया विध्युपपत्तिः

न चैवं श्रोतव्यादिसिद्धानुवादित्वे सहकार्यन्तरविधिरिति वाच्यम्; शाखाभेद इवैकशाख्येऽप्युपदेश्यभेदेनाप्राप्तत्वात् ॥

रत्नतूलिका

मुपपाद्य, परमते क्लेशमाह—तृतीयं मौनमिति। तृतीयं मौनं सहकार्यन्तरं च तद्विधेयं चेति तृतीयशब्दस्य स्वरूपसद्विशेषणत्वप्रतिपादनेन वैयर्थ्यं द्योतयति। पाण्डित्यापेक्षया अन्यत्त्वस्य पक्षेण मुनिशब्दस्य प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनरूपहेत्वन्तरेण सिद्धत्वान्न'-स्मन्मत इव सार्थक्यमिति भावः। विधिशब्दासामञ्जस्यं दर्शयन्नेव समासासामञ्जस्यं दर्शयति—सहकार्यन्तरं चेति। सहकार्यन्तरं च तद्विधिश्चेत्यन्वयेन समासासामञ्जस्योक्तिः; विधीयत इति शब्दासामञ्जस्योक्तिरिति विवेकः। तदुच्चारणे विधानस्यैव स्वरसतः प्रतीतेरिति भावः। एवं तात्पर्यत उक्तमसामञ्जस्यत्रयं कण्ठरवेणाह—इति तृतीयेति। परान्वयासामञ्जस्यं दर्शयति—पक्षेण प्रकृष्टेति। स्वावसर इति। सहकार्यन्तरसूत्रव्याख्यानावसर इत्यर्थः ॥

न चैवमिति। श्रोतव्यवाक्यसिद्धत्रिसाधनफलं प्रत्यभिज्ञायत इत्युक्तरीत्येत्यर्थः। शाखाभेद इवेति। यथा अग्निहोत्रादीनां नानाशाखासु विधिः, बोध्यानां तत्तच्छाखाध्यायिनां भेदान्नैकत्र

## श्रवणादिविधौ वाक्यभेदानवकाशः

**न चैवमपि श्रोतव्यादिवाक्यभेदप्रसङ्गः; महावाक्यस्यैकत्वादङ्गविशिष्टाङ्गितात्पर्यकत्वात्, पृथगुपहृतार्थसमावेशने विधिव्यापारागौरवाच्च ॥**

### रत्नतूलिका

प्राप्त्येतरत्रानुवादः, तथैकस्यामपि शाखायां बोध्यभेदेन विधिद्वयमुपपन्नम्। प्राप्त्यप्राप्त्योरेव विधित्वतदभावयोः प्रयोजकत्वेन शाखाभेदाभेदयोरप्रयोजकत्वात्। अत्र पि श्रोतव्यादिवाक्ये मैत्रेयी उपदेश्या, पाण्डित्यादिवाक्ये तु कहोल इति भेदसत्त्वादिति भावः ॥

नन्वेवमपि त्रयाणां श्रवणादीनां विधाने वाक्य[1]भेदप्रसङ्गः, अतो निदिध्यासनमेव विधीयत इति काशकुशावलम्बिनः शङ्कामाशङ्क्य निषेधति—**न चैवमपीति। महावाक्यस्येति।** यथा दर्शपूर्णमासप्रकरणे प्रयाजाद्यनेकविधिसत्त्वेऽपि प्रयोगविधिरूपमहावाक्यस्य न भेदस्तथेहापीति भावः। नन्वैकार्थ्यं विना कथमेकवाक्यत्वमित्यतस्तन्निर्वाहाय तात्पर्यविषयैक्यमाह—**अङ्गविशिष्टाङ्गीति।** तर्हि विधिव्यापारगौरवं स्यादित्यत आह—**पृथगुपहृतेति।** तत्तद्विधिना तस्य तस्येष्टसाधनत्वं बोध्यते, तावन्मात्रेण नानुष्ठानम्; इष्टविशेषाज्ञानात्, तज्ज्ञानं चाधिकारवाक्ये फलवत्त्वेनावगतयागाद्यर्थत्वज्ञानाधीनमिति प्रधानविधेः साङ्गानुष्ठापकत्वम्। तथा चाङ्गविधयस्तेष्विष्टसाधनत्वं बोधयन्ति। तेषां च प्रधानार्थत्वं श्रुत्यादिना सिध्यति। प्रधानविधिस्तु प्रधानस्येष्टसाधनत्वं बोधयित्वाऽङ्गानां [2]स्वविध्यवगतमिष्टसाधनत्वं श्रुत्याद्यवगतं तादर्थ्यं च निर्वहतीति तत्तज्जनकृतकार्य-

---

[1] भेदः, अतः—कुं. [2] स्वस्व—कुं.

परकीयस्वतन्त्रनिदिध्यासनस्याविधेयत्वोपसंहारः

तस्मान्निदिध्यासनमुपासनमेव स्वतन्त्रं मोक्षसाधनं विधीयत इति बालिशभाषितमुपेक्षणीयं विद्वद्भिः ॥

सिद्धान्ते साङ्गश्रवणविध्युपसंहारः

तस्मात्,

द्रष्टव्यपदनिर्दिष्टफलश्रवणगोचरः ।
मननादीतिकर्तव्यः श्रोतव्य इति नो विधिः ॥

---

रत्नतूलिका

मादाय परिबृढस्य सर्वनिर्वोढृत्वव्यपदेशवत्सर्वविशिष्टं प्रधानं प्रयोगविधिर्विधत्त इति व्यपदेशो न तु तस्य वस्तुतो व्यापारगौरवमिति भावः ॥

निदिध्यासनमात्रस्य न विधेयत्वमिति दूषणमुपसंहरति—तस्मादिति ॥

निदिध्यासनस्यैव विधेयत्वमिति पक्षे निरस्ते साङ्गश्रवणविधिरप्रत्यूह इत्यभिप्रेत्य श्लोकरूपेण तमुपसंहरति—तस्मादिति । द्रष्टव्येति ॥

## रत्नतूलिकासहितसिद्धान्तसिद्धाञ्जनप्रथमभागगतोदाहरणानां साकरमकारादिक्रमेणानुक्रमणिका

---

* "उत्पत्तिं प्रलयं चैव" इति वि. पु. 6-5-78 मुद्रितपाठः ।

## ऐ

## ख



## ग

## च

* वाक्यमिदं श्रौतसूत्रार्थानुवादरूपम्।

## ध

* अत्र मुद्रितकोशेषु " नाना वा " इत्येतावदेव सूत्रमुपलभ्यते ।

